पंडित-पुस्तकालय, वाराणसी ।

## किमपि निवेदनीयम् ।

विविधरोगशोकपापतापसमाकुलेऽस्मिन् जगतीतले नास्ति कोऽपि शेमुषीमान् यो संसृतिरूपं दुःखार्णवमेतत्तितीर्षुर्न स्यात् । किन्त्वेतस्य निस्ताराय भगवतो भक्तिमपहाय नास्ति कोऽप्यन्यः पन्थाः । तस्या भक्तेः पुष्टिस्तुष्टिश्च पुराणपरिवृढाच्छ्रीमद्भागवतादेव भवितुमर्हति । इदं पुनरनुभूतप्रायं दृष्टचरं च बहूनां महात्मनां यच्छ्रीमद्भागवतस्याश्रयग्रहणेन परिहृतचाञ्चल्यायाः शम्पाया (विद्युतः) इव भगवदनुकम्पायाः प्रकाशः शनैः शनैरुत्तरोत्तरमुत्कर्षेणान्तराकाशे वितायते । श्रीमद्भागवतमधीयानैर्बहुभिर्जनैर्हापिताऽविद्यामयी भ्रान्तिः । बहुभिरवापिता शाश्वती शान्तिः । यतो भागवतं भगवतो वाङ्मयावतारः । निगमस्य कल्पतरोः फलं श्रुतेः सारश्च भगवान् श्रीकृष्ण एव । तदभिन्नतया भागवतमपि तथा व्यपदिश्यते । फलत्वरूपेणात्र माधुर्यातिरेको विद्यते। माधुर्यं हि फल एवास्वाद्यते न तु पादपे । फलमाधुर्यमपेक्ष्यैव तरोः प्रशस्ताऽऽख्याप्यते । अतो निगमादप्यतिशयसौभाग्यशालि माधुरीधुरीणं नाम श्रीमद्भागवतं महापुराणमिति नात्र मनागपि संशयः । विद्यावतां भागवते परीक्षेति प्रसिद्ध्यैव भागवतस्य विषयगाम्भीर्यमनुमीयते । उपलभ्यन्ते चास्योपरि नानाभाषासु निबद्धा बहुविधा व्याख्याः । देवभाषायां तु भागवतस्योपरि बहुशष्टीकाः सन्ति । परन्तु सर्वासु मूर्धन्यस्थानभाक् श्रीमतः श्रीधरस्वामिनो विरचिता भावार्थदीपिकाभिधा टीका । बहुभिः श्रूयमाणैषा जनश्रुतिरद्यापि कर्णे कर्णे संचरति यच्छ्रीधरस्वामिना कृता श्रीमद्भागवतस्य व्याख्या न स्याच्चेत्तदैतन्महापुराणस्य भावाधिगमनं सर्वथा दुरूहं स्यात् । निजैर्गुणगणैर्धन्येयं व्याख्या स्वीयेन महता महत्त्वेन परं प्रख्याता परितः प्रसृता सर्वतः समादृता च बहुषु विद्वन्मनःसु स्थानं लब्ध्वा चकास्ति । श्रूयते चास्या विषये विद्वद्भिरितिहासविशेषः । यदा भगवता श्रीधरेणैषा टीका कृता, तदैतामवलोक्य बहुभिर्विद्वद्भिर्विविधाष्टीकाः कृताः । तदा विद्वत्सु एष विवादः समुपस्थितः, यदेषु का टीका मान्या स्यात् । तदा श्रीधरेणोक्तम्—सर्वाष्टीका भगवतो जगन्नाथस्य मन्दिरे स्थापिताः स्युः । यां भगवान् स्वीकुर्यात् सैव माननीया भवेत् । सर्वैस्तथैव विहितम् । प्रातरुद्घाटितकपाटे मन्दिरे लोकैर्दृष्टम्, यदन्याः सर्वाष्टीका मन्दिरस्य कोणे निक्षिप्ता आसन्, किन्तु श्रीधरस्वामिकृतेयं टीका भगवतः क्रोडे लब्धासना आसीत् । तत एवैषा सुधीषु सम्मानिता समादृता च बभूव। सा चेयं स्वाध्यायरसिकानां पाठकमहानुभावानां सम्मुखे समुल्लसति 'श्रीमद्भागवत श्रीधरी टीका'। यद्यप्यन्यत्रापि नैकविधानि संस्करणानि प्राकाश्यं नीतानि श्रीधरीटीकासहितस्य श्रीमद्भागवतस्य, तथापीह यद्वैलक्षण्यं तदवधारयन्तु सुधियः । जानन्त्येव सुकृतिनो विद्वांसः, यत्प्राचुर्येणोपलभ्यमानैः

पाठान्तरैर्विभिन्नटीकाकृद्भिः संशोधकैश्च प्राचीनतमशुद्धपाठावधारणं महद्दुष्करं जातम् । बहुषु पाठेषु को हि ग्रन्थकृदभिमत इति निश्चयं विना नैकविधा भ्रान्तिरायाति । तन्निश्चयाय प्रस्तुतेऽस्मिन् संस्करणे विद्यार्णवेत्युपाधिमता पं० युगलकिशोरद्विवेदिमहोदयेन, पंडितवर्य नारायणशास्त्रिणा, मिश्रोपाख्य पं० विन्ध्येश्वरीप्रसाद साहित्याचार्येण तथान्यैश्च बहुभिर्विद्वद्भिः परस्परं मिलित्वा प्राचीनान्यर्वाचीनानि हस्तलिखितानि मुद्रितानि च बहूनि पुस्तकानि दृष्ट्वा शुद्धं प्राचीनतमं पाठं समावेशयितुं प्रयासो विहितः । उपर्युक्तानां महानुभावानामुपकारराशिं वयं शिरसा वहामः । प्रयत्नेऽस्मिन् कियती सफलता समासादिताऽस्माभिरिति भवद्विधाः पुण्यश्लोका बुधा एव निर्णेष्यन्ति । वयं त्वेतावदेव कथयामः यत्प्रयासेनानेन श्रीमद्भागवतास्वादरसिकानां सुधियां मनागपि सन्तोषश्चेत्स्यात्तदा स्वपरिश्रमस्य व्ययस्य च साफल्यमेव मंस्यामहे । किमधिकं विज्ञेषु ।

पण्डित-पुस्तकालय<br>काशी<br>देवोत्थायिनी एकादशी २०१६

विनयावनतः<br>**पाण्डेय रामतेज शास्त्री ।**

# श्रीमद्भागवतसप्ताहपारायणप्रमाणम्

आद्ये हिरण्याक्षवधं द्वितीये भरतावधि ॥ तृतीये त्वब्धिमथनं चतुर्थे कृष्णजन्म च ॥ १ ॥ पंचमे रुक्मिण्युद्वाहः षष्ठे चोद्धववादकम् ॥ सप्तमेऽह्नि समाप्तिः स्यात्सप्ताहं मुनिरब्रवीत् ॥ २ ॥ अथ प्रकारान्तरेण कौशिकीसंहितायाम्—मनुकर्दमसंवादपर्यन्तं प्रथमेऽहनि ॥ ५० अध्यायाः ॥ ऋषभध्यानपर्यन्तं द्वितीये दिवसे वदेत् ॥ ४९ अध्यायाः ॥ तृतीये दिवसे कुर्यात्सप्तमस्कन्धपूरणम् ॥ ५४ अध्यायाः ॥ कृष्णाविर्भावपर्यन्तं चतुर्थेऽहनि वाचयेत् ॥ ५१ अध्यायाः ॥ रुक्मिण्युद्वाहपर्यन्तं पंचमेऽह्नि वदेत्सुधीः ॥ ५१ अध्यायाः ॥ श्रीहंसाख्यानपर्यन्तं षष्ठेऽह्नि वाचयेद्ध्रुवम् ॥ ५० अध्यायाः ॥ सप्तमे दिवसे कुर्याच्छ्रीभागवतपूरणम् ॥ ३१ अध्यायाः ॥ इति ॥

# श्रीमद्भागवतमहापुराणस्थविषयाणामनुक्रमणिका ।


| अध्याये | विषयाः | पत्रे |
|---|---|---|
| | **माहात्म्ये** | |
| | [ पद्मपुराणान्तर्गते ] | |
| १ | नारदसनकादिसमागमः नारदकर्तृकं भक्तिज्ञानवैराग्यवृत्तान्तनिवेदनं च | २ |
| २ | भक्तेः क्लेशनिवृत्तये नारदस्योद्योगः | २ |
| ३ | सनकादिमुखाच्छ्रीमद्भागवतश्रवणेन भक्तेस्तुष्टिर्ज्ञानवैराग्ययोः पुष्टिश्च | ३ |
| ४ | सप्ताहकथायां भगवतः प्रादुर्भावः गोकर्णोपाख्यानारम्भश्च | ४ |
| ५ | धुन्धुकारिणो दुर्मृत्युनिमित्तकप्रेतत्वप्राप्तिवर्णनं ततो गोकर्णानुग्रहेणोद्धारश्च | ५ |
| ६ | श्रीमद्भागवतसप्ताहपारायणविधिः | ६ |
| | **प्रथमस्कन्धे** | |
| १ | नैमिषक्षेत्रे श्रीमद्भागवतविषये सूतं प्रति शौनकादिमुनीनां प्रश्नः | १ |
| २ | सूतप्रतिवचनम्, भगवत्कथायाः श्रवणकीर्तनयोर्निःश्रेयसकरत्वं भगवद्भक्तेर्माहात्म्यवर्णनं च | ४ |
| ३ | भगवतश्चतुर्विंशत्यवताराणां संक्षेपतो वर्णनम् | ५ |
| ४ | महर्षेर्व्यासस्यापरितोषः, तदाश्रमे देवर्षिनारदस्यागमनं च | ७ |
| ५ | नारदव्याससंवादः, भगवद्गुणकर्मवर्णनस्य महत्त्वं देवर्षिनारदकर्तृकं स्वकीयपूर्वजन्मवृत्तान्तकथनं च | ९ |
| ६ | पूर्वजन्मवृत्तान्तशेषांशः, नारदस्य भगवदाराधनपूर्वकं ब्रह्मणः सकाशाज्जन्मग्रहणम् | ११ |
| ७ | नारदोपदेशेन व्यासद्वारा श्रीमद्भागवतारम्भः, तत्र परीक्षिज्जन्मप्रस्तावेऽश्वत्थाम्ना सुप्तानां द्रौपदीसुतानां वधः, अश्वत्थाम्नः पराभवश्च | १३ |
| ८ | उत्तरागर्भे द्रौण्यस्त्रतः परीक्षितो रक्षणम्, कुन्तीकृता श्रीकृष्णस्तुतिः, युधिष्ठिरानुतापश्च | १५ |
| ९ | युधिष्ठिरादीनां भीष्मसमीपे गमनम्, तत्र विविधान् धर्मानुपदिश्य श्रीकृष्णस्तवनपूर्वकं भीष्मस्य महाप्रस्थानं च | १७ |
| १० | भगवतः श्रीकृष्णस्य द्वारकागमनम् | १९ |
| ११ | द्वारकावासिभिः कृतं भगवतोऽभिनन्दनं पुरप्रवेशवर्णनं च | २१ |
| १२ | परीक्षितो जन्मोत्सवः | २३ |
| १३ | विदुरोपदेशेन गान्धार्या सह धृतराष्ट्रस्य वनाय प्रस्थानम् | २४ |
| १४ | अपशकुनदर्शनेन युधिष्ठिरस्य चिन्ता, द्वारकातोऽर्जुनस्यागमनं च | २६ |
| १५ | अर्जुनाद्यदुकुलसंहारं भगवतस्तिरोधानं च श्रुत्वा पाण्डवानां हिमालयदिशि प्रयाणम् | २८ |
| १६ | परीक्षितो राज्यलाभः, दिग्विजयः, भूमिधर्मसंवादश्रवणं च | ३० |
| १७ | परीक्षिद्धर्मसंवादः, कलिनिग्रहणं च | ३२ |
| १८ | परीक्षिते मुनिकुमारशापः | ३४ |
| १९ | परीक्षितो गङ्गातटे प्रायोपवेशनम्, ऋषिसमागमः, शुकागमनम्, राज्ञः प्रश्नश्च | ३६ |
| | **द्वितीयस्कन्धे** | |
| १ | शुकप्रवचनम्—तत्रादौ ध्यानविधिः, भगवतो विराड्रूपस्य वर्णनं च | १ |
| २ | योगिनां योगधारणयोत्क्रमणप्रकारस्य वर्णनं सद्योमुक्तिक्रममुक्त्योर्निरूपणं च | २ |

| अध्याये | विषयाः | पत्रे |
|---|---|---|
| ३ | नानाविधकामनासिद्धये नानादेवानामुपासनम्, शौनकप्रश्नः, भगवत्सेवापरायणेन्द्रियाणां प्रशंसनं च | ५ |
| ४ | सूतोक्तिः राज्ञः सृष्टिविषयकः प्रश्नः शुकस्य मङ्गलाचरणपूर्वकं कथारम्भश्च | ६ |
| ५ | ब्रह्माणं प्रति नारदप्रश्नः, ब्रह्मोक्तिः, तत्त्वानामुत्पत्तिः ब्रह्माण्डनिर्माणवर्णनं च | ७ |
| ६ | पुरुषसूक्तार्थेन भगवतो विराट्स्वरूपस्य वर्णनम् | ८ |
| ७ | वराहावतारादारभ्य श्रीकृष्णावतारपर्यन्तं संक्षेपतोऽवतारचरितवर्णनम् | ११ |
| ८ | परीक्षितः प्रश्नाः | १५ |
| ९ | शुकस्य प्रतिवचनम्—ब्रह्मणो वैकुण्ठधामदर्शनम्, तत्राभ्यर्थ्यमानेन भगवता ब्रह्मणे चतुःश्लोकिभागवतोपदेशदानम् | १६ |
| १० | पुराणलक्षणानि, विराट्पुरुषविग्रहे इन्द्रियतदधिष्ठातृदेवानामुत्पत्तिश्च | १८ |


## तृतीयस्कन्धे


| अध्याये | विषयाः | पत्रे |
|---|---|---|
| १ | धृतराष्ट्रं परित्यज्य गतस्य विदुरस्योद्धवेन सह समागमः | १ |
| २ | प्रभुविरहविषण्णेनोद्धवेन संक्षेपतः श्रीकृष्णबाललीलावर्णनम् | ३ |
| ३ | मथुरायां द्वारकायां च सम्पन्नानां श्रीकृष्णलीलानां वर्णनं यदूनां प्रभासक्षेत्रगमनं च | ५ |
| ४ | यदुवंशसंहारकथनम्, स्वपदारोहणात् प्रागुद्धवायोपदिष्टस्य ज्ञानस्योपलब्धये विदुरस्य मैत्रेयसन्निधौ गमनम् | ६ |
| ५ | विदुरप्रश्नमनुसृत्य मैत्रेयद्वारा सृष्टिक्रमवर्णनम्, तत्र महदादितत्त्वानामुत्पत्तिः तत्त्वात्मकदेवैः कृतं भगवत्स्तवनं च | ७ |
| ६ | ईशशक्तिप्रवेशेन स्थूलभूतानां जगन्निर्माणशक्तिप्रदर्शनपूर्वकं विराड्विग्रहोत्पत्तिकथनम् | ९ |
| ७ | निर्गुणस्य भगवतो गुणक्रियादिसङ्गः कथमिति प्रश्नस्य मैत्रेयद्वारा समाधानं श्रुत्वा विदुरस्य पुनर्विविधाः प्रश्नाः | ११ |
| ८ | विष्णोर्नाभिकमलादुद्ब्रह्मोत्पत्तिकथनम् | १२ |
| ९ | ब्रह्मकृता भगवत्स्तुतिः भगवतो ब्रह्मणे वरप्रदानं च | १४ |
| १० | दशविधसृष्टिवर्णनम् | १७ |
| ११ | मन्वन्तरादिकालपरिमाणनिरूपणं मनुष्यदेवाद्यायुषो वर्णनं च | १८ |
| १२ | सनकादेः रुद्रस्य मरीच्यादीनां सरस्वत्या वेदादीनां चोत्पत्तिवर्णनम्, ब्रह्मणो देहात् स्वायम्भुवमनोः शतरूपायाश्च जन्म | १९ |
| १३ | ब्रह्मणो नासारन्ध्रादाविर्भूतस्य यज्ञवराहस्य संक्षिप्तचरितम्, ऋषिभिः कृतं भगवतः स्तवनं च | २१ |
| १४ | दितिकश्यपसंवादः, दित्यां कश्यपद्वारा गर्भस्थापनं च | २३ |
| १५ | वैकुण्ठधामवर्णनम्, तत्र गतानां सनकादीनां जयविजयावुद्दिश्य शापदानं भगवतो दर्शनं च | २५ |
| १६ | भगवत्कृतं सनकादीनां सान्त्वनम्, वैकुण्ठाज्जयविजययोः पतनं च | २८ |
| १७ | हिरण्याक्षहिरण्यकशिप्वोर्जन्म, तदानीमुत्पातदर्शनम्, हिरण्याक्षदिग्विजयश्च | ३० |
| १८ | पृथिव्या उद्धारकाले हिरण्याक्षवराहसमागमस्तयोर्युद्धवर्णनं च | ३१ |
| १९ | ब्रह्मणः प्रार्थनामङ्गीकृत्य वराहेण हिरण्याक्षवधः | ३२ |
| २० | ब्रह्मकृतविविधसृष्टिवर्णनम् | ३४ |
| २१ | मनुवंशवर्णनं प्रस्तुत्य कर्दमतपस्या, भगवद्वरप्रदानम्, कर्दमस्याश्रमे मनोरागमनं च | ३६ |
| २२ | मनुकर्दमसंवादः, कर्दमदेवहूतिविवाहः, मनोर्ब्रह्मावर्ताय प्रस्थानं च | ३८ |
| २३ | समाधिस्थितस्य कर्दमस्य देवहूतिकृता परिचर्या, कर्दमद्वारा दिव्यविमाननिर्माणम्, तत्र दम्पत्योर्विहारो नवकन्यानामुत्पत्तिश्च | ३९ |

| अध्याये | विषयाः | पत्रे |
|---|---|---|
| २४ | कपिलावतारः, नवकन्यानां विवाहः, कर्दमकपिलसंवादः, कर्दमस्य भगवत्पदप्राप्तिश्च | ४१ |
| २५ | देवहूतिकपिलसंवादः, कपिलद्वारा भक्तियोगनिरूपणं च | ४३ |
| २६ | महदादितत्त्वानामुत्पत्तिनिरूपणं सद्धर्मवर्णनं च | ४४ |
| २७ | प्रकृतिपुरुषयोर्विवेकद्वारा मोक्षप्राप्तिवर्णनं भक्तियोगेन प्रकृतेस्तिरोधानकथनं च | ४७ |
| २८ | सबीजयोगलक्षणं सगुणस्य भगवतः पृथक् पृथगवयवध्यानवर्णनं च | ४८ |
| २९ | भक्तियोगरहस्यं कालप्रभाववर्णनं च | ५० |
| ३० | देहगेहासक्तपुरुषाणां पापादधोगतिकथनम् | ५२ |
| ३१ | मातुः कुक्षौ प्रविष्टस्य जीवस्य देहप्राप्तिवर्णनं, गर्भस्थजीवकृता भगवत्स्तुतिः, जीवस्य बाल्याद्यवस्थाक्लेशवर्णनं च | ५३ |
| ३२ | धूमार्चिराख्यमार्गद्वयगतानां विभिन्नगतिः, कर्मासक्तचेतसां निन्दा, भक्तियोगस्योत्कर्षवर्णनं च | ५५ |
| ३३ | देवहूतिकृता भगवत्स्तुतिः, कपिलस्य प्रस्थानम्, देवहूतेर्ब्रह्मभावावाप्तिश्च | ५७ |
| | **चतुर्थस्कन्धे** | |
| १ | मनुकन्यानां वंशवर्णनम्, यज्ञदत्तयोरवतारश्च | १ |
| २ | विश्वसृजां सत्रे दक्षशिवयोर्वैरकारणमुभयपक्षतोऽन्योन्यं शापप्रयोगश्च | ३ |
| ३ | पितुर्यज्ञोत्सवं द्रष्टुं जिगमिषन्त्याः सत्याः शिवात्स्वीकृतिप्रार्थनं शिवद्वारा तत्र गमननिषेधश्च | ४ |
| ४ | सत्याः स्वेच्छयैव यज्ञे गमनं तत्र पत्यपमानदर्शनात् पितरं निर्भर्त्स्य योगेन देहत्यागश्च | ५ |
| ५ | वीरभद्रकृतयज्ञविध्वंसो दक्षवधश्च | ७ |
| ६ | ब्रह्मसहितानां देवानां कैलासे गमनं रुद्रस्य स्तवनं च | ८ |
| ७ | रुद्रवरदानं दक्षजीवनं यज्ञसंन्धानं सर्वदेवकृता विष्णुस्तुतिश्च | १० |
| ८ | प्रतिसर्गवर्णने ध्रुवोपाख्यानम्—विमातुर्दुरुक्त्या विद्धस्य ध्रुवस्य वनगमनं तत्र नारदोपदेशेन भगवदाराधनं च | १३ |
| ९ | ध्रुवस्य भगवद्दर्शनं भगवत्स्तवनं वरं लब्ध्वा पुरप्रत्यागमनं राज्यप्राप्तिश्च | १५ |
| १० | स्वभ्रातुरुत्तमस्य यक्षद्वारा वधं श्रुत्वा क्रुद्धस्य ध्रुवस्य युद्धे यक्षाणां संहारारम्भः | १८ |
| ११ | स्वायंम्भुवमनुकृतं ध्रुवस्य सान्त्वनं युद्धविरामश्च | १९ |
| १२ | ध्रुवाय कुबेरस्य वरदानं ध्रुवस्य गङ्गाद्वारे तपश्चरणं भगवत्पदारोहणं च | २० |
| १३ | ध्रुवस्य वंशस्तत्रोत्पन्नस्याङ्गस्य स्वतनयवेनकृतदुराचारेण निर्वेदाधिक्याद् गृहत्यागश्च | २२ |
| १४ | पितृ राज्येऽभिषिक्तस्य वेनस्याधर्मवर्तित्वादृषिभिर्वधः, तदूरुमथनान्निषादोत्पत्तिश्च | २३ |
| १५ | वेनभुजाभ्यां पृथोरर्चिषश्च प्रादुर्भावः महाराजस्य पृथोः राज्याभिषेकश्च | २४ |
| १६ | मागधवन्दिजनकृतं महाराजपृथोः स्तवनम् | २५ |
| १७ | क्षुत्पीडितप्रजानामन्नदानार्थं ग्रस्तबीजां पृथिवीं हन्तुमुद्यतस्य पृथोस्तया स्तवनम् | २६ |
| १८ | पृथिवीवचनात्पृथक् पृथग्वत्सपात्रादिकल्पनया पृथिव्या दोहनम् | २७ |
| १९ | स्वीकार्येऽश्वमेधयज्ञे विघ्नकारिणमिन्द्रं हन्तुकामस्य पृथोर्ब्रह्मसान्त्वनया यज्ञाद्विरतिः | २८ |
| २० | भगवतो दर्शनं भगवत्पृथुसंवादश्च | २९ |
| २१ | स्वकीयप्रजापरिषदि पृथुकृतभगवद्धर्मोपदेशः | ३१ |
| २२ | महाराजाय पृथवे सनत्कुमारकृतो ज्ञानोपदेशः | ३३ |
| २३ | पृथोर्वनं गत्वा तपश्चरणं योगधारणया त्यक्तदेहस्य पृथोः चितायां दग्धतनोरर्चिषश्च सहैव वैकुण्ठप्राप्तिः | ३६ |
| २४ | पृथुवंशः, रुद्रप्राचेतससमागमः, रुद्रगीतं च | ३७ |
| २५ | प्राचीनबर्हिर्नारदसंवादः, पुरञ्जनोपाख्यानारम्भश्च | ४० |
| २६ | पुरञ्जनस्य मृगयावर्णनं तत्प्रियायाः प्रणयकोपश्च | ४२ |
| २७ | पुरञ्जनपुरे चण्डवेगस्याक्रमणं कालकन्याचरित्रवर्णनं च | ४३ |

| अध्याये | विषयाः | पत्रे |
| --- | --- | --- |
| २८ | पुरध्वंसे पुरञ्जनस्य शोकः, भयादिकृतयातनानुभवः, जन्मान्तरे स्त्रीभावापत्तिः अविज्ञातनाम्नः सख्युरुपदेशान्मुक्तिश्च | ४४ |
| २९ | पुरञ्जनोपाख्यानस्य तात्पर्यं नारदोपदेशः प्राचीनबर्हिषो मुक्तिश्च | ४७ |
| ३० | दशप्रचेतसां भगवद्दर्शनं वरप्राप्तिश्च, तेभ्यो मारिषागर्भाद्दक्षोत्पत्तिश्च | ५० |
| ३१ | गृहात्प्रव्रजितानां प्रचेतसां नारदोपदेशान्मुक्तिः | ५२ |


## पञ्चम स्कन्धे


| अध्याये | विषयाः | पत्रे |
| --- | --- | --- |
| १ | प्रियव्रतचरितम् | १ |
| २ | आग्नीध्रचरितमाग्नीध्रात् पूर्वचित्त्यां नवपुत्रोत्पत्तिः | ३ |
| ३ | नाभेश्चरितम्—यज्ञे दत्तवरस्य भगवतो नाभेर्मेरुदेव्यामृषभदेवाख्यावतारग्रहणम् | ५ |
| ४ | ऋषभदेवस्यालौकिकं चरितम् | ६ |
| ५ | ब्रह्मावर्ते स्वपुत्रेभ्य ऋषभस्य ज्ञानोपदेशः स्वयमवधूतवृत्तिग्रहणं च | ७ |
| ६ | ऋषभदेवस्य देहत्यागः | ९ |
| ७ | भरतोपाख्यानं भरतस्य पुलहाश्रमगमनं तपश्चरणं च | १० |
| ८ | भरतस्य मृगशावकमोहान्मृगयोनौ जन्म शालग्रामतीर्थे मृगशरीरोत्सर्गश्च | ११ |
| ९ | भरतस्य ब्राह्मणकुले जन्म तत्र जडवदाचरणं बलिप्रदानार्थं नीतस्य जडभरतस्य भद्रकाल्या रक्षणं च | १२ |
| १० | शिविकावहने नियुक्तस्य तस्य विज्ञानमयं वचो निशम्य तं ब्रह्मविदं मत्वाऽपराधभीतस्य रहूगणस्य क्षमाप्रार्थनम् | १४ |
| ११ | रहूगणाय जडभरतस्य ज्ञानोपदेशः—तत्र संसारमिथ्यात्ववर्णनम् | १६ |
| १२ | रहूगणसंशयस्य समाधानम्—सत्समागमप्रशंसा, स्वपूर्वजन्मवृत्तकथनं च | १७ |
| १३ | भवाटवीवर्णनं, रहूगणसंशयनिवृत्तिश्च | १८ |
| १४ | भवाटवीति रूपकेणोक्तस्यार्थस्य सुस्पष्टीकरणम् | १९ |
| १५ | भरतवंशवर्णनम् | २१ |
| १६ | भूगोलवर्णनम् | २२ |
| १७ | भागीरथीवर्णनमिलावृते वर्षे शङ्करकृतसङ्कर्षणस्तवनं च | २४ |
| १८ | विभिन्नवर्षाणां तत्रत्योपासनानां च वर्णनम् | २५ |
| १९ | किम्पुरुषभारतवर्षयोर्वर्णनं देवगीतं भारतस्य श्रैष्ठ्यम्, उपद्वीपवर्णनं च | २७ |
| २० | प्लक्षादिषड्द्वीपानां लोकालोकपर्वतस्य च वर्णनम् | २९ |
| २१ | खगोलविवरणं रवे रथस्य तद्गतेश्च वर्णनम् | ३१ |
| २२ | चन्द्रादिग्रहाणां स्थितेर्गतेश्च वर्णनम् | ३२ |
| २३ | विष्णुपदस्य शिशुमारचक्रस्य च वर्णनम् | ३३ |
| २४ | राह्वादिस्थितेरतलादिसप्तभूविवराणां च विवरणम् | ३४ |
| २५ | सङ्कर्षणदेवस्य संस्थितिस्तदीयं स्तवनं च | ३६ |
| २६ | विभिन्ननरकगतीनां वर्णनम् | ३७ |


## षष्ठस्कन्धे


| अध्याये | विषयाः | पत्रे |
| --- | --- | --- |
| १ | अजामिलोपाख्यानं विष्णुदूतयमदूतसंवादश्च | २ |
| २ | विष्णुदूतमुखेन भागवतधर्म-नाममाहात्म्यनिरूपणं याम्यपाशान्मुक्तस्याजामिलस्य भगवदाराधनया परमधामगमनं च | ४ |
| ३ | यमयमदूतसंवादः, वैष्णवोत्कर्षवर्णनं च | ६ |
| ४ | दक्षजन्म, तत्कृततपसोऽवसाने भगवतो दर्शनम् हंसगुह्यस्तोत्रं दक्षभगवत्संवादश्च | ८ |
| ५ | नारदोपदेशेन हर्यश्वशबलाश्वाख्यानां दक्षपुत्राणां विरक्तिर्नारदाय दक्षकर्तृकं शापदानं च | १० |
| ६ | दक्षस्य षष्टिकन्यानां वंशविस्तारः | १२ |
| ७ | इन्द्रेण कृतं गुरोरवमाननं ततो देवानामैश्वर्यध्वंसः, विश्वरूपस्य पौरोहित्ये वरणं च | १३ |
| ८ | विश्वरूपद्वारा इन्द्राय नारायणवर्मोपदेशः | १४ |
| ९ | विश्वरूपवधः, वृत्रस्योत्पत्तिर्देवकृतभगवत्स्तवनं भगवद्वरप्रदानं च | १५ |

| अध्याये | विषयाः | पत्रे |
|---|---|---|
| १० | देवानां दधीचेः सकाशात्तदस्थियाचनं वज्रनिर्माणं देवदानवयुद्धं च | १८ |
| ११ | वृत्रस्य भक्तिज्ञानवैराग्ययुक्तवीरोचितोद्गाराः | १९ |
| १२ | इन्द्रवृत्रयुद्धं वृत्रस्य वधश्च | २१ |
| १३ | ब्रह्महत्याभयादिन्द्रस्य पलायनम्, अश्वमेधयज्ञेन ब्रह्महत्यानिवारणं च | २२ |
| १४ | वृत्रासुरस्य पूर्वजन्मवृत्तान्ते चित्रकेतूपाख्यानम्, अङ्गिरःप्रसादेन लब्धे स्वसुते विनष्टे चित्रकेतोरत्यन्तशोकः, कृतद्युतेर्विलापश्च | २३ |
| १५ | चित्रकेतवेऽङ्गिरोनारदयोरुपदेशः | २४ |
| १६ | मृतपुत्रस्य जीवात्मन उक्तिः, चित्रकेतवे नारदकर्तृकं सङ्कर्षणमन्त्रप्रदानं तज्जपेन विद्याधरत्वप्राप्तिर्भगवतोऽनन्तस्य दर्शनं च | २५ |
| १७ | कैलासे पार्वतीशापेन चित्रकेतोर्वृत्रजन्मप्राप्तिः | २८ |
| १८ | दितिवंशवर्णनं मरुतामुत्पत्तिश्च | २९ |
| १९ | पुंसवनव्रतविधिः | ३२ |


## सप्तमस्कन्धे


| अध्याये | विषयाः | पत्रे |
|---|---|---|
| १ | नारदयुधिष्ठिरसंवादारम्भः—जयविजययोः सनकादिशापाद्दैत्यजन्मप्राप्तिः | २ |
| २ | हिरण्यकशिपोः स्वभृत्येभ्यः प्रजापीडनार्थमादेशः, पुत्रशोकाकुलाया दितेः स्वज्ञातीनां च सान्त्वनार्थमुपदेशः | ३ |
| ३ | हिरण्यकशिपोस्तपसा तप्तानां देवानां प्रार्थनया ब्रह्मणा तस्मै वरदानम् | ६ |
| ४ | हिरण्यकशिपोः शासनम् | ७ |
| ५ | हिरण्यकशिपुप्रह्लादसंवादः, प्रह्लादवधार्थं हिरण्यकशिपोः प्रयत्नः प्रह्लादस्य पुनर्गुरुगृहे स्थापनं च | ९ |
| ६ | दैत्यबालकेभ्यः प्रह्लादस्योपदेशः | ११ |
| ७ | मातुर्गर्भे स्थितस्य प्रह्लादस्य देवर्षिनारदमुखादुपदेशश्रवणम् | १२ |
| ८ | प्रह्लादवधोद्यमः, स्तम्भान्नृसिंहावतारः, हिरण्यकशिपोर्वधः, ब्रह्मादिदेवकर्तृकं भगवत्स्तवनं च | १४ |
| ९ | प्रह्लादकृतभगवत्स्तुतिः | १७ |
| १० | प्रह्लादनृसिंहसंवादः प्रह्लादाय वरप्रदानं तस्य राज्येऽभिषेकः, भगवतोऽन्तर्धानं त्रिपुरदहनाख्यानं च | २१ |
| ११ | नृणां सनातनो धर्मः, वर्णधर्माः, स्त्रीधर्माश्च | २३ |
| १२ | ब्रह्मचर्यवानप्रस्थाश्रमयोर्धर्माः | २५ |
| १३ | संन्यासधर्मवर्णनम्, अवधूतप्रह्लादसंवादश्च | २६ |
| १४ | देशकालादिविशेषेण गृहस्थधर्मनिरूपणम् | २७ |
| १५ | गृहस्थानां कृते मोक्षधर्मनिरूपणं नारदस्य स्वप्राग्जन्मवृत्तान्तकथनं च | २९ |


## अष्टमस्कन्धे


| अध्याये | विषयाः | पत्रे |
|---|---|---|
| १ | स्वायम्भुवादिमन्वन्तरचतुष्टयवर्णनं यज्ञावतारचरितं च | १ |
| २ | गजेन्द्रोपाख्याने गजग्राहयुद्धवर्णनम् | २ |
| ३ | गजेन्द्रकर्तृकं भगवत्स्तवनं ग्राहाद्गजेन्द्रस्य मोक्षणं च | ३ |
| ४ | गजग्राहयोः पूर्वजन्मचरितं तयोरुद्धारश्च | ४ |
| ५ | रैवतचाक्षुषमन्वन्तरवर्णनम्, चाक्षुषेऽजितावतारवृत्तम्, असुरपराजितैर्देवैः सह ब्रह्मणा कृतं भगवत्स्तवनं च | ५ |
| ६ | भगवदाज्ञया देवानामसुरैः सन्धाय समुद्रमन्थनार्थमुद्योगः | ७ |
| ७ | समुद्रमन्थनारम्भः समुद्रोद्भूतहालाहलविषभयेन भीतैर्देवैः स्तुतस्य भगवतः शिवस्य विषपानं च | ८ |
| ८ | उदधेरन्योन्यरत्नानामुत्पत्तिः—लक्ष्म्या आविर्भावः, तया भगवतो वरणं दैत्यैश्च हृते सुधाकलशे भगवतो मोहिनीरूपधारणम् | १० |
| ९ | देवानाममृतपानं दैत्यवञ्चनं राहुशिरश्छेदश्च | १२ |
| १० | देवासुरसंग्रामस्तत्र दैत्यमायानिर्माणं हरेः प्राकट्यं मायानिरासश्च | १३ |

| अध्याये | विषयाः | पत्रे |
|---|---|---|
| ११ | बलेः पराजयः, दैत्यानां विनाशः, नारदोक्त्या युद्धसमाप्तिः, शुक्रद्वारा बलेः संजीवनं च | १४ |
| १२ | भगवतो मोहनीरूपं दृष्ट्वा महादेवस्य मोहः | १५ |
| १३ | भविष्यन्मन्वन्तरसप्तकवर्णनम् | १७ |
| १४ | मन्वादीनां पृथक्पृथक्कर्मनिरूपणम् | १८ |
| १५ | बलिकर्तृकः स्वर्गविजयः देवानां पलायनं च | १८ |
| १६ | कश्यपस्य देवमात्रेऽदित्यै पयोव्रतोपदेशः | १९ |
| १७ | व्रतसन्तुष्टस्य भगवतोऽदित्यै वरदानम्, अदितिगर्भस्थस्य भगवत्तेजसो ब्रह्मकर्तृकं स्तवनं च | २१ |
| १८ | भगवतो वामनस्य प्रादुर्भावः, मुनिभिर्देवैरुपनीतस्य तस्य बलियज्ञशालागमनम्, बलिकर्तृकं भगवतोऽभ्यर्हणं च | २२ |
| १९ | बलिवामनसंवादः, पदत्रयभूमियाचनम्, शुक्रद्वारा दाननिषेधश्च | २३ |
| २० | बलिकर्तृकं पदत्रयमितभूदानं भगवतो विराड्रूपग्रहणं च | २४ |
| २१ | बलिबन्धनं भगवतो वचनं च | २६ |
| २२ | बलिवचनं ब्रह्मणो वचनं भगवत्कृतं बलेः प्रशंसनं तस्मै वरदानं च | २६ |
| २३ | बलेः सुतललोकगमनं वामनस्योपेन्द्रपदेऽभिषेकश्च | २८ |
| २४ | मत्स्यावतारकथा | २९ |


## नवमस्कन्धे


| अध्याये | विषयाः | पत्रे |
|---|---|---|
| १ | सूर्यवंशवर्णनं वैवस्वतमनोः पुत्रस्य स्त्रीभावापत्तिश्च | २ |
| २ | पृषध्रकविकरूषनरिष्यन्तदिष्टानां वंशविस्तारः | ३ |
| ३ | सुकन्याचरितं रेवतकन्याचरितं च | ३ |
| ४ | नभगवंशवर्णनम्, नाभागचरितम्, अम्बरीषोपाख्यानं दुर्वाससः पलायनं च | ४ |
| ५ | अम्बरीषानुग्रहेण दुर्वाससो दुःखनिवृत्तिः, अम्बरीषप्रशंसा, तस्य भगवद्रूपतापत्तिश्च | ७ |
| ६ | इक्ष्वाकुवंशवर्णनं मान्धातुश्चरितं सौभर्युपाख्यानं च | ८ |
| ७ | त्रिशंकुकथा हरिश्चन्द्रचरितं च | ९ |
| ८ | सगरचरितम् | १० |
| ९ | गङ्गावतरणकथा भगीरथवृत्तं सौदासचरितं च | ११ |
| १० | श्रीरामचरितम् | १३ |
| ११ | श्रीरामादिवंशवर्णनं श्रीरामस्य साकेतवासिभिः सह स्वपदारोहणं च | १५ |
| १२ | इक्ष्वाकूणां कुशादिसुमित्रान्तानां वर्णनम् | १६ |
| १३ | निमिवंशवर्णनम्, निमेर्देहत्यागो विदेहवंशश्च | १६ |
| १४ | चन्द्रवंशवर्णनं, बुधस्य जन्म, तस्मान्मनुपुत्र्यामिलायां जातस्य पुरूरवस उपाख्यानं च | १७ |
| १५ | ऋचीकजमदग्निपरशुरामचरितं सहस्रार्जुनवधश्च | १८ |
| १६ | जमदग्निवधः, परशुरामद्वारा क्षत्रियाणां संहारः, विश्वामित्रवंशवर्णनं च | २० |
| १७ | क्षत्रवृद्धरजिरम्भानेनसां वंशवर्णनम् | २१ |
| १८ | ययातिचरितम् | २१ |
| १९ | ययातेर्गृहत्यागः | २२ |
| २० | पूरुवंशवर्णनं तत्र दुष्यन्तभरतयोश्चरितम् | २३ |
| २१ | भरतवंशः रन्तिदेवचरितञ्च | २५ |
| २२ | दिवोदासादिवंशकथनं ऋक्षवंशे पाण्डवाद्युत्पत्तिश्च | २६ |
| २३ | अनुद्रुह्युतुर्वसुयदूनां वंशवर्णनम् | २७ |
| २४ | यदुवंशवर्णनं तत्र श्रीकृष्णावतारसूचनम् | २८ |


## दशमस्कन्धे

[ पूर्वार्धे ]


| अध्याये | विषयाः | पत्रे |
|---|---|---|
| १ | श्रीकृष्णावतारोपक्रमः——ब्रह्मकर्तृकं पृथिव्या आश्वासनं, कंसस्य देवकीवधोद्योगाद्वसुदेववचनेन निवृत्तिः, षण्णां देवकीपुत्राणां कंसकर्तृको वधश्च | २ |
| २ | भगवतो देवकीगर्भेऽनुप्रवेशस्तत्र ब्रह्मादिदेवकृतं तदीयं स्तवनं देवकीसान्त्वनं च | ४ |
| ३ | श्रीकृष्णप्रादुर्भावः, वसुदेवदेवकीकृता भगवतः स्तुतिः, भगवदादेशेन कंसभीतस्य वसुदेवस्य गोकुलं प्रति स्वपुत्रनयनं ततो यशोदासुताया आनयनं च | ६ |

| अध्याये | विषयाः | पत्रे |
|---|---|---|
| ४ | जिघांसोः कंसस्य हस्तादुन्मुक्तया देव्या भगवदवतारसूचनं, कंसानुतापः, तदीयदुर्मन्त्रिणां दुर्मन्त्रणं च | ९ |
| ५ | गोकुले भगवतो जातकर्मादिमहोत्सवः, नन्दस्य मथुरागमनं तत्र नन्दवसुदेवसंवादः | १० |
| ६ | पूतनावधः | ११ |
| ७ | शकटभञ्जः, तृणावर्तवधः, जृम्भमाणस्य भगवतो मुखे यशोदाया आकाशादिदर्शनं च | १२ |
| ८ | गर्गागमनं, जातकफलकथनपूर्वकं नामकरणसंस्कारः, मृद्भक्षणव्याजेन यशोदायै विश्वरूपदर्शनं च | १४ |
| ९ | श्रीकृष्णस्योलूखले बन्धनम् | १६ |
| १० | यमलार्जुनोद्धारः | १७ |
| ११ | गोपानां गोकुलं परित्यज्य वृन्दावने गमनं तत्र श्रीकृष्णद्वारा वत्सासुरबकासुरयोर्वधः | १८ |
| १२ | अघासुरवधः | १९ |
| १३ | सबालवत्सवृन्दे ब्रह्मणापहृते श्रीकृष्णस्य तत्तद्रूपेणाब्दं यावद्विहरणं ब्रह्मणो मोहभङ्गश्च | २१ |
| १४ | ब्रह्मणा कृता भगवतः स्तुतिर्वत्सवत्सपालानयनं च | २४ |
| १५ | गोचारणं धेनुकासुरवधः कालियविषदूषिताम्बुपानान्मृतानां गवां गोपानां च पुनरुज्जीवनम् | २८ |
| १६ | कालियदमनम् , नागपत्नीकृतं नागकर्तृकं च भगवतः स्तवनं नागद्वारा ह्रदपरित्यागश्च | २९ |
| १७ | कालियस्य यमुनाह्रदे निवासस्य कारणवर्णनं ह्रदान्निर्गतेन श्रीकृष्णेन व्रजौकसां दावानलाद्रक्षणम् | ३२ |
| १८ | प्रलंबासुरवधः | ३३ |
| १९ | मुञ्जाटव्यां गवां गोपानां च दावानलाद्रक्षणम् | ३४ |
| २० | प्रावृड्वर्णनं शरद्वर्णनं च | ३४ |
| २१ | वेणुगीतम् , भगवतो मधुरं वेणुनादमाकर्ण्य गोपीभिस्तद्गुणगानम् | ३६ |
| २२ | चीरहरणलीला | ३७ |
| २३ | अन्नयाञ्चामिषेण यज्ञपत्नीष्वनुग्रहः | ३८ |
| २४ | इन्द्रमखभङ्गः | ४० |
| २५ | कोपान्मुसलधारावर्षं वर्षतीन्द्रे व्रजौकसां रक्षणार्थं गोवर्धनधारणम् | ४१ |
| २६ | श्रीकृष्णस्यालौकिकं प्रभावं दृष्ट्वा चकितान् गोपान् प्रति नन्दस्य गर्गोक्तिकथनम् | ४२ |
| २७ | विगतमदस्येन्द्रस्य श्रीकृष्णसन्निधौ क्षमाप्रार्थनं कामधेन्विन्द्राभ्यां श्रीकृष्णस्याभिषेकश्च | ४३ |
| २८ | असमयेऽवगाहनाद्वरुणदूतेन वरुणालयं नीतस्य नन्दस्य भगवता पुनरानयनम् | ४४ |
| २९ | वेणुनादं श्रुत्वाऽऽगतानां गोपीनां श्रीकृष्णेन सह संवादः, रासारंभः, तासां मानापनोदाय भगवतोऽन्तर्धानं च | ४५ |
| ३० | गोपीद्वारा भगवतोऽनुसंधानं तदाचरितानुकरणं यमुनापुलिने तदागमप्रतीक्षणं च | ४७ |
| ३१ | गोपीगीतम्—विरहार्तगोपीनां भगवदुपस्थानाय प्रार्थनम् | ४८ |
| ३२ | भगवतः प्रादुर्भावः, गोपीनामाश्वासनं च | ४९ |
| ३३ | महारासवर्णनं परीक्षित्कृतशंकायाः शुकद्वारा समाधानं च | ५० |
| ३४ | अजगरमुखान्नन्दस्य मोचनम् , अजगरस्य पूर्वविद्याधरस्वरूपप्राप्तिः | ५२ |
| ३५ | युग्मगीतम्—गोचारणाय वनं गतस्य भगवतो गोपीजनकृतं गुणगानम् | ५३ |
| ३६ | अरिष्टासुरवधः कंसस्याक्रूरं प्रति नन्दगोकुलगमनायादेशश्च | ५५ |
| ३७ | केशिवधः, नारदकृतं भगवत्स्तवनं निलायनक्रीडायां व्योमासुरवधश्च | ५६ |
| ३८ | कंसाज्ञया रामकृष्णौ मथुरामानेतुमक्रूरस्य नन्दगोकुलं प्रति गमनं तत्र रामकृष्णद्वारा तस्य सत्कारः | ५७ |

| अध्याये | विषयाः | पत्रे |
|---|---|---|
| ३९ | श्रीकृष्णबलरामयोर्मथुरां प्रति प्रस्थानं विरहकातराणां गोपीनां करुणोद्गारः कालिन्द्यामक्रूरकर्तृकं भगवद्धामदर्शनं च | ५९ |
| ४० | अक्रूरकृता भगवत्स्तुतिः | ६१ |
| ४१ | रामकृष्णयोर्मथुरायां प्रवेशः, रजकवधः, वायकमालाकारयोरनुग्रहणं च | ६३ |
| ४२ | कुब्जायामनुग्रहः, धनुषो भङ्गः, मल्लशालासज्जीकरणं च | ६४ |
| ४३ | कुवलयापीडवधः, भगवतो मल्लशालायां प्रवेशः चाणूरेण सह संवादश्च | ६५ |
| ४४ | चाणूरमुष्टिकादीनां मल्लानां निधनं कंसस्य वधश्च | ६७ |
| ४५ | वसुदेवदेवकीसान्त्वनम् , उग्रसेनस्य राज्याभिषेकः, रामकृष्णयोरुपनयनं विद्याध्ययनं गुरोर्मृतपुत्रस्यानयनं च | ६८ |
| ४६ | स्वविरहार्तगोपीनां सान्त्वनाय भगवतोद्धवस्य प्रस्थापनम्, नन्दोद्धवसंवादश्च | ७० |
| ४७ | उद्धवगोपीसंवादः, भ्रमरगीतम् , उद्धवस्य मथुरागमनं च | ७२ |
| ४८ | भगवता कुब्जामनोरथपूर्तिः, अक्रूरगृहं गत्वा पांडवसमाचारज्ञानायाक्रूरस्य हस्तिनापुरं प्रति प्रस्थापनं च | ७५ |
| ४९ | अक्रूरस्य हस्तिनापुरे गमनं, कुन्त्याः करुणोद्गारः, अक्रूरधृतराष्ट्रसंवादः, अक्रूरस्य पुनर्यदुपुर्यामागमनं च | ७६ |
| | ( उत्तरार्धे ) | |
| ५० | रामकृष्णयोर्जरासन्धेन सह युद्धं द्वारकादुर्गनिर्माणं च | ७९ |
| ५१ | कालयवनविनाशः मुचुकुंदकृता भगवतः स्तुतिश्च | ८० |
| ५२ | रामकृष्णयोर्द्वारकागमनं, बलरामविवाहः श्रीकृष्णाय रुक्मिण्याः सन्देशश्च | ८३ |
| ५३ | कृष्णस्य कुंडिनपुरे गमनं रुक्मिणीहरणं च | ८४ |
| ५४ | यदुभिः सह संग्रामे चैद्यपक्षीयराज्ञां पराजयः, रुक्मिणः पराभवः, बलभद्रकृतसान्त्वनं रुक्मिणीश्रीकृष्णविवाहश्च | ८६ |
| ५५ | प्रद्युम्नस्य जन्म शंबरासुरवधश्च | ८८ |
| ५६ | स्यमन्तकोपाख्यानं, भगवतः कलङ्कमार्जनं जांबवतीसत्यभामयोः पाणिग्रहणं च | ८९ |
| ५७ | सत्राजितं हत्वा शतधन्वना स्यमन्तकहरणं, तस्य वधः, अक्रूरस्य पलायनं पुनर्द्वारकायामागमनं च | ९० |
| ५८ | कालिन्दी-मित्रविन्दा-सत्या-भद्रा-लक्ष्मणादीनां पाणिग्रहणम् | ९१ |
| ५९ | मुरवधः, भौमासुरवधः, भूमिकृता भगवत्स्तुतिः, भौमाहृतषोडशसहस्रराजकन्यानां परिणयनं पारिजातहरणं च | ९३ |
| ६० | रुक्मिणीश्रीकृष्णयोः प्रणयकलहः | ९४ |
| ६१ | श्रीकृष्णसन्ततीनां वर्णनम् , अनिरुद्धविवाहे रुक्मिणो वधश्च | ९७ |
| ६२ | ऊषा-निरुद्धसमागमः, अनिरुद्धस्य बंधनश्च | ९८ |
| ६३ | श्रीकृष्णबाणासुरसंग्रामः, तत्र माहेश्वरज्वरेण महेश्वरेण च कृता भगवत्स्तुतिः | ९९ |
| ६४ | नृगस्योद्धारः | १०१ |
| ६५ | बलभद्रस्य व्रजे गमनं कालिन्दीकर्षणं च | १०२ |
| ६६ | पौंड्रककाशिराजयोर्वधः, स्वप्रयुक्तेनाभिचाराग्निना सुदक्षिणस्य विनाशः, सुदर्शनेन वाराणसीदहनं च | १०३ |
| ६७ | रैवतके द्विविदवधः | १०४ |
| ६८ | सांबविवाहः, बलरामेण हस्तिनापुरकर्षणं च | १०५ |
| ६९ | देवर्षिनारदकर्तृकं भगवतो गृहचर्यादर्शनम् | १०७ |
| ७० | श्रीकृष्णस्याह्निककृत्यवर्णनं युधिष्ठिरसन्देशमादाय नारदस्य जरासन्धकारानिबद्धनृपाणां सन्देशमादाय दूतस्य चागमनम् | १०८ |
| ७१ | उद्धवस्य मन्त्रणया श्रीकृष्णस्येन्द्रप्रस्थगमनम् | ११० |


॥ ४ ॥

| अध्याये | विषयाः | पत्रे |
|---|---|---|
| ७२ | राजसूयोपक्रमे पांडवानां दिग्विजयः, भीमेन जरासन्धवधश्च | १११ |
| ७३ | जरासन्धरुद्धानां राज्ञां कारागृहान्मोचनम् | ११३ |
| ७४ | राजसूये भगवतोऽग्रपूजनं ततो रुष्टस्य दुर्वदतः शिशुपालस्य भगवता कृष्णेन वधः | ११४ |
| ७५ | राजसूयान्तेऽवभृथस्नानमहोत्सवः, मयनिर्मितायां युधिष्ठिरसभायां दुर्योधनस्यावमाननं च | ११६ |
| ७६ | शाल्वस्य यदुभिः सह युद्धम् | ११७ |
| ७७ | भगवता सौभसहितस्य शाल्वस्य विनाशः | ११८ |
| ७८ | दन्तवक्त्रविदूरथवधः, बलरामेण सूतशिरश्छेदश्च | ११९ |
| ७९ | बल्वलवधः, सूतहत्यामार्जनाय बलभद्रस्य तीर्थेषु भ्रमणं च | १२० |
| ८० | सुदामोपाख्यानम्, पत्नीप्रेरणया सुदाम्नो भगवत्समीपे गमनं भगवता तस्य सत्कारश्च | १२१ |
| ८१ | सुदाम्नः स्वपुरीं प्रत्यागमनं, तत्र भगवद्दत्तमैश्वर्यमुपलभ्य भगवद्वात्सल्यगुणगानम् | १२२ |
| ८२ | प्रभासे सूर्योपरागपर्वणि यदुभिः सह कुरूणां नन्दादिगोपानां च समागमः | १२४ |
| ८३ | द्रौपदीं प्रति श्रीकृष्णपत्नीनां स्वस्वोद्वाहवृत्तान्तवर्णनम् | १२५ |
| ८४ | ऋषिगणकृता भगवत्स्तुतिः, वसुदेवयज्ञोत्सवः, बन्धूनां प्रस्थापनादिकं च | १२७ |
| ८५ | वसुदेवमुखेन भगवत्तत्त्वप्रतिपादनं, भगवता देवकीप्रार्थनया तदीयमृतपुत्राणामानयनं च | १३० |
| ८६ | सुभद्राहरणं, श्रीकृष्णस्य मिथिलागमनं, तत्र बहुलाश्वश्रुतदेवयोः सद्मनि सकृदेव प्रवेशः | १३२ |
| ८७ | वेदस्तुतिः | १३४ |
| ८८ | शिवाच्युतयोः स्वभाववैलक्षण्यं, वटुरूपेण विष्णुना शम्भोर्वृकासुरभयाद्रक्षणं च | १४१ |
| ८९ | भृगुकर्तृकं त्रिदेवपरीक्षणं तत्र विष्णोः श्रैष्ठ्यं पार्थेन सह महाकालपुरं गत्वा भगवता ब्राह्मणस्य मृतपुत्राणामानयनं च | १४२ |
| ९० | श्रीकृष्णलीलानां संक्षेपतोऽनुवर्णनं तन्महिषीणां तस्मिन्ननुरागाधिक्यं यदुवंशीयानामसंख्येयत्वप्रतिपादनं च | १४४ |


## एकादशस्कन्धे


| अध्याये | विषयाः | पत्रे |
|---|---|---|
| १ | ऋषीणां यदुकुलसंहाराय शापः | १ |
| २ | वसुदेवाय देवर्षिनारदोपदेशः, तत्र निमिनवयोगेश्वरसंवादरूपेण पूर्वं भागवतधर्मस्य भागवतलक्षणस्य च वर्णनम् | २ |
| ३ | मायायास्ततः सन्तरणोपायस्य च वर्णनं ब्रह्मकर्मादिनिरूपणं च | ४ |
| ४ | भगवतोऽवताराणां वर्णनम् | ७ |
| ५ | भक्तिहीनपुरुषाणां निष्ठायाः प्रतियुगं पूजाविधानस्य च भेदवर्णनम् | ९ |
| ६ | श्रीकृष्णोद्धवसंवादारम्भः | ११ |
| ७ | उद्धवपृष्टेन भगवता तस्मै ज्ञानोपदेशकरणं तत्र प्रसंगेनावधूतोपाख्यानमारभ्य तदीयचतुर्विंशतिगुरुष्वष्टगुरुभ्य उपदेशग्रहणवर्णनम् | १३ |
| ८ | अवधूतस्याजगरादिनवगुरूणां वर्णनम् | १६ |
| ९ | कुररादिसप्तगुरूणां वर्णनम्, अवधूतोपाख्यानसमाप्तिश्च | १८ |
| १० | आत्मनः संसारबन्धो देहाध्यासादस्तीति बोधनं जगतो मिथ्यात्वनिरूपणं च | १९ |
| ११ | बद्धानां मुक्तानां साधूनां लक्षणकथनं सद्भक्तिप्राप्त्युपायस्य च वर्णनम् | २१ |
| १२ | सत्सङ्गमहिमा कर्मानुष्ठानकर्मत्यागव्यवस्थावर्णनं च | २४ |
| १३ | भगवता हंसरूपेण ब्रह्मणे ज्ञानोपदेशः | २५ |
| १४ | भक्तेर्महत्त्वं ध्यानयोगवर्णनं च | २७ |
| १५ | अष्टादशसिद्धिवर्णनम् | २९ |

| अध्याये | विषयाः | पत्रे |
|---|---|---|
| १६ | भगवतो विभूतीनां वर्णनम् | ३१ |
| १७ | वर्णधर्मनिरूपणम् , आश्रमेषु ब्रह्मचारिगृहस्थ-धर्मवर्णनं च | ३२ |
| १८ | वानप्रस्थसंन्यासाश्रमधर्मनिरूपणम् | ३४ |
| १९ | भक्तेः साधनस्य यमनियमादीनां च वर्णनम् | ३६ |
| २० | ज्ञानकर्मभक्तियोगानां वर्णनम् | ३८ |
| २१ | द्रव्यदेशादिगुणदोषवर्णनम् | ४० |
| २२ | तत्त्वानां संख्या पुरुषप्रकृतिविवेकश्च | ४२ |
| २३ | तितिक्षुद्विजोपाख्यानं भिक्षुगीतश्च | ४५ |
| २४ | सांख्ययोगवर्णनम् | ४८ |
| २५ | सत्त्वादिगुणत्रयवृत्तिनिरूपणम् | ५० |
| २६ | ऐलगीतम् | ५१ |
| २७ | साङ्गक्रियायोगवर्णनम् | ५३ |
| २८ | परमार्थनिरूपणम् | ५५ |
| २९ | भागवतधर्मनिरूपणम्, उद्धवस्य बदरिकाश्रम-गमनं च | ५८ |
| ३० | यदुकुलसंहारवर्णनम् | ६० |
| ३१ | भगवतः परमधामगमनम् | ६१ |


## द्वादशस्कन्धे

| अध्याये | विषयाः | पत्रे |
|---|---|---|
| १ | कलियुगीयराजवंशवर्णनम् | २ |
| २ | कलिधर्मनिरूपणं, कल्क्यवतारस्य कृतयुगागमस्य च समयः | ३ |
| ३ | भूमिगीतं, कलिदोषनिरासोपायः, युगधर्मनिरूपणं, कलौ हरिनामकीर्तनमाहात्म्यवर्णनम् | ४ |
| ४ | चतुर्विधप्रलयवर्णनम् | ६ |
| ५ | परमार्थोपदेशेन राज्ञः परीक्षितो भीतिनिवारणम् | ८ |
| ६ | परीक्षितो देहत्यागः, सर्पसत्रं, वेदानां शाखाविभागश्च | ९ |
| ७ | अथर्ववेदविभागो पुराणलक्षणवर्णनं च | १२ |
| ८ | मार्कण्डेयस्य तपस्या तत्कृतनरनारायणस्तुतिश्च | १३ |
| ९ | मार्कण्डेयकर्तृकं भगवन्मायानिर्मितमहाप्रलयलीलादर्शनम् | १५ |
| १० | मार्कण्डेयाय भगवतः शंकरस्य वरदानम् | १६ |
| ११ | साङ्गोपाङ्गायुधयुक्तस्य भगवतः स्वरूपवर्णनं सूर्यव्यूहवर्णनं च | १७ |
| १२ | श्रीमद्भागवतोक्तविषयाणां संक्षेपतो विवरणम् | १९ |
| १३ | विभिन्नपुराणानां श्लोकसंख्या श्रीमद्भागवत-महत्त्वं च | २१ |


इति श्रीमद्भागवतविषयानुक्रमणिका ।

अथ श्रीधरीटीकासहिते-
श्रीमद्भागवते प्रथमस्कन्धः प्रारभ्यते ।

॥ श्रीगणेशाय नमः॥ श्रीसरस्वत्यै नमः॥ ॐ नमः परमहंसास्वादितचरणकमलचिन्मकरंदाय भक्तजनमानसनिवासाय श्रीरामचंद्राय। वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि ॥ यस्यास्ते हृदये संवित्तं नृसिंहमहं भजे ॥ १ ॥ विश्वसर्गविसर्गादिनवलक्षणलक्षितम् ॥ श्रीकृष्णाख्यं परं धाम जगद्धाम नमाम तत्॥ २॥ माधवीमाधवाधीशौ सर्वसिद्धिविधायिनौ ॥ वंदे परस्परात्मानौ परस्परनुतिप्रियौ ॥ ३ ॥ संप्रदायानुरोधेन पौर्वापर्यानुसारतः ॥ श्रीभागवतभावार्थदीपिकेयं प्रतन्यते॥ ४ ॥ क्वाहं मंदमतिः क्वेदं मंथनं क्षीरवारिधेः ॥ किं तत्र परमाणुर्वै यत्र मज्जति मंदरः ॥ ५ ॥ मूकं करोति वाचालं पंगुं लंघयते गिरिम् ॥ यत्कृपा तमहं वंदे परमानंदमाधवम् ॥ ६ ॥ श्रीमद्भागवताभिधः सुरतरुस्तारांकुरः सज्जनिः स्कंधैर्द्वादशभिस्ततः प्रविलसद्भक्त्यलवालोदयः ॥ द्वात्रिंशत्त्रिशतं च यस्य विलसच्छाखाः सहस्राण्यलं पर्णान्यष्टदशेष्टदोऽतिसुलभो वर्वर्ति सर्वोपरि ॥ ७ ॥ अथ नानापुराणशास्त्रप्रबंधैश्चित्तप्रसत्तिमलभमानस्तत्रतत्रापरितुष्यन्नारदोपदेशतः श्रीमद्भगवद्गुणानुवर्णनप्रधानं भागवतशास्त्रं प्रारिप्सुर्वेदव्यासस्तत्प्रत्यूहनिवृत्त्यादिसिद्धये तत्प्रतिपाद्यपरदेवतानुस्मरणलक्षणं मंगलमाचरति। जन्माद्यस्येति। परं परमेश्वरं धीमहि। ध्यायतेर्लिङि छांदसं ध्यायेमेत्यर्थः। बहुवचनं शिष्याभिप्रायम्। तमेव स्वरूपतटस्थलक्षणाभ्यामुपलक्षयति। तत्र स्वरूपलक्षणं सत्यत्वे हेतुः। यत्र यस्मिन्ब्रह्मणि त्रयाणां मायागुणानां तमोरजःसत्त्वानां सर्गो भूतेंद्रियदेवतारूपोऽमृषा सत्यः यत्सत्यतया मिथ्यासर्गोऽपि सत्यवत्प्रतीयते तं परं सत्यमित्यर्थः। अत्र दृष्टान्तः। तेजोवारिमृदां यथा विनिमय इति। विनिमयो व्यत्ययोऽन्यस्मिन्नन्यावभासः। स यथाऽधिष्ठानसत्तया सद्वत्प्रतीयत इत्यर्थः। तत्र तेजसि वारिबुद्धिर्मरीचितोये प्रसिद्धा। मृदि काचादौ वारिबुद्धिर्वारिणि च काचादिबुद्धिरित्यादि यथाय-

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ॥
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १ ॥

थमूह्यम्। यद्वा। तस्यैव परमार्थसत्यत्वप्रतिपादनाय तदितरस्य मिथ्यात्वमुक्तम्। तत्र मृषैवायं त्रिसर्गो न वस्तुतः सन्निति। यत्रेत्यनेन प्रतीतमुपाधिसंबंधं वारयति। स्वेनैव धाम्ना महसा निरस्तं कुहकं कपटं मायालक्षणं यस्मिंस्तम्। तटस्थलक्षणमाह। जन्मादीति। अस्य विश्वस्य जन्मस्थितिभंगा यतो भवंति तं धीमहीति। तत्र हेतुः। अन्वयादितरतश्च। अर्थेष्वाकाशादिकार्येषु परमेश्वरस्य सद्रूपेणान्वयादकार्येभ्यश्च खपुष्पादिभ्यस्तद्व्यतिरेकात्। यद्वा। अन्वयशब्देनानुवृत्तिरितरशब्देन व्यावृत्तिः। अनुवृत्तत्वात्सद्रूपं ब्रह्म कारणं मृत्सुवर्णादिवत्। व्यावृत्तत्वाद्विश्वं कार्यं घटकुंडलादिवदित्यर्थः। यद्वा। सावयवत्वादन्वयव्यतिरेकाभ्यां यदस्य जन्मादि तद्यतो भवतीति संबंधः। तथा च श्रुतिः। यतो वा इमानि भूतानि जायंते। येन जातानि जीवंति। यत्प्रयंत्यभिसंविशंतीत्याद्या स्मृतिश्च। यतः सर्वाणि भूतानि भवंत्यादियुगागमे ॥ यस्मिंश्च प्रलयं यांति पुनरेव युगक्षये इत्याद्याः। तर्हि किं प्रधानं जगत्कारणत्वाद्ध्येयमभिप्रेतं नेत्याह। अभिज्ञो यस्तम्। स ऐक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजतेति श्रुतेः। ईक्षतेर्नाशब्दमिति न्यायाच्च। तर्हि किं जीवो ध्येयः स्यान्नेत्याह। स्वराट् स्वेनैव राजते यस्तं स्वतःसिद्धज्ञानमित्यर्थः। तर्हि किं ब्रह्मा ध्येयः। हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीदिति श्रुतेः। नेत्याह। तेन इति। आदिकवये ब्रह्मणेऽपि ब्रह्म वेदं यस्तेने प्रकाशितवान्। यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्य इति श्रुतेः। ननु ब्रह्मणोऽन्यतो वेदाध्ययनमप्रसिद्धम्। सत्यम्। तत्तु हृदा मनसैव तेने विस्तृतवान्। अनेन बुद्धिवृत्तिप्रवर्तकत्वेन गायत्र्यर्थो दर्शितः। वक्ष्यति हि। प्रचोदिता येन पुरा सरस्वती वितन्वताऽजस्य सतीं स्मृतिं हृदि। स्वलक्षणा प्रादुरभूत्किलास्यतः स मे ऋषीणामृषभः प्रसीदता-

मिति । ननु ब्रह्मा स्वयमेव सुप्तप्रतिबुद्धन्यायेन वेदमुपलभताम् । नेत्याह । यद्यस्मिन्ब्रह्मणि सूरयोऽपि मुह्यंतीति । तस्माद्ब्रह्मणोऽपि पराधीनज्ञानत्वात्स्वतः सिद्धज्ञानः परमेश्वर एव जगत्कारणम् । अत एव सत्योऽसतः सत्ताप्रदत्वाच्च परमार्थसत्यः सर्वज्ञत्वेन च निरस्तकुहकस्तम्। धीमहीति गायत्र्या प्रारंभेण च गायत्र्याख्यब्रह्मविद्यारूपमेतत्पुराणमिति दर्शितम् । यथोक्तं मत्स्यपुराणे पुराणदानप्रस्तावे–यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः । वृत्रासुरवधोपेतं तद्भागवतमिष्यते ॥ लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् । प्रौष्ठपद्यां पौर्णमास्यां स याति परमं पदम् ॥ अष्टादश सहस्राणि पुराणं तत्प्रकीर्तितम् ॥ पुराणांतरे च । ग्रंथोऽष्टादशसाहस्रो द्वादशस्कंधसंमितः । हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा ॥ गायत्र्या च समारंभस्तद्वै भागवतं विदुः ॥ पद्मपुराणेऽम्बरीषं प्रति गौतमोक्तिः–अंबरीष शुकप्रोक्तं नित्यं भागवतं शृणु । पठस्व स्वमुखेनापि यदीच्छसि भवक्षयमिति । अत एव भागवतं नामान्यदित्यपि न शंकनीयम् ॥ १ ॥ इदानीं श्रोतृप्रवर्तनाय श्रीभागवतस्य कांडत्रयविषयेभ्यः सर्वशास्त्रेभ्यः श्रैष्ठ्यं दर्शयति । धर्म इति । अत्र श्रीमति सुंदरे भागवते परमो धर्मो निरूप्यते । परमत्वे हेतुः । प्रकर्षेणोज्झितं कैतवं फलाभिसंधिलक्षणं कपटं यस्मिन्सः । प्रशब्देन मोक्षाभिसंधिरपि निरस्तः । केवलमीश्वराराधनलक्षणो धर्मो निरूप्यत इति । अधिकारितोऽपि धर्मस्य परमत्वमाह । निर्मत्सराणां परोत्कर्षासहनं मत्सरस्तद्रहितानाम् । सतां भूतानुकंपिनाम् । एवं कर्मकांडविषयेभ्यः शास्त्रेभ्यः श्रैष्ठ्यमुक्तं ज्ञानकाण्डविषयेभ्योऽपि श्रैष्ठ्यमाह । वेद्यमिति । वास्तवं परमार्थभूतं वस्तु वेद्यं नतु वैशेषिकाणामिव द्रव्यगुणादिरूपम् । यद्वा । वास्तवशब्देन वस्तुनोंऽशो जीवो वस्तुनः शक्तिर्माया वस्तुनः कार्यं जगच्च तत्सर्वं वस्त्वेव न ततः पृथगिति वेद्यम् । अयत्नेनैव ज्ञातुं शक्यमित्यर्थः । ततः किमत

धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ॥ श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः सद्यो हृद्यवरुद्ध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥२॥ निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ॥ पिबत भागवतं रसमालयं मुहुरहो रसिका

आह । शिवदं परमसुखदम् । किंच । आध्यात्मिकादितापत्रयोन्मूलनं च । अनेन ज्ञानकांडविषयेभ्यः श्रैष्ठ्यं दर्शितम् । कर्तृतोऽपि श्रैष्ठ्यमाह । महामुनिः श्रीनारायणस्तेन प्रथमं संक्षेपतः कृते । देवताकांडविषयगतं श्रैष्ठ्यमाह । किं वेति । परैः शास्त्रैस्तदुक्तसाधनैर्वेश्वरो हृदि किंवा सद्य एवावरुद्ध्यते स्थिरीक्रियते । वाशब्दः कटाक्षे । किंतु विलंबेन कथंचिदेव । अत्र तु शुश्रूषुभिः श्रोतुमिच्छद्भिरेव तत्क्षणादेवावरुद्ध्यते । इदमेव तर्हि किमिति सर्वे न शृण्वंति तत्राह । कृतिभिरिति । श्रवणेच्छा तु पुण्यैर्विना नोत्पद्यत इत्यर्थः। तस्मादत्र कांडत्रयार्थस्यापि यथावत्प्रतिपादनादिदमेव सर्वशास्त्रेभ्यः श्रेष्ठमतो नित्यमेतदेव श्रोतव्यमिति भावः ॥ २ ॥ इदानीं तु न केवलं सर्वशास्त्रेभ्यः श्रेष्ठत्वादस्य श्रवणं विधीयतेऽपि तु सर्वशास्त्रफलस्वरूपमिदमतः परमादरेण सेव्यमित्याह । निगमेति । निगमो वेदः स एव कल्पतरुः सर्वपुरुषार्थोपायत्वात्तस्य फलं भागवतं नाम तत्तु वैकुंठगतं नारदेनानीय मह्यं दत्तम् । मया च शुकस्य मुखे निहितम् । तच्च तन्मुखाद्भुवि गलितं शिष्यप्रशिष्यादिरूपपल्लवपरंपरया शनैरखंडमेवावतीर्णम् । नतूच्चनिपातेन स्फुटितमित्यर्थः । एतच्च भविष्यदपि भूतवन्निर्दिष्टम् । अनागताख्यानेनैवास्य शास्त्रस्य प्रवृत्तेः । अत एवामृतरूपेण द्रवेण संयुतम् । लोके हि शुकमुखस्पृष्टं फलममृतमिव स्वादु भवतीति प्रसिद्धम् । अत्र शुको मुनिः । अमृतं परमानंदः । स एव द्रवो रसः । रसो वै सः । रसं ह्येवायं लब्ध्वानन्दी भवतीति श्रुतेः । अतो हे रसिका हे रसज्ञास्तत्रापि भावुका हे रसविशेषभावनाचतुराः ! अहो भुवि गलितमित्यलभ्यलाभोक्तिः । इदं भागवतं नाम फलं मुहुः पिबत। ननु त्वगष्ठ्यादिकं विहाय फलाद्रसः पीयते कथं फलमेव पातव्यं तत्राह। रसं रसरूपम्। अतस्त्वगष्ठ्यादेर्हेयांशस्याभावात्फलमेव कृत्स्नं पिबत। अत्र च रसतादात्म्याविवक्षया रसवत्त्वस्य विवक्षितत्वाद्गुणवचनेऽपि

रसशब्दे मतुपः प्राप्त्यभावात्तेन विनैव रसं फलमिति सामानाधिकरण्यम्। तत्र फलमित्युक्ते पानासंभवो हेयांशप्रसक्तिश्च भवेदिति तन्निवृत्त्यर्थं रसमित्युक्तम्। रसमित्युक्तेऽपि गलितस्य रसस्य पातुमशक्यत्वात्फलमिति द्रष्टव्यम्। नच भागवतामृतपानं मोक्षेऽपि त्याज्यमित्याह। आलयं लयो मोक्षः अभिविधावाकारः लयमभिव्याप्य। नहीदं स्वर्गादिसुखवन्मुक्तैरुपेक्ष्यते किंतु सेव्यत एव। वक्ष्यति हि। आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे। कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिरिति ॥ ३ ॥ तदेवमनेन श्लोकत्रयेण विशिष्टेष्टदेवतानुस्मरणपूर्वकं प्रारिप्सितस्य शास्त्रस्य विषयप्रयोजनादिवैशिष्ट्येन सुखसेव्यत्वेन च श्रोतॄनभिमुखीकृत्य शास्त्रमारभते। नैमिश इति। ब्रह्मणा विसृष्टस्य मनोमयस्य चक्रस्य नेमिः शीर्यते कुंठीभवति यत्र तन्नेमिशं नेमिशमेव नैमिशम्। तथा च वायवीये। एतन्मनोमयं चक्रं मया सृष्टं विसृज्यते। यत्रास्य शीर्यते नेमिः स देशस्तपसः शुभः ॥ इत्युक्त्वा सूर्यसंकाशं चक्रं सृष्ट्वा मनोमयम्। प्रणिपत्य महादेवं विससर्ज पितामहः ॥ तेऽपि हृष्टतमा विप्राः प्रणम्य जगतां प्रभुम्। प्रययुस्तस्य चक्रस्य यत्र नेमिर्व्यशीर्यत ॥ तद्वनं तेन विख्यातं नैमिशं मुनिपूजितमिति। नैमिष इति पाठे वराहपुराणोक्तं द्रष्टव्यम्। तथाहि गौरमुखमृषिं प्रति भगवद्वाक्यम्—एवं कृत्वा ततो देवो मुनिं गौरमुखं तदा। उवाच निमिषेणेदं निहतं दानवं बलम् ॥ अरण्येऽस्मिंस्ततस्त्वेतन्नैमिषारण्यसंज्ञितम्। भविष्यति यथार्थं वै ब्राह्मणानां विशेषकमिति। अनिमिषः श्रीविष्णुरलुप्तदृष्टित्वात्तस्य क्षेत्रे। तथा चात्रैव शौनकादिवचनं क्षेत्रेऽस्मिन्वैष्णवे वयमिति। स्वः स्वर्गे गीयत इति स्वर्गायो हरिः

भुवि भावुकाः ॥३॥ नैमिशेऽनिमिषक्षेत्रे ऋषयः शौनकादयः ॥ सत्रं स्वर्गाय लोकाय सहस्रसममासत ॥४॥ त एकदा तु मुनयः प्रातर्हुतहुताग्नयः ॥ सत्कृतं सूतमासीनं पप्रच्छुरिदमादरात् ॥ ५ ॥ ऋषय ऊचुः ॥ त्वया खलु पुराणानि सेतिहासानि चानघ ॥ आख्यातान्यप्यधीतानि धर्मशास्त्राणि यान्युत ॥६॥ यानि वेदविदां श्रेष्ठो भगवान्बादरायणः ॥ अन्ये च मुनयः सूत परावरविदो विदुः ॥७॥ वेत्थ त्वं सौम्य तत्सर्वं तत्त्वतस्तदनुग्रहात् ॥ ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥ ८ ॥ तत्र तत्रांजसाऽऽयुष्मन्भवतां यद्विनिश्चितम् ॥ पुंसामेकांततः श्रेयस्तन्नः शंसितुमर्हसि ॥ ९ ॥ प्रायेणाल्पायुषः सभ्य कलावस्मिन्युगे जनाः ॥ मंदाः सुमंदमतयो मंदभाग्या ह्युपद्रुताः ॥ १० ॥ भूरीणि भूरिकर्माणि श्रोतव्यानि विभागशः ॥

स एव लोको भक्तानां निवासस्थानं तस्मै तत्प्राप्तय इत्यर्थः। सहस्रं समाः संवत्सरा अनुष्ठानकालो यस्य तत्सत्रं सत्रसंज्ञकं कर्मोद्दिश्यासत उपविविशुः। यद्वा। आसताकुर्वतेत्यर्थः। आलभेत निर्वपति उपयन्तीत्यादिवत्प्रत्ययोच्चारणमात्रार्थत्वेनास्तेर्धात्वर्थस्याविवक्षितत्वात् ॥ ४ ॥ प्रातःकाले हुता अग्नयो यैस्ते। अनेन नित्यनैमित्तिकहोमसाकल्यं दर्शितम्। इदं वक्ष्यमाणमादरात्पप्रच्छुः ॥ ५ ॥ विविदिषितानर्थान्प्रष्टुं सूतस्य सर्वशास्त्रज्ञानातिशयमाहुः। त्वयेति त्रिभिः श्लोकैः। इतिहासो महाभारतादिस्तत्सहितानि। न केवलमधीतान्यपि त्वाख्यातान्यपि व्याख्यातानि च। उत अपि। यानि धर्मशास्त्राणि तान्यपि ॥ ६ ॥ किंच यानीत्यादि। विदां मध्ये श्रेष्ठो व्यासो यानि वेद। परावरे सगुणनिर्गुणे ब्रह्मणी विदन्तीति तथा ॥ ७ ॥ वेत्थ जानासि। सौम्य हे साधो तेषामनुग्रहात्। तत्त्वतो ज्ञाने हेतुमाह। ब्रूयुरिति। स्निग्धस्य प्रेमवतः। उत एव। गुह्यं रहस्यमपि ब्रूयुरेव ॥ ८ ॥ अंजसा ग्रंथार्जवेन। एकांततः श्रेयोऽव्यभिचारि श्रेयःसाधनम् ॥ ९ ॥ अन्येऽपि बहुना कालेन बहुशास्त्रश्रवणादिभिर्विनिश्चिन्वन्तु नेत्याहुः। प्रायेणेति। हे सौम्य साधो! अस्मिन् युगे कलावल्पायुषो जनास्तत्रापि मंदा अलसास्तत्रापि सुमंदमतयस्तत्रापि मंदभाग्या विघ्नाकुलास्तत्राप्युपद्रुता रोगादिभिः ॥१०॥ न च बहुशास्त्रश्रवणेऽपि तावतैव फलसिद्धिरित्याहुः। भूरीणीति। भूरीणि कर्माण्यनुष्ठेयानि येषु तानि। समुद्धृत्य यथा-

वदुद्धृत्य येनोद्धृतवचनेनात्मा बुद्धिः संप्रसीदति सम्यगुपशाम्यति ॥११॥ प्रश्नानन्तरं सूत जानासीति पंचभिः। भद्रं त इत्यौत्सुक्येनाशीर्वादः। भगवान्निरतिशयैश्वर्यादिगुणः। सात्वतां सच्छब्देन सत्त्वमूर्तिर्भगवान्स उपास्यतया विद्यते येषामिति सत्वंतो भक्ताः। स्वार्थेऽण् राक्षसवायसादिवत्। तस्य चाश्रवणमार्षम्। तदेवं सात्वंत इति भवति। तेषां पतिः पालकः। यस्यार्थविशेषस्य चिकीर्षया वसुदेवस्य भार्यायां देवक्यां जातः ॥१२॥ अङ्ग हे सूत! तन्नोऽनुवर्णयितुमर्हसि। सामान्यतस्तावद्यस्यावतारो भूतानां क्षेमाय पालनाय भवाय समृद्धये ॥१३॥ तत्प्रभावमनुवर्णयंतस्तद्यशःश्रवणौत्सुक्यमाविष्कुर्वन्ति। आपन्न इति त्रिभिः। संसृतिमापन्नः प्राप्तः विवशोऽपि गृणन्। ततः संसृतेः। अत्र हेतुः। यद्यतो नाम्नो भयमपि स्वयमेव बिभेति ॥१४॥ किंच यस्य पादः संश्रयो येषामत एव प्रशमोऽयनं वर्त्माश्रयो वा येषां ते मुनय उपस्पृष्टाः सन्निधिमात्रेण सेविताः सद्यः पुनन्ति। स्वर्धुनी गङ्गा तस्या आपस्तु तत्पादान्निःसृता नतु तत्रैव तिष्ठंत्यतस्तत्संबंधेनैव पुनंत्योऽप्यनुसेवया पुनन्ति नतु सद्य इति मुनीनामुत्कर्षोक्तिः ॥१५॥ पुण्यश्लोकैरीड्यानि स्तव्यानि कर्माणि यस्य तस्य यशः कलिमलापहं संसारदुःखोपशमनम् ॥ १६ ॥ प्रश्नांतरम्।

अतः साधोऽत्र यत्सारं समुद्धृत्य मनीषया ॥ ब्रूहि नः श्रद्दधानानां येनात्मा संप्रसीदति ॥ ११ ॥ सूत जानासि भद्रं ते भगवान्सात्वतां पतिः ॥ देवक्यां वसुदेवस्य जातो यस्य चिकीर्षया ॥ १२ ॥ तन्नः शुश्रूषमाणानामर्हस्यङ्गानुवर्णितुम् ॥ यस्यावतारो भूतानां क्षेमाय च भवाय च ॥ १३ ॥ आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ॥ ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम् ॥ १४ ॥ यत्पादसंश्रयाः सूत मुनयः प्रशमायनाः ॥ सद्यः पुनंत्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया ॥ १५ ॥ को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः ॥ शुद्धिकामो न शृणुयाद्यशः कलिमलापहम् ॥ १६ ॥ तस्य कर्माण्युदाराणि परिगीतानि सूरिभिः ॥ ब्रूहि नः श्रद्दधानानां लीलया दधतः कलाः ॥ १७ ॥ अथाख्याहि हरेर्धीमन्नवतारकथाः शुभाः ॥ लीला विदधतः स्वैरमीश्वरस्यात्ममायया ॥ १८ ॥ वयं तु न वितृप्याम उत्तमश्लोकविक्रमे ॥ यच्छृण्वतां रसज्ञानां स्वादु स्वादु पदे पदे ॥ १९ ॥ कृतवान्किल वीर्याणि सह रामेण केशवः ॥ अतिमर्त्यानि भगवान्गूढः कपटमानुषः ॥ २० ॥ कलिमागतमाज्ञाय क्षेत्रेऽस्मिन्वैष्णवे वयम् ॥ आसीना दीर्घसत्रेण कथायां सक्षणा हरेः ॥ २१ ॥ त्वं नः संदर्शितो धात्रा दुस्तरं निस्तितीर्षताम् ॥ कलिं

तस्येति। उदाराणि महांति विश्वसृष्ट्यादीनि। सूरिभिर्नारदादिभिः। कलाः ब्रह्मरुद्रादिमूर्तीः ॥१७॥ अथेति प्रश्नांतरे। अवतारकथाः स्थित्यर्थमेव तत्तदवसरे ये मत्स्याद्यवतारास्तदीयाः कथाः। स्वैरं लीलाः कुर्वतः। श्रीकृष्णावतारप्रयोजनप्रश्नेनैव तच्चरितप्रश्नोऽपि जात एवेति ज्ञातव्यम् ॥ १८ ॥ अत्यौत्सुक्येन पुनरपि तच्चरितान्येव श्रोतुमिच्छन्तस्तत्रात्मनस्तृप्त्यभावमावेदयंति। वयं त्विति। योगयागादिषु तृप्ताः स्मः। उद्गच्छति तमो यस्मात्स उत्तमस्तथाभूतः श्लोको यशो यस्य तस्य विक्रमे तु विशेषेण न तृप्यामोऽलमिति न मन्यामहे। तत्र हेतुः। यद्विक्रमं शृण्वताम्। यद्वा। अन्ये तृप्यंतु नाम वयं तु नेति तुशब्दस्यान्वयः। अयमर्थः। त्रेधा ह्यलंबुद्धिर्भवति। उदरादिभरणेन वा रसाज्ञानेन वा स्वादुविशेषाभावाद्वा। तत्र शृण्वतामित्यनेन श्रोत्रस्याकाशत्वादभरणमित्युक्तम्। रसज्ञानामित्यनेन चाज्ञानतः पशुवत्तृप्तिर्निराकृता। इक्षुभक्षणवद्रसांतराभावेन तृप्तिं निराकरोति। पदे पदे प्रतिक्षणं स्वादुतोऽपि स्वादु ॥ १९ ॥ अतः श्रीकृष्णचरितानि कथयेत्याशयेनाहुः। कृतवानिति। अतिमर्त्यानि मर्त्यानतिक्रांतानि गोवर्धनोद्धरणादीनि। मनुष्येष्वसंभावितानीत्यर्थः ॥ २० ॥ ननु याजनाध्यापनादिव्यग्राणां कुत एतच्छ्रवणाव-

यतो देवतांतरानिंदकाः संतः ॥ २६ ॥ रजस्तमसी प्रकृतिः स्वभावो येषां ते। अत एव पितृभूतादिभिः समं शीलं येषाम्। श्रिया सहैश्वर्यं प्रजाश्चेप्संतीति तथा ते ॥ २७ ॥ मोक्षप्रदत्वाद्वासुदेवो भजनीय इत्युक्तम्। सर्वशास्त्रतात्पर्यगोचरत्वादपीत्याह। द्वाभ्याम्। वासुदेव एव परस्तात्पर्यगोचरो येषां ते। ननु वेदा मखपरा दृश्यंते इत्याशंक्य तेऽपि तदाराधनार्थत्वात्तत्परा एवेत्युक्तम्। योगा योगशास्त्राणि। तेषामप्यासनप्राणायामादिक्रियापरत्वमाशंक्य तासामपि तत्प्राप्त्युपायत्वात्तत्परत्वमुक्तम् ॥ २८ ॥ ज्ञानं ज्ञानशास्त्रम्। ननु च तज्ज्ञानपरमेवेत्याशंक्य ज्ञानस्यापि तत्परत्वमुक्तम्। तपोऽत्र ज्ञानम्। धर्मो धर्मशास्त्रं दानव्रतादिविषयम्। ननु तत्स्वर्गपरमित्याशंक्य गम्यत इति गतिः स्वर्गादिफलं साऽपि तदानंदांशरूपत्वात्तत्रैवेत्पयुक्तम्। यद्वा। वेदा इत्यनेनैव तन्मूलत्वात्सर्वाण्यपि वासुदेवपराणीत्युक्तम्। तत्र ननु तेषां मखयोगक्रियादिनानार्थपरत्वान्न तदेकपरत्वमित्याशंक्य मखादीनामपि द्रष्टव्यम् ॥ २९ ॥ ननु जगत्सर्गतत्प्रवेशनियमनादिविलासयुक्ते वस्तुनि सर्वशास्त्रसमन्वयो दृश्यते। कथं वासुदेवपरत्वं सर्वस्य तत्राह। स एवेति चतुर्भिः एतैरेव श्लोकैस्तस्य कर्माण्युदाराणि ब्रूहीति प्रश्नस्योत्तरमुक्तम्। सदसद्रूपया कार्यकारणात्मिकया अगुणश्चेत्यन्वयः। स्वतो निर्गुणोऽपि सन्नित्यर्थः ॥ ३० ॥ भगवतो जगत्कारणत्वमुक्तं प्रवेशनियमलक्षणां लीलामाह। तथेति। विलसितेषूद्भूतेषु

॥ २६ ॥ रजस्तमःप्रकृतयः समशीला भजंति वै ॥ पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः ॥ २७ ॥ वासुदेवपरा वेदा वासुदेवपरा मखाः ॥ वासुदेवपरा योगा वासुदेवपराः क्रियाः ॥ २८ ॥ वासुदेवपरं ज्ञानं वासुदेवपरं तपः ॥ वासुदेवपरो धर्मो वासुदेवपरा गतिः ॥ २९ ॥ स एवेदं ससर्जाग्रे भगवानात्ममायया ॥ सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः ॥ ३० ॥ तदा विलसितेष्वेषु गुणेषु गुणवानिव ॥ अंतःप्रविष्ट आभाति विज्ञानेन विजृम्भितः ॥ ३१ ॥ यथा ह्यवहितो वह्निर्दारुष्वेकः स्वयोनिषु ॥ नानेव भाति विश्वात्मा भूतेषु च तथा पुमान् ॥ ३२ ॥ असौ गुणमयैर्भावैर्भूतसूक्ष्मेन्द्रियात्मभिः ॥ स्वनिर्मितेषु निर्विष्टो भुंक्ते भूतेषु तद्गुणान् ॥ ३३ ॥ भावयत्येष सत्त्वेन लोकान्वै लोकभावनः ॥ लीलावतारानुरतो देवतिर्यङ्नरादिषु ॥ ३४ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥ सूत उवाच ॥ जगृहे पौरुषं रूपं भगवान्महदादिभिः ॥ संभूतं षोडशकलमादौ लोकसिसृक्षया ॥ १ ॥ यस्यांभसि शयानस्य योगनिद्रां वितन्वतः ॥ नाभिह्रदांबुजादासीद्ब्रह्मा

गुणेष्वाकाशादिष्वंतःप्रविष्टः सन्गुणवानिव मदधीना एते गुणा इत्यभिमानवानिव नतु वस्तुतस्तथा। यतो विज्ञानेन चिच्छक्त्या विजृम्भितोऽत्यूर्जितः ॥ ३१ ॥ बहुरूपत्वलीलामाह। यथेति। स्वयोनिषु स्वाभिव्यंजकेषु। अवहितो निहितः। विश्वात्मा पुमान्परमेश्वरः। भूतेषु प्राणिषु। अंतर्यामिणोऽपि प्रतियोनिनानात्वेन नानात्वमिवोच्यते। क्षेत्रज्ञरूपेण वा ॥ ३२ ॥ भोगरूपां लीलामाह। असाविति। असौ हरिर्भूतसूक्ष्माणि चेन्द्रियाणि चात्मा मनश्च तैः स्वयं निर्मितेषु भूतेषु चतुर्विधेष्विति भोगे स्वातंत्र्यं द्योत्यते तद्गुणांस्तत्तदनुरूपान्विषयानिच्छया भुंक्ते। भोजयतीति णिजर्थो वा ज्ञेयः। पालयतीति वा तदा त्वात्मनेपदमार्षम्। भुजोऽनवन इति स्मरणात् ॥ ३३ ॥ इदानीं सूत जानासीति प्रश्नस्योत्तरमाह। भावयति पालयति। एतत्तु सर्वावतारसाधारणं प्रयोजनम्। विशेषतः कृष्णावतारस्य कुन्तीस्तुतौ वक्ष्यते। लोकभावनो लोककर्ता। देवादिषु ये लीलावतारास्तेष्वनुरतोऽनुरक्तः ॥ ३४ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कन्धे भावार्थदीपिकायां टीकायां द्वितीयोऽध्यायः ॥ २ ॥ अवतारकथाप्रश्ने तृतीये तूत्तराभिधा। पुरुषाद्यवतारोक्त्या तच्चारित्रवर्णनैः ॥ १ ॥ यदुक्तमथाख्याहि हरेर्धीमन्नवतारकथाः शुभा इति।

वदुद्धृत्य येनोद्धृतवचनेनात्मा बुद्धिः संप्रसीदति सम्यगुपशाम्यति ॥११॥ प्रश्नानन्तरं सूत जानासीति पंचभिः। भद्रं त इत्यौत्सुक्येनाशीर्वादः। भगवान्निरतिशयैश्वर्यादिगुणः। सात्वतां सच्छब्देन सत्त्वमूर्तिर्भगवान्स उपास्यतया विद्यते येषामिति सत्वंतो भक्ताः। स्वार्थेऽण् राक्षसवायसादिवत्। तस्य चाश्रवणमार्षम्। तदेवं सात्वंत इति भवति। तेषां पतिः पालकः। यस्यार्थविशेषस्य चिकीर्षया वसुदेवस्य भार्यायां देवक्यां जातः ॥१२॥ अङ्ग हे सूत! तन्नोऽनुवर्णयितुमर्हसि। सामान्यतस्तावद्यस्यावतारो भूतानां क्षेमाय पालनाय भवाय समृद्धये ॥१३॥ तत्प्रभावमनुवर्णयंतस्तद्यशःश्रवणौत्सुक्यमाविष्कुर्वन्ति। आपन्न इति त्रिभिः। संसृतिमापन्नः प्राप्तः विवशोऽपि गृणन्। ततः संसृतेः। अत्र हेतुः। यद्यतो नाम्नो भयमपि स्वयमेव बिभेति ॥१४॥ किंच यस्य पादः संश्रयो येषामत एव प्रशमोऽयनं वर्त्माश्रयो वा येषां ते मुनय उपस्पृष्टाः सन्निधिमात्रेण सेविताः सद्यः पुनन्ति। स्वर्धुनी गङ्गा तस्या आपस्तु तत्पादान्निःसृता नतु तत्रैव तिष्ठंत्यतस्तत्संबंधेनैव पुनंत्योऽप्यनुसेवया पुनन्ति नतु सद्य इति मुनीनामुत्कर्षोक्तिः ॥१५॥ पुण्यश्लोकैरीड्यानि स्तव्यानि कर्माणि यस्य तस्य यशः कलिमलापहं संसारदुःखोपशमनम् ॥ १६ ॥ प्रश्नांतरम्।

अतः साधोऽत्र यत्सारं समुद्धृत्य मनीषया ॥ ब्रूहि नः श्रद्दधानानां येनात्मा संप्रसीदति ॥ ११ ॥ सूत जानासि भद्रं ते भगवान्सात्वतां पतिः ॥ देवक्यां वसुदेवस्य जातो यस्य चिकीर्षया ॥ १२ ॥ तन्नः शुश्रूषमाणानामर्हस्यङ्गानुवर्णितुम् ॥ यस्यावतारो भूतानां क्षेमाय च भवाय च ॥ १३ ॥ आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ॥ ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम् ॥ १४ ॥ यत्पादसंश्रयाः सूत मुनयः प्रशमायनाः ॥ सद्यः पुनंत्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया ॥ १५ ॥ को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः ॥ शुद्धिकामो न शृणुयाद्यशः कलिमलापहम् ॥ १६ ॥ तस्य कर्माण्युदाराणि परिगीतानि सूरिभिः ॥ ब्रूहि नः श्रद्दधानानां लीलया दधतः कलाः ॥ १७ ॥ अथाख्याहि हरेर्धीमन्नवतारकथाः शुभाः ॥ लीला विदधतः स्वैरमीश्वरस्यात्ममायया ॥ १८ ॥ वयं तु न वितृप्याम उत्तमश्लोकविक्रमे ॥ यच्छृण्वतां रसज्ञानां स्वादु स्वादु पदे पदे ॥ १९ ॥ कृतवान्किल वीर्याणि सह रामेण केशवः ॥ अतिमर्त्यानि भगवान्गूढः कपटमानुषः ॥ २० ॥ कलिमागतमाज्ञाय क्षेत्रेऽस्मिन्वैष्णवे वयम् ॥ आसीना दीर्घसत्रेण कथायां सक्षणा हरेः ॥ २१ ॥ त्वं नः संदर्शितो धात्रा दुस्तरं निस्तितीर्षताम् ॥ कलिं

तस्येति। उदाराणि महांति विश्वसृष्ट्यादीनि। सूरिभिर्नारदादिभिः। कलाः ब्रह्मरुद्रादिमूर्तीः ॥१७॥ अथेति प्रश्नांतरे। अवतारकथाः स्थित्यर्थमेव तत्तदवसरे ये मत्स्याद्यवतारास्तदीयाः कथाः। स्वैरं लीलाः कुर्वतः। श्रीकृष्णावतारप्रयोजनप्रश्नेनैव तच्चरितप्रश्नोऽपि जात एवेति ज्ञातव्यम् ॥ १८ ॥ अत्यौत्सुक्येन पुनरपि तच्चरितान्येव श्रोतुमिच्छन्तस्तत्रात्मनस्तृप्त्यभावमावेदयंति। वयं त्विति। योगयागादिषु तृप्ताः स्मः। उद्गच्छति तमो यस्मात्स उत्तमस्तथाभूतः श्लोको यशो यस्य तस्य विक्रमे तु विशेषेण न तृप्यामोऽलमिति न मन्यामहे। तत्र हेतुः। यद्विक्रमं शृण्वताम्। यद्वा। अन्ये तृप्यंतु नाम वयं तु नेति तुशब्दस्यान्वयः। अयमर्थः। त्रेधा ह्यलंबुद्धिर्भवति। उदरादिभरणेन वा रसाज्ञानेन वा स्वादुविशेषाभावाद्वा। तत्र शृण्वतामित्यनेन श्रोत्रस्याकाशत्वाद्भरणमित्युक्तम्। रसज्ञानामित्यनेन चाज्ञानतः पशुवत्तृप्तिर्निराकृता। इक्षुभक्षणवद्रसांतराभावेन तृप्तिं निराकरोति। पदे पदे प्रतिक्षणं स्वादुतोऽपि स्वादु ॥ १९ ॥ अतः श्रीकृष्णचरितानि कथयेत्याशयेनाहुः। कृतवानिति। अतिमर्त्यानि मर्त्यानतिक्रांतानि गोवर्धनोद्धरणादीनि। मनुष्येष्वसंभावितानीत्यर्थः ॥ २० ॥ नतु याजनाध्यापनादिव्यग्राणां कुत एतच्छ्रवणाव-

धीरनाक्रष्टमनाः ॥ ३७ ॥ दिशां जयिनः शूरानपि ॥ ३८ ॥ प्रतिलब्ध आत्मरूपो लाभो येन अस्य मुमुक्षोर्याः प्रमदा निरयद्वारं वदंति योगिनः ॥ ३९ ॥ शनैः शुश्रूषादिमिषेणोपयाति या योषिद्रूपा माया तां मृत्युं प्रतिकूलामीक्षेत ॥४०॥ मुमुक्षुं स्त्रियं प्रत्येतदेवाह। या मन्यते इति द्वाभ्याम्। ऋषभायतीं पुरुषवदाचरंतीं या मम मायां वित्तादिप्रदं पतिं मन्यते तदा तां पुरुषरूपां मायां मृत्युं विद्यादित्युत्तरेणान्वयः। यतः पूर्वजन्मानि स्वगं पुमान्स्त्रीसंगतोऽन्तकाले स्त्रीध्यानेन स्त्रीत्वं प्राप्तो जीवः ॥४१॥ तां पत्यादिरूपं मृत्युं विजानीयात्। मृगयोर्लुब्धकस्य गायनमनुकूलत्वेन प्रतीयमानमपि यथा मृगस्य मृत्युः ॥ ४२ ॥ तदेवं जीवस्य संसृतिः प्रपंचिता तत्र च तस्य कर्मवशेन लोकाल्लोकांतरगमनं जन्ममरणं चोक्तम्। तत्रैवं शंक्यते ॥ ननु व्यापकस्य कथं लोकाल्लोकांतरगमनम्। नित्यस्य च कथं जन्ममरणे। भोगेन कर्मक्षये च सति जन्म मरणं च नेष्यते। तत्कुतः पुनरपि तस्य कर्मसंभव इति तत्र लोकांतरगमनं कर्म च संभवतीत्याह। देहेनेति। जीवस्योपाधितया भूतेन जातेन लिंगदेहेन लोकांतरमनुव्रजन अविरतं कर्माणि करोतीति कर्मणामसमाप्तिरुक्ता ॥४३॥ जन्ममरणसंभवमाह। जीवो जीवोपाधिर्लिङ्गदेहोऽस्यात्मानोऽनुगोऽनुवर्ती

ऋषिं नारायणमृते योषिन्मय्येह मायया ॥ ३७ ॥ बलं मे पश्य मायायाः स्त्रीमय्या जयिनो दिशाम् ॥ या करोति पदाक्रांतान् भ्रूविजृंभेण केवलम् ॥ ३८ ॥ संगं न कुर्यात्प्रमदासु जातु योगस्य पारंपरमारुरुक्षुः ॥ मत्सेवया प्रतिलब्धात्मलाभो वदंति यां निरयद्वारमस्य ॥ ३९ ॥ योपयाति शनैर्माया योषिद्देवविनिर्मिता ॥ तमीक्षेतात्मनो मृत्युं तृणैः कूपमिवावृतम् ॥ ४० ॥ या मन्यते पतिं मोहान्मन्मायामृषभायतीम् ॥ स्त्रीत्वं स्त्रीसंगतः प्राप्तो वित्तापत्यगृहप्रदम् ॥ ४१ ॥ तामात्मनो विजानीयात्पत्यपत्यगृहात्मकम् ॥ दैवोपसादितं मृत्युं मृगयोर्गायनं यथा ॥ ४२ ॥ देहेन जीवभूतेन लोकाल्लोकमनुव्रजन् ॥ भुंजान एव कर्माणि करोत्यविरतं पुमान् ॥ ४३ ॥ जीवो ह्यस्यानुगो देहो भूतेंद्रियमनोमयः ॥ तन्निरोधोऽस्य मरणमाविर्भावस्तु संभवः ॥ ४४ ॥ द्रव्योपलब्धिस्थानस्य द्रव्येक्षाऽयोग्यता यदा ॥ तत्पंचत्वमहंमानादुत्पत्तिर्द्रव्यदर्शनम् ॥ ४५ ॥ यथाऽक्ष्णोर्द्रव्यावयवदर्शनायोग्यता यदा ॥ तदैव चक्षुषो द्रष्टुर्द्रष्टृत्वायोग्यताऽनयोः ॥ ४६ ॥ तस्मान्न कार्यः संत्रासो न कार्पण्यं न संभ्रमः ॥ बुद्ध्वा जीवगतिं धीरो मुक्तसंगश्चरेदिह ॥ ४७ ॥ सम्यग्दर्शनया बुद्ध्या योगवैराग्ययुक्तया ॥ मायाविरचिते लोके चरेन्न्यस्य कलेवरम् ॥ ४८ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे कापिलेये जीवगतिर्नामैकत्रिंशत्तमोऽध्यायः ॥३१॥ कपिल उवाच ॥ अथ यो गृहमेधीयान्धर्मानेवावसन् गृहे ॥

भूतेन्द्रियमनोमयः स्थूलभूतादिविकारो देहो भोगायतनं तयोर्निरोधः कार्ययोग्यता तदस्य जीवस्य मरणमुच्यते। आविर्भावस्तु संभवो जन्मोच्यते ॥४४॥ एतदेव दृष्टांतेन स्पष्टयति। द्रव्योपलब्धिस्थानस्य नेत्रगोलकादेर्द्रव्येक्षायां रूपादिदर्शने काचकामलादिदोषेण यदाऽयोग्यता भवति तदैव चक्षुष। इंद्रियस्याप्ययोग्यता। अनयोः स्थानचक्षुषोर्यदाऽयोग्यता सदैव द्रष्टुर्जीवस्य द्रष्टृत्वायोग्यता एवं स्थूलदेहवैकल्ये लिंगस्य वैकल्यं तदेव जीवस्य मरणं न स्वत इत्यर्थः। क्वचिदेकः श्लोकोऽधिकः पठ्यते। तत्रायमर्थः द्रव्योपलब्धिस्थानस्य स्थूलशरीरस्य द्रव्येक्षायां यदाऽयोग्यता तत्पंचत्वं मरणम्। अहंमानादिदमेवाहमित्यभिमानेन द्रव्यस्य स्थूलशरीरस्य दर्शनमुत्पत्तिः अक्ष्णोर्गोलकयोर्द्रव्यावयवस्य रूपादेर्दर्शनेऽयोग्यता शेषं समानम् ॥४५॥४६॥ यस्मान्न वस्तुतो जीवस्य जन्ममरणादि तस्मान्मरणात्संत्रासो न कार्यो जीवने न च कार्पण्यं दैन्यं कार्यम्। संभ्रमश्च जीवनप्रयत्ने ॥४७॥ ननु सर्वथा मुक्तसंगत्वे कथं जीवितमत आह। सम्यक् पश्यति विचार-

यतीति सम्यग्दर्शना तथा बुद्ध्या मायाविरचिते लोके कलेवरं न्यस्य निक्षिप्य तस्मिन्नासक्तिं त्यक्त्वा विचरेदित्यर्थः ॥४८॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे टीकायां एकत्रिंशत्तमोऽध्यायः ॥३१॥ द्वात्रिंशे सात्त्विकैर्धर्मैरूर्ध्वं गतिरुदीर्यते ॥ तत्त्वज्ञानविहीनस्य ततश्च पुनरागतिः ॥ १ ॥ तदेवं पापकर्मणो गतिरुक्ता इदानीं काम्यकर्मणो गतिमाह । अथेति चतुर्भिः । यो गृह एवावसन्स्वान्धर्मान्दोग्धि । दोह्यमाह । काममर्थं च तान्दुग्धान्धर्मान्भूयः पिपर्ति पूरयत्यनुतिष्ठति ॥१॥ सोऽपि भगवदाराधनरूपाद्धर्मात्पराङ्मुखः सन्प्राकृतानपि देवान्पितॄंश्च यजते ॥२॥ ततः किं तत्राह । तेषां श्रद्धयाऽऽक्रांता व्याप्ता मतिर्यस्य पित्रर्थं देवार्थं च व्रतं नियमो यस्य । सोमपाः तत्र सोमं पीत्वेत्यर्थः ॥ ३ ॥ लोके तिष्ठत्यपि पुण्यक्षयात्पातमुक्त्वा लोकानामपि लयमाह। यदा चाहरहः प्रलये ॥४॥ भगवद्धर्मनिष्ठानां तत्प्राप्तिमेव गतिमाह त्रिभिः। ये तु कामार्थप्रयोजनाय स्वधर्मान्न दुह्यंति न दुहंति। निःसंगा अनासक्ताः। न्यस्तानीश्वरे समर्पितानि कर्माणि यैः ॥५॥६॥ विश्वतोमुखं परिपूर्णं पुरुषं यांति । तथा च श्रुतिः । सूर्यद्वारेण ते विरजाः प्रयांति यत्रामृतः पुरुषो ह्यव्ययात्मेति प्रकृतिमुपादानकारणम् । उत्पत्त्यंतभावनं निमित्तकारणम् ॥ ७ ॥

काममर्थं च धर्मान् स्वान् दोग्धि भूयः पिपर्ति तान् ॥ १ ॥ स चापि भगवद्धर्मात्काममूढः पराङ्मुखः ॥ यजते क्रतुभिर्देवान् पितॄंश्च श्रद्धयान्वितः ॥ २ ॥ तच्छ्रद्धयाक्रांतमतिः पितृदेवव्रतः पुमान् ॥ गत्वा चांद्रमसं लोकं सोमपाः पुनरेष्यति ॥ ३ ॥ यदा चाहीन्द्रशय्यायां शेतेऽनंतासनो हरिः ॥ तदा लोका लयं यांति त एते गृहमेधिनाम् ॥ ४ ॥ ये स्वधर्मान्न दुह्यंति धीराः कामार्थहेतवे॥ निःसंगा न्यस्तकर्माणः प्रशांताः शुद्धचेतसः ॥५॥ निवृत्तिधर्मनिरता निर्ममा निरहंकृताः ॥ स्वधर्माख्येन सत्त्वेन परिशुद्धेन चेतसा ॥ ६ ॥ सूर्यद्वारेण ते यांति पुरुषं विश्वतोमुखम् ॥ परावरेशं प्रकृतिमस्योत्पत्त्यंतभावनम् ॥ ७ ॥ द्विपरार्धावसाने यः प्रलयो ब्रह्मणस्तु ते ॥ तावदध्यासते लोकं परस्य परचिंतकाः ॥ ८ ॥ क्ष्मांभोनलानिलवियन्मनइंद्रियार्थभूतादिभिः परिवृतं प्रतिसंजिहीर्षुः ॥ अव्याकृतं विशति यर्हि गुणत्रयात्मा कालं पराख्यमनुभूय परः स्वयंभूः ॥९॥ एवं परेत्य भगवंतमनुप्रविष्टा ये योगिनो जितमरुन्मनसो विरागाः ॥ तेनैव साकममृतं पुरुषं पुराणं ब्रह्म प्रधानमुपयांत्यगताभिमानाः ॥ १० ॥ अथ तं सर्वभूतानां हृत्पद्मेषु कृतालयम् ॥ श्रुतानुभावं शरणं व्रज भावेन भामिनि ॥ ११ ॥ आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः ॥ योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्तकैः ॥ १२ ॥ भेददृष्ट्याऽभिमानेन निःसंगेनापि कर्मणा ॥ कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ॥ १३ ॥ स संसृत्य पुनः काले कालेने-

परमेश्वरदृष्ट्या हिरण्यगर्भोपासकानामपि क्रमेण तत्प्राप्तिमाह । द्विपरार्धावसान इति त्रिभिः । परस्य हिरण्यगर्भस्य परचिंतकाः परमेश्वरदृष्ट्या हिरण्यगर्भोपासकाः ॥ ८ ॥ क्ष्मादीनि पंचमहाभूतानि मनश्चेन्द्रियाणि चार्थाश्च शब्दादयो भूतादिश्चाहंकार एवमादिभिः परिवृतं युक्तं ब्रह्मांडं प्रतिसंहर्तुमिच्छुः सन् अव्याकृतमीश्वरम् । पराख्यं द्विपरार्धलक्षणं कालम् ॥९॥ परेत्य दूरं गत्वा भगवंतं हिरण्यगर्भमनुप्रविष्टा ये योगिनोऽमृतं परमानंदरूपं प्रधानमुत्कृष्टं ब्रह्म तेनैव सहोपयांति न तु पूर्वम्। यतस्तदाऽगताभिमानाः। तथा च स्मृतिः। ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे॥ परस्यांते कृतात्मानः प्रविशंति परं पदम् इति ॥१०॥ भगवदुपासकास्तु साक्षादेव तं प्राप्नुवंति न क्रमेणातस्त्वं साक्षात्तमेव भजेत्याह । अथ तस्मात् । भावेन प्रेम्णा ॥११॥ एवं तावद्भगवद्भक्तानां निरंतरमेव तत्प्राप्तिर्भगवद्भेदेन हिरण्यगर्भोपासकानां तु क्रमेणेत्युक्तम् । भेदेनोपासने तु ब्रह्मादयोऽप्यावर्तंते किमुतान्य इत्याह। आद्य इति चतुर्भिः। यो वेदगर्भः सोऽपि गुणव्यतिकरे

जाते यथापूर्वं ब्रह्मपदाधिकृतः सन्प्रजायते इति तृतीयेनान्वयः । न केवलं स एवैकः किंतु ऋषिभिर्मरीच्यादिभिर्योगेश्वरादिभिश्च सह ॥ १२ ॥ जन्मनि हेतुद्वयम् । भेददृष्ट्याऽभिमानेन कर्तृत्वा-
दिति च यथापूर्वत्वे हेतुः । निःसंगेन निष्कामेन कर्मणेति ॥ १३ ॥ किं कृत्वाऽत्र प्रजायते प्रथमं पारमेष्ठ्यमैश्वर्यं निषेव्य पश्चात्प्रलये सगुणं गुणाधिष्ठातारं प्रथमावताररूपं पुरुषं संसृत्य प्राप्य
तेऽपि ऋषिप्रमुखाः स्वकर्मनिर्मितमैश्वर्यं निषेव्य पुरुषं च संसृत्य यथापूर्वं स्वस्वाधिकारेण पुनरायांतीत्यन्वयः ॥ १४ ॥ १५ ॥ यदा ब्रह्मोपासकानामपि भेददर्शनाभिमानाभ्यामेवमावृत्तिस्तदा
काम्यकर्मिणां किं वक्तव्यमिति तान्निंदन्नाह षड्भिः । ये त्विह कर्मस्वासक्तमनसः संतोऽप्रतिषिद्धानि काम्यानि नित्यानि च कर्माणि कृत्स्नानि कुर्वंति तेऽर्यम्णो दक्षिणेन पथा धूममार्गेण
पितृलोकं व्रजंतीति पंचमेनान्वयः । मध्ये तन्निंदा ॥ १६ ॥ १७ ॥ हरति संसारं मेधा यस्य कथनीया उरवो विक्रमा यस्य तस्य मधुद्विषः कथायां विमुखाः संतो ये त्रैवर्गिकाः ये चाच्युतस्य
कथासुधां हित्वाऽसतां गाथाः शृण्वन्ति । ते नूनं दैवेन विहता इत्यन्वयः॥१८॥१९॥ पितृलोकात्पुनः प्रजामनु स्वपुत्रादिषु प्रजायंते । गर्भाधानादारभ्य श्मशानांताः क्रियाः कृतवन्तः । यथोक्त-

श्वरमूर्तिना ॥ जाते गुणव्यतिकरे यथापूर्वं प्रजायते ॥ १४ ॥ ऐश्वर्यं पारमेष्ठ्यं च तेऽपि धर्मविनिर्मितम् ॥ निषेव्य पुनरायांति गुणव्यतिकरे
सति ॥ १५ ॥ ये त्विहासक्तमनसः कर्मसु श्रद्धयान्विताः ॥ कुर्वंत्यप्रतिषिद्धानि नित्यान्यपि च कृत्स्नशः ॥ १६ ॥ रजसा कुंठमनसः कामा-
त्मानोऽजितेन्द्रियाः ॥ पितॄन्यजंत्यनुदिनं गृहेष्वभिरताशयाः ॥ १७ ॥ त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः ॥ कथायां कथनीयोरुविक्रमस्य
मधुद्विषः ॥ १८ ॥ नूनं दैवेन विहता ये चाच्युतकथासुधाम् ॥ हित्वा शृण्वंत्यसद्गाथाः पुरीषमिव विड्भुजः ॥ १९ ॥ दक्षिणेन पथाऽर्यम्णः
पितृलोकं व्रजंति ते ॥ प्रजामनु प्रजायंते श्मशानांतक्रियाकृतः ॥ २० ॥ ततस्ते क्षीणसुकृताः पुनर्लोकमिमं सति ॥ पतंति विवशा देवैः सद्यो वि-
भ्रंशितोदयाः ॥ २१ ॥ तस्मात्त्वं सर्वभावेन भजस्व परमेष्ठिनम् ॥ तद्गुणाश्रयया भक्त्या भजनीयपदांबुजम् ॥२२॥ वासुदेवे भगवति भक्तियोगः
प्रयोजितः ॥ जनयत्याशु वैराग्यं ज्ञानं यद्ब्रह्मदर्शनम् ॥ २३ ॥ यदाऽस्य चित्तमर्थेषु समेष्विंद्रियवृत्तिभिः ॥ न विगृह्णाति वैषम्यं प्रियमप्रियमित्युत
॥२४॥ स तदैवात्मनात्मानं निःसंगं समदर्शनम् ॥ हेयोपादेयरहितमारूढं पदमीक्षते ॥ २५ ॥ ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान् ॥ दृश्या-
दिभिः पृथग्भावैर्भगवानेक ईयते ॥ २६ ॥ एतावानेव योगेन समग्रेणेह योगिनः ॥ युज्यतेऽभिमतो ह्यर्थो यदसंगस्तु कृत्स्नशः ॥ २७॥ ज्ञानमेकं

कारिण इत्यर्थः ॥ २० ॥ कथं प्रजायन्ते तदाह । ततस्ते पुनरिमं लोकं प्रति पतंति । विभ्रंशित उदयो भोगसाधनं येषाम् ॥२१॥ परमेष्ठिनं परमेश्वरम् । सर्वभावेनातिप्रीत्या तस्य गुणानाश्रयते
या भक्तिस्तया ॥ २२ ॥ भजने च ज्ञानवैराग्ये स्वत एव भवत इत्याह । वासुदेव इति ॥२३॥ तदेवोपपादयति । यदाऽस्य भक्तस्य चित्तं भगवद्गुणानुरागेण तस्मिन्नेव निश्चलं सदिंद्रियवृत्ति-
भिर्वैषम्यमर्थेषु न विगृह्णाति ॥ २४ ॥ तदैवात्मनात्मानं स्वप्रकाशमीक्षते । कथंभूतम् । समं च तद्दर्शनं च । तत्कृतः निःसंगम् । संगाद्धि वैषम्यं भवति । निःसंगत्वे हेतुः । हेयोपादेयरहितम् ।
तत्कृतः । पदं व्यवसितमारूढम् । परमानन्दोऽहमिति निश्चयं प्राप्तमित्यर्थः ॥ २५ ॥ समेष्वर्थेष्वित्युक्तं तदेव साम्यं दर्शयति । ज्ञानमात्रमेव परब्रह्मादिशब्दैः प्रसिद्धम् । दृश्यादिभिर्दृश्यद्रष्टृकरण-
रूपेण पृथक् प्रतीयते । ज्ञानमात्रत्वेन समेष्वित्यर्थः ॥२६॥ ननु ज्ञानमात्रमात्मनः स्वरूपत्वान्नित्यप्राप्तमेवेति किमनेकसाध्येन योगेन प्राप्यते तदाह । एतावानिति । युज्यते प्राप्यते प्रपंचसंग-

व्युदास एव योगफलमित्यर्थः ॥२७॥ ननु कथं प्रत्यक्षादिप्रतीतः प्रपंचो व्युदसितुं शक्यते प्रतीतेर्भ्रांतित्वादित्याह । ज्ञानमिति। पराचीनैः पराङ्मुखैः शब्दादिर्धर्मो यस्य तेनार्थरूपेण ज्ञानरूपं निर्गुणं ब्रह्मैवावभाति। नत्वर्थः पृथगस्तीत्यर्थः ॥२८॥ अर्थरूपत्वमेवोदाहृत्य दर्शयति । यथेति । अहंरूपोऽहंकारः स च त्रिवृत् त्रिगुणात्मकः पुनश्च भूतरूपेण पञ्चविधः । इन्द्रियरूपेणैकादशविधश्च । स्वराड् जीवरूपः तस्य जीवस्य वपुरंडं जगच्च यतो येभ्यो महदादिभ्यः तथाऽवभाति॥ २९ ॥ ननु तर्हि जनः किमित्येवं न प्रत्येति तत्राह। एतद्ब्रह्म ॥३०॥ उक्तमेवार्थं सुखप्रतिपत्त्यर्थं संक्षेपेणानुवदति। इतीति। हे गुर्वि पूज्ये ॥ ३१ ॥ अनेन च ज्ञानयोगेन भगवानेव प्राप्यो यथा भक्तियोगेनेत्याह। नैर्गुण्यो ज्ञानयोगश्च मन्निष्ठो भक्तिलक्षणश्च यो योगस्तयोर्द्वयोरप्येक एवार्थः प्रयोजनम् । कोऽसौ । भगवच्छब्दोपलक्षणं ज्ञापको यस्य । तदुक्तं गीतासु। ते प्राप्नुवंति मामेव सर्वभूतहिते रताः इति ॥ ३२ ॥ ननु ज्ञानयोगस्यात्मलाभः फलं शास्त्रेणावगम्यते भक्तियोगस्य तु

पराचीनैरिंद्रियैर्ब्रह्म निर्गुणम् ॥ अवभात्यर्थरूपेण भ्रांत्या शब्दादिधर्मिणा ॥ २८ ॥ यथा महानहंरूपस्त्रिवृत्पंचविधः स्वराट् ॥ एकादशविधस्तस्य वपुरंडं जगद्यतः ॥ २९ ॥ एतद्ब्रह्म श्रद्धया भक्त्या योगाभ्यासेन नित्यशः ॥ समाहितात्मा निःसंगो विरक्त्या परिपश्यति ॥ ३० ॥ इत्येतत्कथितं गुर्वि ज्ञानं तद्ब्रह्मदर्शनम् ॥ येनानुबध्यते तत्त्वं प्रकृतेः पुरुषस्य च ॥ ३१ ॥ ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः ॥ द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः ॥ ३२ ॥ यथेन्द्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः ॥ एको नानेयते तद्वद्भगवाञ्छास्त्रवर्त्मभिः ॥ ३३ ॥ क्रियया क्रतुभिर्दानैस्तपःस्वाध्यायदर्शनैः ॥ आत्मेन्द्रियजयेनापि संन्यासेन च कर्मणाम् ॥ ३४ ॥ योगेन विविधांगेन भक्तियोगेन चैव हि ॥ धर्मेणोभयचिह्नेन यः प्रवृत्तिनिवृत्तिमान् ॥ ३५ ॥ आत्मतत्त्वावबोधेन वैराग्येण दृढेन च ॥ ईयते भगवानेभिः सगुणो निर्गुणः स्वदृक् ॥ ३६ ॥ प्रावोचं भक्तियोगस्य स्वरूपं ते चतुर्विधम् ॥ कालस्य चाव्यक्तगतेर्योऽन्तर्धावति जंतुषु ॥ ३७ ॥ जीवस्य संसृतीर्बह्वीरविद्याकर्मनिर्मिताः ॥ यास्वंग प्रविशन्नात्मा न वेद गतिमात्मनः ॥ ३८ ॥ नैतत्खलायोपदिशेन्नाविनीताय कर्हिचित ॥ न स्तब्धाय न भिन्नाय नैव धर्मध्वजाय च ॥ ३९ ॥ न लोलुपायोपदिशेन्न गृहारूढचेतसे ॥ नाभक्ताय च मे जातु न मद्भक्तद्विषामपि ॥ ४० ॥ श्रद्दधानाय भक्ताय विनीतायानसूयवे ॥ भूतेषु कृतमैत्राय शुश्रूषाभिरताय च

भजनीयेश्वरप्राप्तिः कुतस्तयोरेकार्थत्वमित्याशंक्य दृष्टांतेनोपपादयति ।यथा बहूनां रूपरसादीनां गुणानामाश्रयो गुडक्षीरादिरेक एवार्थो मार्गभेदप्रवृत्तैरिंद्रियैर्नाना प्रतीयते चक्षुषा शुक्ल इति रसनेन मधुर इति स्पर्शनेन शीत इत्यादि तथा भगवानेक एव तत्तद्रूपेणावगम्यते ॥३३॥ शास्त्रमार्गानेव प्रपञ्चयति । क्रिययेति त्रिभिः । क्रियया पूर्तरूपया क्रतुभिर्यागैः मर्शनं मीमांसा आत्मेन्द्रियजयो निषिद्धवर्जनम् ॥ ३४ ॥ उभयचिह्नेन सकामनिष्कामलक्षणेन ।तमेवाह य इति। सकामधर्मप्राप्यं स्वर्गाद्यपि भगवत एव सगुणं स्वरूपमिति भावः ॥ ३५ ॥ एभिर्वर्त्मभिः स्वदृक् स्वप्रकाशः ॥ ३६ ॥ तदेवं ज्ञानयोगमुपसंहृत्य तस्य च भक्तियोगेन समानार्थत्वमुक्त्वा भक्तियोगाद्युपसंहरति । प्रावोचमिति द्वाभ्याम्। चतुर्विधं त्रिगुणनिर्गुणभेदेन अंतर्धावति उत्पत्तिनिधनादि करोति ॥ ३७ ॥ अंग हे मातः ॥ ३८ ॥ उपदेशेऽनधिकारिणो दर्शयति। नैतदिति द्वाभ्याम् । खलाय परोद्वेजकाय भिन्नाय दुराचाराय धर्मध्वजाय दांभिकाय ॥ ३९ ॥ ४० ॥ अधिकारिण आह ।

श्रद्धानायेति द्वाभ्याम् ॥४१॥४२॥ एतच्छ्रवणकीर्तनपरस्यापि मत्पदप्राप्तिरेव फलमित्याह । य इति । अप्यर्थे चकारः । सोऽपि मत्पदवीमेति । हि निश्चितम् ॥ ४३ ॥ इति श्रीमद्भागवते
महापुराणे तृतीयस्कंधे टीकायां द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥ त्रयस्त्रिंशे तु तस्यैव कपिलस्योपदेशतः ॥ ज्ञानभावेन तन्मातुर्जीवन्मुक्तिरुदीर्यते ॥ १ ॥ विस्रस्तं मोहरूपं पटलमावरणं यस्याः
सा । तत्त्वान्येव विषयस्तेनांकिता सिद्धिः सांख्यज्ञानं यस्य भूमिं क्षेत्रं प्रवर्तकम् ॥१॥ अथेति वाक्यांतरे । अजोऽपि तव वपुः केवलं दध्यौ न तु दृष्टवान् । स च स्वयं साक्षाद्यस्य तव जठराब्जाज्जातः
स भवानेव विश्वस्य सर्गादि विधत्ते न तु तव सर्गादिकर्ता कश्चिदस्ति स एवंभूतस्त्वं मे मया कथं जठरेण धृत इति त्रयाणामन्वयः । कथंभूतं वपुः । सत् व्यक्तम् । तत्र हेतुः । अंतःसलिले शया-
नम् । कीदृशम् । भूतानींद्रियाणि च अर्थाश्च शब्दादय आत्मा च मन एतन्मयमेतद्व्याप्तमित्यर्थः । कुतः । गुणानां प्रवाहो यस्मिंस्तत्कुतः । अशेषस्य कार्यकारणस्य बीजं कारणम् ॥२॥ कथंभूतो
भगवान्सर्गादि विधत्ते । गुणप्रवाहरूपेण विभक्तं वीर्यं शक्तिर्येन सः । शक्तिद्वारेण विधत्ते न साक्षादित्यर्थः । यतोऽनीहो निष्क्रियः । तर्हि कथं शक्तिद्वारेणापि सर्गादि विधत्ते । अवितथाभि-

॥ ४१ ॥ बहिर्जातविरागाय शांतचित्ताय दीयताम् ॥ निर्मत्सराय शुचये यस्याहं प्रेयसां प्रियः ॥ ४२ ॥ य इदं शृणुयादंब श्रद्धया पुरुषः सकृत ॥
यो वाऽभिधत्ते मच्चितः स ह्येति पदवीं च मे ॥ ४३ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे कापिलेये द्वात्रिंशोऽध्यायः ॥३२॥ मैत्रेय उवाच ॥
एवं निशम्य कपिलस्य वचो जनित्री सा कर्दमस्य दयिता किल देवहूतिः ॥ विस्रस्तमोहपटला तमभिप्रणम्य तुष्टाव तत्त्वविषयांकितसिद्धिभूमिम्
॥ १ ॥ देवहूतिरुवाच ॥ अथाप्यजोऽन्तःसलिले शयानं भूतेन्द्रियार्थात्ममयं वपुस्ते ॥ गुणप्रवाहं सदशेषबीजं दध्यौ स्वयं यज्जठराब्जजातः ॥२॥
स एव विश्वस्य भवान्विधत्ते गुणप्रवाहेण विभक्तवीर्यः ॥ सर्गाद्यनीहोऽवितथाभिसंधिरात्मेश्वरोऽतर्क्यसहस्रशक्तिः ॥ ३ ॥ स त्वं भृतो मे जठरेण
नाथ कथं नु यस्योदर एतदासीत् ॥ विश्वं युगांते वटपत्र एकः शेते स्म मायाशिशुरंघ्रिपानः ॥ ४ ॥ त्वं देहतंत्रः प्रशमाय पाप्मनां
निदेशभाजां च विभो विभूतये ॥ यथाऽवतारास्तव सूकरादयस्तथाऽयमप्यात्मपथोपलब्धये ॥ ५ ॥ यन्नामधेयश्रवणानुकीर्तनाद्यत्प्रह्वणाद्यत्स्मरणा-
दपि क्वचित् ॥ श्वादोऽपि सद्यः सवनाय कल्पते कुतः पुनस्ते भगवन्नु दर्शनात् ॥६॥ अहो बत श्वपचोऽतो गरीयान्यज्जिह्वाग्रे वर्तते नाम तुभ्यम् ॥

संधिः सत्यसंकल्पः । किमर्थं विधत्ते । आत्मनां जीवानामीश्वरः जीवानां भोगार्थमित्यर्थः । ननु कथं विचित्रान्भोगानेक एव विदध्यात्तत्राह । अतर्क्याः सहस्रमपरिमिताः शक्तयो यस्य ॥ ३ ॥
किंच प्रलये यस्योदरे एतद्विश्वमासीत्स त्वं मया जठरेण कथं भृतः । ननु शिशौ मयि किमेतदुच्यते तत्राह । वटपत्र इति । अंघ्रि पादांगुष्ठं पिबतीत्यंघ्रिपानः । इदमपि शिशुत्वं तद्वदेव मायेति
भावः ॥४॥ अथवा न त्वं मयाऽपत्यांतरमिव जठरे भृतः किंतु वराहाद्यवतारवदिच्छयैवाविर्भूतोऽसीत्याह । त्वं देहतंत्रो देहपरिकरः स्वीकृतमूर्तिरसि । पाप्मनां दुष्टानाम् । निदेशभाजामाज्ञानु-
वर्तिनां विभूतये समृद्धये आत्मपथोपलब्धये ज्ञानमार्गप्रदर्शनाय ॥५॥ अतस्त्वद्दर्शनादहं कृतार्थाऽस्मीति कैमुत्यन्यायेनाह । यन्नामधेयस्य श्रवणमनुकीर्तनं च तस्मात् क्वचित्कदाचिदपि श्वान-
त्तीति श्वादः श्वपचः सोऽपि सवनाय सोमयागाय कल्पते योग्यो भवति । अनेन पूज्यत्वं लक्ष्यते ॥६॥ तदुपपादयति । अहो बतेत्याश्चर्ये । यस्य जिह्वाग्रे तव नाम वर्तते स श्वपचोऽप्यतोऽस्मादेव
हेतोर्गरीयान् । यद्यस्माद्वर्तते अत इति वा । कुत इत्यत आह । त एव तपस्तेपुः तपः कृतवंतः जुहुवुर्होमं कृतवंतः सस्नुस्तीर्थेषु स्नाताः आर्यास्त एव सदाचाराः ब्रह्म वेदमनूचुरधीतवंतः । त्वन्नामकीर्तनं

तपश्चार्थंतर्भूतमतस्ते पुण्यतमा इत्यर्थः । यद्वा । जन्मांतरे तैस्तपोहोमादि सर्वं कृतमिति त्वन्नामकीर्तनमहाभाग्योदयादवगम्यत इत्यर्थः ॥७॥ प्रत्यक्स्रोतसि प्रत्याहृते आत्मनि मनसि संविभाव्यं संचिंत्यम् । वेदा गर्भे यस्य सः ॥८॥ अविक्लवया गंभीरया वाचा ॥ ९ ॥ ते तव सुसेव्येन मे मयोदितेन आस्थितेनानुष्ठितेन परां काष्ठां जीवन्मुक्तिमवरोत्स्यसि प्राप्स्यसि ॥ १० ॥ यायाः यास्यसि । अतद्विदो मन्मतमविद्वांसः ॥ ११ ॥ अनुमतोऽनुज्ञातः ॥१२॥ सरस्वत्या आपीडे पुष्पमुकुटतुल्ये । सरस्वत्येति पाठे मुकुटेनेव संवेष्टिते बिंदुसरसि समाहिता बभूव ॥१३॥ प्रजापतेः कथंभूता सती समाहिता तदाह । अभीक्ष्णं त्रिषवणमवगाहः स्नानं तेन कपिशान्पिशंगान्स्वत एव कुटिलानलकान्केशांस्तथाऽऽत्मानं देहं चीरधारिणं कृशं च बिभ्रती सती ॥ १४ ॥

तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृणंति ये ते ॥ ७ ॥ तं त्वामहं ब्रह्म परं पुमांसं प्रत्यक्स्रोतस्यात्मनि संविभाव्यम् ॥ स्वतेजसा ध्वस्तगुणप्रवाहं वंदे विष्णुं कपिलं वेदगर्भम् ॥ ८ ॥ मैत्रेय उवाच ॥ ईडितो भगवानेवं कपिलाख्यः परः पुमान् ॥ वाचा विक्लवयेत्याह मातरं मातृवत्सलः ॥ ९ ॥ कपिल उवाच ॥ मार्गेणानेन मातस्ते सुसेव्येनोदितेन मे ॥ आस्थितेन परां काष्ठामचिरादवरोत्स्यसि ॥ १० ॥ श्रद्धस्वैतन्मतं मह्यं जुष्टं यद्ब्रह्मवादिभिः ॥ येन मामभवं याया मृत्युमृच्छंत्यतद्विदः ॥ ११ ॥ मैत्रेय उवाच ॥ इति प्रदर्श्य भगवान्सतीं तामात्मनो गतिम् ॥ स्वमात्रा ब्रह्मवादिन्या कपिलोऽनुमतो ययौ ॥ १२ ॥ सा चापि तनयोक्तेन योगादेशेन योगयुक् ॥ तस्मिन्नाश्रम आपीडे सरस्वत्याः समाहिता ॥ १३ ॥ अभीक्ष्णावगाहकपिशान् जटिलान्कुटिलालकान् ॥ आत्मानं चोग्रतपसा बिभ्रती चीरिणं कृशम् ॥ १४ ॥ प्रजापतेः कर्दमस्य तपोयोगविजृम्भितम् ॥ स्वगार्हस्थ्यमनौपम्यं प्रार्थ्यं वैमानिकैरपि ॥ १५ ॥ पयःफेननिभाः शय्या दांता रुक्मपरिच्छदाः ॥ आसनानि च हैमानि सुस्पर्शास्तरणानि च ॥ १६ ॥ स्वच्छस्फटिककुड्येषु महामारकतेषु च ॥ रत्नप्रदीपा आभांति ललनारत्नसंयुताः ॥ १७ ॥ गृहोद्यानं कुसुमितै रम्यं बह्वमरद्रुमैः ॥ कूजद्विहंगमिथुनं गायन्मत्तमधुव्रतम् ॥ १८ ॥ यत्र प्रविष्टमात्मानं विबुधानुचरा जगुः ॥ वाप्यामुत्पलगन्धिन्यां कर्दमेनोपलालितम् ॥ १९ ॥ हित्वा तदीप्सिततममप्याखंडलयोषिताम् ॥ किंचिच्चकार वदनं पुत्रविश्लेषणातुरा ॥ २० ॥ वनं प्रव्रजिते पत्यावपत्यविरहातुरा ॥ ज्ञाततत्त्वाऽप्यभून्नष्टे वत्से गौरिव वत्सला ॥ २१ ॥ तमेव ध्यायती देवमपत्यं कपिलं हरिम् ॥ बभूवाचरितो वत्स निस्पृहा तादृशे गृहे ॥ २२ ॥ ध्यायती भगवद्रूपं यदाह ध्यानगोचरम् ॥ सुतः प्रसन्नवदनं समस्तव्यस्तचिंतया ॥२३॥ भक्तिप्रवाहयोगेन वैराग्येण बलीयसा ॥ युक्तानुष्ठानजातेन

कर्दमस्य तपोयोगाभ्यां विजृम्भितमतिशयितं स्वगार्हस्थ्यं हित्वा पुत्रभूतेश्वरविरहातुरा सती वदनं किंचिदनिर्वाच्यं शोकव्याकुलं चकारेति पष्ठेनान्वयः ॥१५॥ यत्र गार्हस्थ्ये क्षीरफेननिभा मृदुशुभ्राः शय्या आस्तरणान्याभांति दन्तघटिता मंचकाश्च स्वर्णमयाः परिकराः आसनानि पीठादीनि सुस्पर्शान्यास्तरणानि येषु ॥१६॥१७॥ बहुभिरमरद्रुमै रम्यम् ॥ १८ ॥ यत्रोद्याने प्रविष्टमात्मानं देवहूतिम् ॥ १९॥ आखंडल इंद्रस्तस्य या योषितस्तासामपीप्सिततमं प्राप्तमिष्टतमं तद्धित्वा तत्राभिमानं त्यक्त्वा ॥२०॥ सुहृद्वियोगस्य दुःसहतामाह । वनमिति। नष्टे वत्से वत्सला गौरिवाभूत् ॥ २१ ॥ विरहकृतध्यानफलमाह । निःस्पृहा निर्वासना । वत्स विदुर ॥ २२ ॥ ततः स्वसुतः कपिलो यदाह तद्भगवतो रूपं ध्यायती तदाऽऽत्मानं च विश्वतोमुखं सर्वगतं ध्यायती

ब्रह्मण्यवस्थितमतिर्बभूवेति पूर्वस्यैवानुषंगः । केन ध्यायती विशुद्धेनात्मना मनसा ॥ २३ ॥ विशुद्धौ कारणान्याह । भक्तिप्रवाहरूपेण योगेन वैराग्येण च युक्तानुष्ठानेन जातं यज्ज्ञानं तेन च। युक्तानुष्ठानं च गीतासूक्तम् । युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु॥ युक्तस्वप्नावबोधस्य योगो भवति दुःखहा इति। ब्रह्महेतुना ब्रह्मत्वापादकेन ॥२४॥ विश्वतोमुखत्वे हेतुः। स्वानुभूत्या स्वरूपप्रकाशेन तिरोभूतम् । मायागुणैर्विशेषणं परिच्छेदो यस्य ॥ २५ ॥ कथंभूते ब्रह्मणि आत्मनां जीवानां संश्रये भगवति तस्य जीवन्मुक्तिमाह।सार्धैस्त्रिभिः। तदा च निवृत्ता जीवापत्तिर्जीवभावो यस्यास्तस्या भावस्तत्त्वं तस्मात् । विगतक्लेशा प्राप्तनिर्वृतिश्च सत्यात्मानं देहं न सस्मारेत्युत्तरेणान्वयः ॥ २६ ॥ ननु तथापि गुणानां विद्यमानत्वात्कथं स्मरणं तत्राह। नित्यारूढो लब्धप्रतिष्ठः समाधिर्यस्यास्तस्याभावस्तत्त्वं तस्मात् । परावृत्तः शांतो गुणनिमित्तो भ्रमो यस्याः सा ॥२७॥ परतः पराभिरेव कर्दमसृष्टविद्याधरीभिः पोषः पोषणं यस्य आधिर्मनोग्लानिस्तदसंभवादकृशः

ज्ञानेन ब्रह्महेतुना ॥ २४ ॥ विशुद्धेन तदाऽऽत्मानमात्मना विश्वतोमुखम् ॥ स्वानुभूत्या तिरोभूतमायागुणविशेषणम् ॥ २५ ॥ ब्रह्मण्यवस्थितमतिर्भगवत्यात्मसंश्रये ॥ निवृत्तजीवापत्तित्वात्क्षीणक्लेशाप्तनिर्वृतिः ॥ २६ ॥ नित्यारूढसमाधित्वात्परावृत्तगुणभ्रमा ॥ न सस्मार तदाऽऽत्मानं स्वप्नेऽदृष्टमिवोत्थितः ॥ २७ ॥ तद्देहः परतः पोषोऽप्यकृशश्चाध्यसंभवात् ॥ बभौ मलैरवच्छन्नः सधूम इव पावकः ॥ २८ ॥ स्वांगं तपोयोगमयं मुक्तकेशं गतांबरम् ॥ दैवगुप्तं न बुबुधे वासुदेवप्रविष्टधीः ॥ २९ ॥ एवं सा कपिलोक्तेन मार्गेणाचिरतः परम् ॥ आत्मानं ब्रह्म निर्वाणं भगवंतमवाप ह ॥ ३० ॥ तद्वीरासीत्पुण्यतमं क्षेत्रं त्रैलोक्यविश्रुतम् ॥ नाम्ना सिद्धपदं यत्र सा संसिद्धिमुपेयुषी ॥ ३१ ॥ तस्यास्तद्योगविधुतमार्त्यं मर्त्यमभूत्सरित् ॥ स्रोतसां प्रवरा सौम्य सिद्धिदा सिद्धसेविता ॥ ३२ ॥ कपिलोऽपि महायोगी भगवान्पितुराश्रमात् ॥ मातरं समनुज्ञाप्य प्रागुदीचीं दिशं ययौ ॥ ३३ ॥ सिद्धचारणगंधर्वैर्मुनिभिश्चाप्सरोगणैः ॥ स्तूयमानः समुद्रेण दत्तार्हणनिकेतनः ॥ ३४ ॥ आस्ते योगं समास्थाय सांख्याचार्यैरभिष्टुतः ॥ त्रयाणामपि लोकानामुपशांत्यै समाहितः ॥ ३५ ॥ एतन्निगदितं तात यत्पृष्टोऽहं तवानघ ॥ कपिलस्य च संवादो देवहूत्याश्च पावनः ॥ ३६ ॥ य इदमनुशृणोति योऽभिधत्ते कपिलमुनेर्मतमात्मयोगगुह्यम् ॥ भगवति कृतधीः सुपर्णकेतावुपलभते भगवत्पदारविंदम् ॥ ३७ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे कापिलेयोपाख्याने त्रयस्त्रिंशत्तमोऽध्यायः ॥ ३३ ॥ श्रीनारायणार्पणमस्तु ॥

मलैरवच्छन्नोऽपि बभौ ॥ २८ ॥ दैवगुप्तमारब्धकर्मपालितम् ॥ २९ ॥ निर्वाणं नित्यमुक्तम् ॥३०॥ हे वीर विदुर । उपेयुषी प्राप्ता ॥ ३१ ॥ हे सौम्य ! तस्यास्तन्मर्त्यं शरीरं सरिदभूत् । कथंभूतम् । योगेन विधुता विलीना मार्त्या दैहिका धातुमला यस्य ॥३२॥ कपिलोऽपि यथावित्युक्तं तदेव प्रपंचयति । कपिलोऽपीति त्रिभिः । समनुज्ञाप्यानुज्ञां संप्राप्य ॥३३॥ दत्तमर्हणमर्घ्यं निकेतनं च यस्मै ॥ ३४ ॥ उपशांत्यर्थं समाहित आस्ते ॥३५॥ प्रकरणार्थमुपसंहरति । एतदिति । तव त्वया ॥३६॥ एतच्छ्रवणकीर्तनफलमाह । य इति । सुपर्णकेतौ गरुडध्वजे उपलभते प्राप्नोति ॥ ३७ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे श्रीधरस्वामिविरचितायां भावार्थदीपिकायां टीकायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

समाप्तोऽयं तृतीयः स्कन्धः ।

इति श्रीधरीटीकासहिते-

श्रीमद्भागवते तृतीयस्कन्धः समाप्तः ।

अथ श्रीधरीटीकासहिते-

श्रीमद्भागवते चतुर्थस्कन्धः प्रारभ्यते ।

॥ श्रीगणेशाय: नमः ॥ नमः श्रीपरमहंसास्वादितचरणकमलचिन्मकरंदाय भक्तजनमानसनिवासाय श्रीरामचन्द्राय ॥ अथैकत्रिंशदध्यायैर्विसर्गस्तुर्य इर्यते ॥ विसर्गस्त्वीश्वराधीनैर्ब्रह्ममन्वादिभिः कृतः ॥१॥ तत्र तु प्रथमेऽध्याये मनुकन्यान्वयाः पृथक् ॥ वर्ण्यंते यत्र यज्ञादिमूर्तिभिः प्रभवो हरेः ॥२॥ मनुकन्यान्वयं विस्तरेण वक्तुमाह । मनोस्त्विति । चकाराद्द्वौ पुत्रौ च ॥ १ ॥ तुशब्दादन्यतोऽपि पुत्रलाभः सूचितस्तद्दर्शयितुमाह । पुत्रिकाधर्ममाश्रित्येति । अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् ॥ अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति भाषाबंधेन कन्यादानं पुत्रिकाधर्मः । स चाभ्रातृकायां कन्यायां पुत्रार्थिन एव प्रसिद्धस्तथापि पुत्रबाहुल्यकामस्तथा कृतवानित्याह । भ्रातृमतीमपीति ॥२॥ मिथुनं पुरुषं स्त्रियं च। समाधिना ईश्वरध्यानेन ॥ ३ ॥ भूतेर्लक्ष्म्या अंशभूता अतस्तयोर्विवाहो न विरुद्ध इति भावः ॥ ४ ॥ पुत्र्या आकूतेः पुत्रं यज्ञम् ॥ ५ ॥ यजुषां यज्ञानां मंत्राणां वा पतिर्विष्णुः ॥६॥ द्विषट् द्वादश ॥ ७ ॥

॥ श्रीगणेशायः नमः ॥ मैत्रेय उवाच ॥ मनोस्तु शतरूपायां तिस्रः कन्याश्च जज्ञिरे ॥ आकूतिर्देवहूतिश्च प्रसूतिरिति विश्रुताः ॥ १ ॥ आकूतिं रुचये प्रादादपि भ्रातृमतीं नृपः ॥ पुत्रिकाधर्ममाश्रित्य शतरूपानुमोदितः ॥ २ ॥ प्रजापतिः स भगवान् रुचिस्तस्यामजीजनत् ॥ मिथुनं ब्रह्मवर्चस्वी परमेण समाधिना ॥ ३ ॥ यस्तयोः पुरुषः साक्षाद्विष्णुर्यज्ञस्वरूपधृक् ॥ या स्त्री सा दक्षिणा भूतेरंशभूताऽनपायिनी ॥ ४ ॥ आनिन्ये स्वगृहं पुत्र्याः पुत्रं विततरोचिषम् ॥ स्वायंभुवो मुदा युक्तो रुचिर्जग्राह दक्षिणाम् ॥ ५ ॥ तां कामयानां भगवानुवाह यजुषां पतिः ॥ तुष्टायां तोषमापन्नोऽजनयद्द्वादशात्मजान् ॥६॥ तोषः प्रतोषः संतोषोः भद्रः शांतिरिडस्पतिः ॥ इध्मः कविर्विभुः स्वह्नः सुदेवो रोचनो द्विषट् ॥७॥ तुषिता नाम ते देवा आसन्स्वायंभुवांतरे ॥ मरीचिमिश्रा ऋषयो यज्ञः सुरगणेश्वरः ॥ ८ ॥ प्रियव्रतोत्तानपादौ मनुपुत्रौ महौजसौ ॥ तत्पुत्रपौत्रनप्तृणामनुवृत्तं तदन्तरम् ॥ ९ ॥ देवहूतिमदात्तात कर्दमायात्मजां मनुः ॥ तत्संबंधि श्रुतप्रायं भवता गदतो मम ॥१०॥ दक्षाय ब्रह्मपुत्राय प्रसूतिं भगवान्मनुः ॥ प्रायच्छद्यत्कृतः सर्गस्त्रिलोक्यां विततो महान् ॥११॥ याः कर्दमसुताः प्रोक्ता नव ब्रह्मर्षिपत्नयः ॥ तासां प्रसूतिप्रसवं प्रोच्यमानं निबोध मे ॥ १२ ॥ पत्नी मरीचेस्तु कला सुषुवे कर्दमात्मजा ॥ कश्यपं पूर्णिमानं च ययोरापूरितं जगत् ॥ १३ ॥ पूर्णिमाऽसूत विरजं विश्वगं च परंतप ॥ देवकुल्यां हरेः पादशौचाद्याऽभूत्सरिद्दिवः ॥ १४ ॥ अत्रेः पत्न्यनसूया त्रीन् जज्ञे शुयशसः सुतान् ॥ दत्तं दुर्वाससं सोममात्मेशब्रह्मसंभवान् ॥ १५ ॥ विदुर

प्रसंगात्स्वायंभुवमन्वंतरगतं षट्कमाह । तुषिता इति द्वाभ्याम् । मन्वंतरं मनुर्देवा मनुपुत्राः सुरेश्वरः ॥ ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते । इति वक्ष्यति ॥ तत्र स्वायंभुवो मनुः । तुषिता देवाः । मरीचिप्रमुखाः सप्तर्षयः । यज्ञो हरेरवतारः स एव सुरगणेश्वर इंद्रः ॥८॥ प्रियव्रतोत्तानपादौ मनुपुत्रौ पृथ्वीपालकौ तदेवं यज्ञस्य द्वैरूप्येण षड्विधत्वम् । तयोः पुत्रपौत्रनप्तृणां वंशैरनुवृत्तं व्याप्तं पालितं तन्मन्वंतरम् ॥ ९ ॥ श्रुतप्रायं बाहुल्येन श्रुतम् । तत्कन्यावंशानामश्रुतत्वात्प्रायग्रहणम् ॥ १० ॥ ११ ॥ प्रसूतिप्रसवं पुत्रपौत्रादिभिर्विस्तारम् ॥१२॥ ययोर्वंशेनापूरितम् ॥१३॥ कश्यपस्य वंशं षष्ठे वक्ष्यति । द्वितीयस्य वंशमाह । पूर्णिमेति । देवकुल्यां नाम कन्यां च । हरेः पादक्षालनाज्जन्मांतरे या दिवः सरिद्गंगाऽभूत् ॥१४॥ आत्मेशब्रह्मसंभवान्विष्णुरुद्रब्रह्मणामंशैः

संभूतान् ॥ १५ ॥ किंचित्किंस्वित् । किं कर्तुमिच्छव इत्यर्थः ॥१६॥ ऋक्षं नाम कुलाद्रिम् । तपसि स्थितः सन् ॥१७॥ तस्मिन्कुलाद्रौ । प्रसूनानां स्तबका येषु पलाशाशोकेषु तेषां कानने । निर्विन्ध्या नाम नदी तस्याः स्रवद्भिर्वाभिरुद्घुष्टे नादिते॥१८॥१९॥२०॥ प्राणायाम एव एधः संदीपको यस्य तेन मुनेर्मूर्ध्नो निर्गतेनाग्निना तप्यमानं समीक्ष्य तदाश्रमपदं ययुरित्युत्तरेणान्वयः ॥२१॥ अप्सरःप्रमुखैर्वितायमानं विस्तार्यमाणं यशो येषां ते ॥ २२ ॥ तेषां प्रादुर्भावः प्राकट्यं तस्य संयोगः सन्निधिस्तेन विद्योतितं मनो यस्य । उत्तिष्ठन्नुत्कर्षेण तिष्ठन् ॥ २३ ॥ अर्हणं पुष्पादिकमंजलौ यस्य । उपतस्थे पूजयामास । वृषाद्यारूढान् स्वैःस्वैश्चिह्नैस्त्रिशूलकमंडलुचक्रादिभिः ॥ २४ ॥ कृपयाऽवलोको यस्मिन् हसच्च तद्वदनं च तेनोपलंभितान्प्रसन्नत्वेन ज्ञापितान् । तेषां

उवाच ॥ अत्रेर्गृहे सुरश्रेष्ठाः स्थित्युत्पत्त्यंतहेतवः ॥ किंचिच्चिकीर्षवो जाता एतदाख्याहि मे गुरो ॥ १६ ॥ मैत्रेय उवाच ॥ ब्रह्मणा नोदितः सृष्टावत्रिर्ब्रह्मविदां वरः ॥ सह पत्न्या ययावृक्षं कुलाद्रिं तपसि स्थितः ॥ १७ ॥ तस्मिन्प्रसूनस्तबकपलाशाशोककानने ॥ वार्भिः स्रवद्भिरुद्घुष्टे निर्विंध्यायाः समंततः ॥ १८ ॥ प्राणायामेन संयम्य मनो वर्षशतं मुनिः ॥ अतिष्ठदेकपादेन निर्द्वंद्वोऽनिलभोजनः ॥ १९ ॥ शरणं तं प्रपद्येऽहं य एव जगदीश्वरः ॥ प्रजामात्मसमां मह्यं प्रयच्छत्विति चिंतयन् ॥ २० ॥ तप्यमानं त्रिभुवनं प्राणायामैधसाग्निना ॥ निर्गतेन मुनेर्मूर्ध्नः समीक्ष्य प्रभवस्त्रयः ॥ २१ ॥ अप्सरोमुनिगंधर्वसिद्धविद्याधरोरगैः ॥ वितायमानयशसस्तदाश्रमपदं ययुः ॥ २२ ॥ तत्प्रादुर्भावसंयोगविद्योतितमना मुनिः ॥ उत्तिष्ठन्नेकपादेन ददर्श विबुधर्षभान् ॥ २३ ॥ प्रणम्य दंडवद्भूमावुपतस्थेऽर्हणांजलिः ॥ वृषहंससुपर्णस्थान्स्वैः स्वैश्चिह्नैश्च चिह्नितान् ॥ २४ ॥ कृपावलोकेन हसद्वदनेनोपलंभितान् ॥ तद्रोचिषा प्रतिहते निमील्य पुनरक्षिणी ॥ २५ ॥ चेतस्तत्प्रवणं युंजन्नस्तावीत्संहताजलिः ॥ श्लक्ष्णया सूक्तया वाचा सर्वलोकगरीयसः ॥ २६ ॥ अत्रिरुवाच ॥ विश्वोद्भवस्थितिलयेषु विभज्यमानैर्मायागुणैरनुयुगं विगृहीतदेहाः ॥ ते ब्रह्मविष्णुगिरिशाः प्रणतोऽस्म्यहं वस्तेभ्यः क एव भवतां म इहोपहूतः ॥ २७ ॥ एको मयेह भगवान्विविधप्रधानैश्चित्तीकृतः प्रजननाय कथं नु यूयम् ॥ अत्रागतास्तनुभृतां मनसोऽपि दूरा ब्रूत प्रसीदत महानिह विस्मयो मे ॥ २८ ॥ मैत्रेय उवाच ॥ इति तस्य वचः श्रुत्वा त्रयस्ते विबुधर्षभाः ॥ प्रत्याहुः श्लक्ष्णया वाचा प्रहस्य तमृषिं प्रभो ॥ २९ ॥ देवा ऊचुः ॥ यथा कृतस्ते संकल्पो भाव्यं तेनैव नान्यथा ॥ सत्संकल्पस्य ते ब्रह्मन्यद्वै ध्यायति ते वयम्

रोचिषा दीप्त्या ॥ २५ ॥ श्लक्ष्णया मधुरया । सूक्तया गंभीरार्थया ॥ २६ ॥ अनुयुगं कल्पे कल्पे विभज्य गृहीतो देहो यैस्ते प्रसिद्धा ब्रह्मविष्णुगिरिशा यूयम् । वो युष्मान्प्रणतोऽस्मि । तेभ्यः सकाशादेक एव मे मयोपहूतः । शरणं तं प्रपद्ये इत्येकस्यैव निर्दिष्टत्वात् । स च युष्मासु क इति युष्माभिरेव कथ्यतामित्यर्थः ॥ २७ ॥ अस्य प्रपंचः । एक इति । विविधैः प्रधानैरुपचारैः । विबुधप्रधान इति वा पाठः । प्रजननाय पुत्रोत्पत्त्यै चित्तीकृतश्चित्तेनैक्यं नीतः । मनसोऽसि दूरा अगोचराः संतः कथं नु त्रयोऽप्यत्रागताः ॥२८॥२९॥ ते त्वया यथा कृतः संकल्पस्तेन तथैव भाव्यं नान्यथा । यतः सत्संकल्पस्य ते संकल्पः । तर्हि कथमेकस्मिन् ध्यायमाने त्रयः प्रतीताः स्थ तत्राहुः । यदेकं जगदीश्वराख्यं तत्त्वं भवान् ध्यायति त एते वयं त्रयोऽपि तदेवैकं तत्त्वं

नास्माकं भेदोऽस्तीत्यर्थः ॥ ३० ॥ विस्रप्स्यंति विस्तारयिष्यंति। अंतर्भूतणिजर्थस्य सृप्लृ गतावित्यस्य रूपम् ॥ ३१ ॥ ताभ्यां सम्यक् सभाजिताः पूजिताः संतः ततः स्थानात्प्रतिजग्मुः ॥३२॥ अंगिरसो ब्रह्मणस्तृतीयपुत्रस्य। निबोध बुद्धयस्व ॥ ३३ ॥ ताः कन्या निर्दिशति। सिनीवालीति ॥ ३४ ॥ ३५ ॥ पुलस्त्यो हविर्भुवि पत्न्यामित्यन्वयः । सोऽगस्त्यः दहाग्निः जठराग्निः । विश्रवाश्च पुलस्त्यस्य सुत इति शेषः ॥ ३६ ॥ तस्य विश्रवस इडविडायां जातः सुतः कुबेरः । अन्यस्यां भार्यायां केशिन्यां रावणादयस्त्रयः सुताः ॥३७॥ ३८ ॥ ज्वलतः प्रकाशमानान् ॥३९॥

॥ ३० ॥ अथास्मदंशभूतास्ते आत्मजा लोकविश्रुताः ॥ भवितारोऽङ्ग भद्रं ते विस्रप्स्यंति च ते यशः ॥ ३१ ॥ एवं कामवरं दत्त्वा प्रतिजग्मुः सुरेश्वराः ॥ सभाजितास्तयोः सम्यग्दंपत्योर्मिषतोस्ततः ॥३२॥ सोमोऽभूद्ब्रह्मणोंऽशेन दत्तो विष्णोस्तु योगवित् ॥ दुर्वासाः शंकरस्यांशो निबोधांगिरसः प्रजाः ॥३३॥ श्रद्धा त्वंगिरसः पत्नी चतस्रोऽसूत कन्यकाः ॥ सिनीवाली कुहू राका चतुर्थ्यनुमतिस्तथा ॥ ३४ ॥ तत्पुत्रावपरावास्तां ख्यातौ स्वारोचिषेऽन्तरे ॥ उतथ्यो भगवान्साक्षाद्ब्रह्मिष्ठश्च बृहस्पतिः ॥ ३५ ॥ पुलस्त्योऽजनयत्पत्न्यामगस्त्यं च हविर्भुवि ॥ सोऽन्यजन्मनि दहाग्निर्विश्रवाश्च महातपाः ॥ ३६ ॥ तस्य यक्षपतिर्देवः कुबेरस्त्विडविडासुतः ॥ रावणः कुंभकर्णश्च तथाऽन्यस्यां विभीषणः ॥ ३७ ॥ पुलहस्य गतिर्भार्या त्रीनसूत सती सुतान् ॥ कर्मश्रेष्ठं वरीयांसं सहिष्णुं च महामते ॥ ३८ ॥ क्रतोरपि क्रिया भार्या वालखिल्यानसूयत ॥ ऋषीन् षष्टिसहस्राणि ज्वलतो ब्रह्मतेजसा ॥ ३९ ॥ ऊर्जायां यज्ञिरे पुत्रा वसिष्ठस्य परंतप ॥ चित्रकेतुप्रधानास्ते सप्त ब्रह्मर्षयोऽमलाः ॥ ४० ॥ चित्रकेतुः सुरोचिश्च विरजा मित्र एव च ॥ उल्बणो वसुभृद्यानो द्युमान् शक्त्यादयोऽपरे ॥ ४१ ॥ चित्तिस्त्वथर्वणः पत्नी लेभे पुत्रं धृतव्रतम् ॥ दध्यञ्चमश्वशिरसं भृगोर्वंशं निबोध मे ॥४२॥ भृगुः ख्यात्यां महाभागः पत्न्यां पुत्रानजीजनत् ॥ धातारं च विधातारं श्रियं च भगवत्पराम् ॥ ४३ ॥ आयतिं नियतिं चैव सुते मेरुस्तयोरदात् ॥ ताभ्यां तयोरभवतां मृकंडः प्राण एव च ॥ ४४ ॥ मार्कण्डेयो मृकंडस्य प्राणाद्वेदशिरा मुनिः ॥ कविश्च भार्गवो यस्य भगवानुशना सुतः ॥ ४५ ॥ त एते मुनयः क्षत्तर्लोकान्सर्गैरभावयन् ॥ एष कर्दमदौहित्रसंतानः कथितस्तव ॥ ४६ ॥ शृण्वतः श्रद्दधानस्य सद्यः पापहरः परः ॥ प्रसूतिं मानवीं दक्ष उपयेमे ह्यजात्मजः ॥ ४७ ॥ तस्यां ससर्ज दुहितॄः षोडशामललोचनाः ॥ त्रयोदशादाद्धर्माय तथैकामग्नये विभुः ॥ ४८ ॥ पितृभ्य एकां युक्तेभ्यो भवायैकां भवच्छिदे ॥ श्रद्धा मैत्री दया शांतिस्तुष्टिः पुष्टिः क्रियोन्नतिः ॥ ४९ ॥ बुद्धिर्मेधा तितिक्षा ह्रीमूर्तिर्धर्मस्य पत्नयः ॥ श्रद्धाऽसूत शुभं मैत्री प्रसादमभयं दया ॥ ५० ॥ शांतिः सुखं मुदं तुष्टिः स्मयं पुष्टिरसूयत ॥ योगं क्रियोन्नतिर्दर्पमर्थं

चित्रकेतुप्रमुखा जज्ञिरे ते च सप्तर्षयो जाताः ॥ ४० ॥ तानेवाह । चित्रकेतुरिति । वसुभृद्यानो नामैकः । शक्त्यादयोऽपरेऽन्यस्याः पुत्राः ॥ ४१ ॥ ४२ ॥ ख्यात्यां पत्न्याम् । पुत्रान्पुत्रौ पुत्रीं च । तानेवाह । धातारमिति ॥ ४३ ॥ तयोर्धातृविधात्रोः ॥ ४४ ॥ कविश्च भार्गवो भृगोः पुत्रः यस्य कवेः सुत उशना ॥ ४५ ॥ ४६ ॥ अजात्मजो ब्रह्मपुत्रः न तु प्राचेतसः ॥ ४७ ॥ ४८ ॥

युक्तेभ्यः संयतेभ्यो मिलितेभ्यो वा ॥ ४९ ॥ ५० ॥ ५१ ॥ सर्वेषां गुणानामुत्पत्तिर्यस्यां सा ॥ ५२ ॥ ५३ ॥ ५४ ॥ उपतस्थुर्भेजुः ॥ ५५ ॥ निजया मायया यस्मिन्नात्मनि खे गगने रूपभेदं गंधर्वनगरमिवेदं विश्वं विरचितम् । तस्यात्मनः प्रतिचक्षणाय प्रकाशनायात्मानं योऽद्य प्रादुश्चकार प्रकटितवांस्तस्मै पुरुषाय नमः । केन रूपेण प्रादुश्चकार । ऋषेर्मूर्तिराकारो यस्मिंस्तेन रूपेण ॥ ५६ ॥ सोऽयं नोऽस्मान्सुरगणाननल्पकरुणायुक्तेन विलोकनेन विशिष्टनेत्रेण दृश्यात्पश्यतु । कथंभूतेन । यच्छ्रीनिकेतममलमरविंदं तत्क्षिपता तिरस्कुर्वता । कथंभूतः । अनुमेयं शास्त्रतो विचार्य नत्वस्माकमपरोक्षं तत्त्वं यस्य । कथंभूतानस्मान् । स्थितेर्जगन्मर्यादाया व्यतिकरोऽन्यथात्वं तस्योपशमाय सत्त्वेन गुणेन सृष्टान् ॥ ५७ ॥ लब्धोऽवलोको यैः सुरगणैस्तैरभिष्टुतावर्चितौ संतौ





बुद्धिरसूयत ॥ ५१ ॥ मेधा स्मृतिं तितिक्षा तु क्षेमं ह्रीः प्रश्रयं सुतम् ॥ मूर्तिः सर्वगुणोत्पत्तिर्नरनारायणवृषी ॥ ५२ ॥ ययोर्जन्मन्यदो विश्वमभ्यनंदत्सुनिर्वृतम् ॥ मनांसि ककुभो वाताः प्रसेदुः सरितोऽद्रयः ॥ ५३ ॥ दिव्यवाद्यंत तूर्याणि पेतुः कुसुमवृष्टयः ॥ मुनयस्तुष्टुवुस्तुष्टा जगुर्गन्धर्वकिन्नराः ॥ ५४ ॥ नृत्यंति स्म स्त्रियो देव्य आसीत्परममंगलम् ॥ देवा ब्रह्मादयः सर्वे उपतस्थुरभिष्टवैः ॥५५॥ देवा ऊचुः ॥ यो मायया विरचितं निजयाऽऽत्मनीदं खे रूपभेदमिव तत्प्रतिचक्षणाय ॥ एतेन धर्मसदने ऋषिमूर्तिनाऽद्य प्रादुश्चकार पुरुषाय नमः परस्मै ॥ ५६ ॥ सोऽयं स्थितिव्यतिकरोपशमाय सृष्टान्सत्त्वेन नः सुरगणाननुमेयतत्त्वः ॥ दृश्याददभ्रकरुणेन विलोकनेन यच्छ्रीनिकेतममलं क्षिपताऽरविंदम् ॥ ५७ ॥ एवं सुरगणैस्तात भगवंतावभिष्टुतौ ॥ लब्धावलोकैर्ययतुरर्चितौ गंधमादनम् ॥ ५८ ॥ ताविमौ वै भगवतो हरेरंशाविहागतौ ॥ भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहौ ॥ ५९ ॥ स्वाहाऽभिमानिनश्चाग्नेरात्मजांस्त्रीनजीजनत् ॥ पावकं पवमानं च शुचिं च हुतभोजनम् ॥ ६० ॥ तेभ्योऽग्नयः समभवंश्चत्वारिंशच्च पञ्च च ॥ त एवैकोनपञ्चाशत्साकं पितृपितामहैः ॥ ६१ ॥ वैतानिके कर्मणि यन्नामभिर्ब्रह्मवादिभिः ॥ आग्नेय्य इष्टयो यज्ञे निरूप्यंतेऽग्नयस्तु ते ॥ ६२ ॥ अग्निष्वात्ता बर्हिषदः सौम्याः पितर आज्यपाः ॥ साग्नयोऽनग्नयस्तेषां पत्नी दाक्षायणी स्वधा ॥ ६३ ॥ तेभ्यो दधार कन्ये द्वे वयुनां धारिणीं स्वधा ॥ उभे ते ब्रह्मवादिन्यौ ज्ञानविज्ञानपारगे ॥ ६४ ॥ भवस्य पत्नी तु सती भवं देवमनुव्रता ॥ आत्मनः सदृशं पुत्रं न लेभे गुणशीलतः ॥ ६५ ॥ पितर्यप्रतिरूपे स्वे भवायानागसे रुषा ॥ अप्रौढैवात्मनात्मानमजहाद्योगसंयुता ॥ ६६ ॥ इति श्रीमद्भा-

ययतुः ॥ ५८ ॥ भुवो भारस्य व्ययाय नाशाय । चकार एकवाक्यत्वार्थः तौ च सांप्रतमिहागतावित्यर्थः । तदुक्तं तंत्रे । अर्जुने तु नरावेशः कृष्णो नारायणः स्वयं इति । यदूद्वहः श्रीकृष्णः कुरूद्वहोऽर्जुनः उभावपि कृष्णनामानौ ॥ ५९ ॥ अग्न्यभिमानिनो देवान् । स्वाहा नाम तस्य भार्या । हुतभोजनमिति त्रयाणां विशेषणम् ॥ ६० ॥ पितरस्त्रयः पितामह एकस्तैः साकं सह ॥ ६१ ॥ वैतानिके वैदिके कर्मणि यज्ञे येषां नामभिरग्निदेवताका इष्टयो निरूप्यंते त एतेऽग्नयो न लौकिकाः । अतो बहूनां न वैयर्थ्यमिति भावः ॥ ६२ ॥ सौम्याः सोमपाः येषामग्नीकरणमस्ति ते साग्नयः तद्रहितास्त्वनग्नयः ॥ ६३ ॥ तयोस्तु संततिर्नाभवज्जीवन्मुक्तत्वादित्याह । उभे त इति ॥६४॥ गुणशीलत आत्मनः सदृशं देवमनुव्रताऽपि सती पुत्रं न लेभे ॥६५॥

तत्र हेतुः । स्वे पितरि दक्षेऽप्रतिरूपेऽसदृशे प्रतिकूले सतीत्यर्थः । आत्मना स्वयमेवात्मानं देहमजहात्त्यक्तवती । योगसंयुता योगमाश्रित्येति ॥६६॥ इति चतुर्थे टीकायां प्रथमोऽध्यायः ॥१॥
द्वितीये प्रथमाध्यायोपक्षिप्तभवदक्षयोः ॥ विद्वेषे वर्ण्यते हेतुर्विश्वसृड् यज्ञसंभवः ॥ १ ॥ सतीं सतीनाम्नीम् ॥ १ ॥ न चासौ कस्यचिद्द्वेषार्ह इत्याह । क इति । चराचरगुरुं जगतो दैवतं च ते को द्वेष्टि। निर्वैरत्वे हेतुः। भावे क्तः । शांतं शांतिरेव विग्रहो यस्य। कुतः आत्मन्येवारामो रतिर्यस्य तम् । यद्वा । कः प्रजापतिर्दक्षः कथं द्वेष्टि। एवंभूते तस्मिन्द्वेषोऽयुक्तोऽशक्यश्चेत्यर्थः ॥२॥ यतो हेतोर्विद्वेषः यतो विद्वेषात्प्राणांस्तत्याज एतदाख्याहि ॥ ३ ॥ तदेवाख्यातुमितिहासं प्रस्तौति । पुरेति। समेता आसन् ॥४॥ प्रविष्टं दक्षमिति शेषः। महत्सदो महतीं सभाम् ॥५॥ स्वधिष्ण्येभ्यः स्वीयासनेभ्यः ॥ ६ ॥ ७॥ प्राक् स्वोपवेशनात्पूर्वमेव निषण्णमुपविष्टं मृडं शिवम् । तदनादृतस्तेनाभ्युत्थानादिभिरकृतादरः नामृष्यन्नासहत । वामं वक्रं यथा भवति तथाऽभि-

गवते महापुराणे चतुर्थस्कंधे विदुरमैत्रेयसंवादे प्रथमोऽध्यायः ॥ १ ॥ विदुर उवाच ॥ भवे शीलवतां श्रेष्ठे दक्षो दुहितृवत्सलः ॥ विद्वेषमकरोत्कस्मादनादृत्यात्मजां सतीम् ॥ १ ॥ कस्तं चराचरगुरुं निर्वैरं शांतविग्रहम् ॥ आत्मारामं कथं द्वेष्टि जगतो दैवतं महत् ॥ २ ॥ एतदाख्याहि मे ब्रह्मन् जामातुः श्वशुरस्य च ॥ विद्वेषस्तु यतः प्राणांस्तत्यजे दुस्त्यजान्सती ॥ ३ ॥ मैत्रेय उवाच ॥ पुरा विश्वसृजां सत्रे समेताः परमर्षयः ॥ तथाऽमरगणाः सर्वे सानुगा मुनयोऽग्नयः ॥ ४ ॥ तत्र प्रविष्टमृषयो दृष्ट्वाऽर्कमिव रोचिषा ॥ भ्राजमानं वितिमिरं कुर्वंतं तन्महत्सदः ॥ ५ ॥ उदतिष्ठन्सदस्यास्ते स्वधिष्ण्येभ्यः सहाग्नयः ॥ ऋते विरिंचं शर्वं च तद्भासाऽऽक्षिप्तचेतसः ॥ ६ ॥ सदसस्पतिभिर्दक्षो भगवान्साधु सत्कृतः ॥ अजं लोकगुरुं नत्वा निषसाद तदाज्ञया ॥ ७ ॥ प्राङ्निषण्णं मृडं दृष्ट्वा नामृष्यत्तदनादृतः ॥ उवाच वामं चक्षुर्भ्यामभिवीक्ष्य दहन्निव ॥ ८ ॥ श्रूयतां ब्रह्मर्षयो मे सहदेवाः सहाग्नयः ॥ साधूनां ब्रुवतो वृत्तं नाज्ञानान्न च मत्सरात् ॥ ९ ॥ अयं तु लोकपालानां यशोघ्नो निरपत्रपः ॥ सद्भिराचरितः पंथा येन स्तब्धेन दूषितः ॥ १० ॥ एष मे शिष्यतां प्राप्तो यन्मे दुहितुरग्रहीत् ॥ पाणिं विप्राग्निमुखतः सावित्र्या इव साधुवत् ॥ ११ ॥ गृहीत्वा मृगशावाक्ष्याः पाणिं मर्कटलोचनः ॥ प्रत्युत्थानाभिवादार्हे वाचाऽप्यकृत नोचितम् ॥ १२ ॥ लुप्तक्रियायाशुचये मानिने भिन्नसेतवे ॥ अनिच्छन्नप्यदां बालां शूद्रायेवोशतीं गिरम् ॥ १३ ॥ प्रेतावासेषु घोरेषु प्रेतैर्भूतगणैर्वृतः ॥ अटत्युन्मत्तवन्नग्नो व्युप्तकेशो हसन् रुदन् ॥१४॥ चिताभस्मकृतस्नानः प्रेतस्रङ्न्रस्थिभूषणः ॥ शिवापदेशो ह्यशिवो मत्तो मत्तजनप्रियः ॥ पतिः प्रमथभूतानां तमोमात्रात्मकात्मनाम् ॥ १५ ॥ तस्मा उन्मा-

वीक्ष्य ॥८॥ मे वचनं श्रूयताम् । अज्ञानान्मत्सराच्च न ब्रुवतः ॥९॥ स्तब्धेनोचितक्रियाशून्येन । ध्वस्तेनेति पाठे भ्रष्टेन ॥१०॥ तदेवाह। एष इति। यद्यस्माद्विप्राग्निसमक्षं सावित्रीतुल्याया मे दुहितुः पाणिमग्रहीत् ॥११॥ मृगशावस्य हरिणबालस्याक्षिणीवाक्षिणी यस्याः । प्रत्युत्थानाभिवादार्हे मय्युचितं सम्मानं वाचाऽपि नाकरोत्॥१२॥ अनर्हाय कन्या दत्तेत्यनुतप्यमान आह। लुप्तक्रियायेति सार्धैश्चतुर्भिः । उशतीं देवलक्षणां गिरम् ॥१३॥ प्रेतावासेषु श्मशानेषु । व्युप्ता विकीर्णाः केशा यस्य ॥१४॥ चिताभस्मना कृतं स्नानं येन । प्रेतानां स्रजो माल्यानि यस्य सः प्रेतस्रक् । नृणामस्थीनि भूषणानि यस्य । शिव इत्यपदेशो नाममात्रं यस्य । तमोमात्रात्मकः केवलतमोरूप आत्मा स्वभावो येषाम् ॥ १५ ॥ उन्मादा भूतविशेषास्तेषां नाथाय । दुर्हृदे दुष्ट-

चित्ताय । बतेति खेदे । वास्तवस्त्वयमर्थः । लुप्ताः क्रिया यस्मिन् परब्रह्मरूपत्वात् । अतएव नास्ति शुचिर्यस्मात् । अमानिने अभिन्नसेतवे इति च छेदः । तस्य परमेश्वरस्य मदीया मानुषी कन्या कथं योग्या स्यादिति लज्जादिना दातुमनिच्छन्नपि तत्संबंधलोभेन दत्तवान् । शूद्रायेत्यनर्हत्वमात्रे दृष्टांतो न हीनत्वे पूर्वापरस्ववचनविरोधापत्तेः । एतदुक्तं भवति । यथा कश्चिच्छूद्राय वेदमर्थलोभेन ददाति तद्वदिति । प्रेतावासेष्वित्यादि सर्वं विडंबनमात्रमिति स्वयमेवाह । उन्मत्तवदिति । अन्यथोन्मत्त इत्येवावक्ष्यत् । अशिवो नास्ति शिवो यस्मात् । अमत्तोऽमत्तजनप्रिय इति छेदः । पतिः प्रमथभूतानामिति भक्तवात्सल्यमाह । तामसानामपि दोषमपनीय पातीति । नष्टानामपि शौचं शुद्धिर्यस्मात् ! दुष्टेष्वप्येते मयाऽनुकंप्या इति हृन्मनो यस्य स दुर्हृत्तस्मै । बतेति हर्षे। ब्रह्मणो वाक्याल्लज्जाभयादिकं परित्यज्य दत्तेत्यर्थः ॥ १६ ॥ अप्रतीपमप्रतिकूलं यथा भवत्येवमवस्थितमपि विनिंद्य ॥ १७ ॥ देवानां यजनसमये देवैः सह भागं न लभतां किंतु तेभ्यः पूर्वमेव लभतां अग्रभोजित्वात् । यद्वा । तेषु भुक्तवत्सु लभतां सर्वपोषकत्वात् । तत्र हेतुः । देवगणोऽधमो यस्मात्सः ॥१८॥ स दक्षस्तस्मात्स्थानाद्विनिष्क्रम्य जगाम । हे कौरव्य ॥ १९ ॥ गिरिशस्यानुगानामग्रणीर्मुख्यः । रोष एव कषायस्तेन दूषितः । आरक्तनेत्र इत्यर्थः । तस्य गिरिशस्यावाच्यतां वचनार्हतां निंद्यतामित्यर्थः । तेभ्योऽपि शापं विससर्ज ॥ २० ॥ दक्षं शपति । सार्धैस्त्रिभिः । एतन्मर्त्यं दक्षशरीरमुद्दिश्य श्रेष्ठं मत्वा । अप्रतिद्रुहि प्रतिद्रोहमकुर्वति । पृथग्दृष्टिर्भेददर्शी । तत्त्वतः परमार्थात् ॥२१॥ अज्ञत्वमेवाह । गृहेष्विति । कर्मतंत्रं कर्मपरिकरम् । वेदे ये वादा अर्थवादा अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यादयस्तैर्विपन्ना विनष्टा धीर्यस्य ॥२२॥ परो देहादिस्तमेवात्मत्वेनाभितो ध्यातुं शीलं यस्यास्तया बुद्ध्या विस्मृताऽऽत्मनो गतिस्तत्त्वं येन । अतः पशुतुल्यः । अतितरां स्त्रीकामोऽस्त्वति द्वितीयः शापः । बस्तस्य मुखमेव सुखं यस्येति तृतीयः शापः ॥२३॥ अयं च शापोऽस्यानुरूप एवेत्याह । विद्याबुद्धिः इयमेव तत्त्वविद्येति बुद्धिर्यस्य । अतो असौ जड एव । द्विजान् शपति संसरंत्विति सार्धद्वाभ्याम् । शर्वमवमन्यत इति तथा तममुं दक्षं ये चानुवर्तंते ते संसरंतु जन्ममरणाद्यनुभवंत्वित्येकः शापः ॥ २४ ॥ श्रुताया वेदरूपायाः पुष्पिण्याः पुष्पाणीवार्थवादा मनःक्षोभकत्वात् । अर्थवादबहुलाया इत्यर्थः । मधुगंधतुल्येन प्ररोचनेन मथ्ना मनःक्षोभकेनोन्मथित आत्मा मनो येषां ते संमुह्यंतु कर्मस्वासक्ता भवंत्विति द्वितीयः शापः ॥२५॥ सर्वभक्षा भक्ष्याभक्ष्यविचारशून्याः । वृत्त्यै देहादिपोषणाय धृतानि विद्यातपोव्रतानि यैः वित्तादिष्वेवारामो रतिर्येषां ते । याचकाः संतो विचरंत्विति च शापचतुष्टयम्

दनाथाय नष्टशौचाय दुर्हृदे ॥ दत्ता बत मया साध्वी चोदिते परमेष्ठिना ॥ १६ ॥ मैत्रेय उवाच ॥ विनिंद्यैवं स गिरिशमप्रतीपमवस्थितम् ॥ दक्षोऽथाप उपस्पृश्य क्रुद्धः शप्तुं प्रचक्रमे ॥ १७ ॥ अयं तु देवयजन इन्द्रोपेंद्रादिभिर्भवः ॥ सह भागं न लभतां देवैर्देवगणाधमः ॥ १८ ॥ निषिध्यमानः स सदस्यमुख्यैर्दक्षो गिरित्राय विसृज्य शापम् ॥ तस्माद्विनिष्क्रम्य विवृद्धमन्युर्जगाम कौरव्य निजं निकेतनम् ॥ १९ ॥ विज्ञाय शापं गिरिशानुगाग्रणीर्नंदीश्वरो रोषकषायदूषितः ॥ दक्षाय शापं विससर्ज दारुणं ये चान्वमोदंस्तदवाच्यतां द्विजाः ॥ २० ॥ य एतन्मर्त्यमुद्दिश्य भगवत्यप्रतिद्रुहि ॥ द्रुह्यत्यज्ञः पृथग्दृष्टिस्तत्त्वतो विमुखो भवेत् ॥२१॥ गृहेषु कूटधर्मेषु सक्तो ग्राम्यसुखेच्छया ॥ कर्मतंत्रं वितनुते वेदवादविपन्नधीः ॥ २२ ॥ बुद्ध्या पराभिध्यायिन्या विस्मृतात्मगतिः पशुः ॥ स्त्रीकामः सोऽस्त्वतितरां दक्षो बस्तमुखोऽचिरात् ॥ २३ ॥ विद्याबुद्धिरविद्यायां कर्ममय्यामसौ जडः ॥ संसरंत्विह ये चामुमनुशर्वावमानिनम् ॥ २४ ॥ गिरः श्रुतायाः पुष्पिण्या मधुगंधेन भूरिणा ॥ मथ्ना चोन्मथितात्मानः संमुह्यंतु हरद्विषः ॥ २५ ॥ सर्वभक्षा द्विजा वृत्त्यै धृतविद्यातपोव्रताः ॥ वित्तदेहेंद्रियारामा याचका विचरंत्विह ॥ २६ ॥ तस्यैवं ददतः शापं

॥ २६ ॥ प्रत्यसृजत्प्रत्यदात् । शापरूपं ब्रह्मदंडम् ॥२७॥ सच्छास्त्रस्य परिपंथिनः प्रतिकूलाः ।२८॥ सुरा गौडी पैष्टी माध्वी च । आसवतालादिसंभवं मद्यम् । द्वंद्वैक्यात्पंढत्वम् । तद्यत्र दैवं पूज्यं देवतावदादरणीयमिति वा ॥२९॥ ब्रह्म वेदम् । कथंभूतम् । सेतुं मर्यादारूपम् । तदेवाह । पुंसां वर्णाश्रमाचारवतां विधारणं धारकम् ॥३०॥ सेतुत्वं प्रपंचयति द्वाभ्याम् । एष वेदलक्षण एव शिवः पंथाः । यं पूर्वे ऋषयोऽनुसंतस्थुराश्रितवंतः । यद्यस्मिन् जनार्दनः प्रमाणं मूलम् ॥ ३१ ॥ भूतराड् भूतानां तामसानां पतिः ॥ ३२ ॥ अन्योन्यशापेनोभयोर्नाशाद्विमना इवेति । तथापि भगवदनुगृहीतानां नाशो न स्यादिति भावः ॥३३॥ ऋषभः सर्वश्रेष्ठो हरिर्यत्र इज्यः पूज्यस्तत्सत्रं सम्यग्विधाय । हे महेष्वास विदुर ॥३४॥ यत्र प्रयागेऽन्विता तत्रावभृथस्नानं कृत्वा ततः स्थानाद्ययुः ॥ ३५ ॥ इति चतुर्थे टीकायां द्वितीयोऽध्यायः ॥ २ ॥ तृतीये तु सती तात यज्ञोत्सवदिदृक्षया ॥ गमिष्यन्ती महेशेन वारिता नीतिहेतुभिः ॥ १ ॥ ध्रियमाणयोरवतिष्ठमा-

श्रुत्वा द्विजकुलाय वै ॥ भृगुः प्रत्यसृजच्छापं ब्रह्मदंडं दुरत्ययम् ॥ २७ ॥ भवव्रतधरा ये च ये च तान्समनुव्रताः ॥ पाषंडिनस्ते भवन्तु सच्छा-स्त्रपरिपंथिनः ॥ २८ ॥ नष्टशौचा मूढधियो जटाभस्मास्थिधारिणः ॥ विशंतु शिवदीक्षायां यत्र दैवं सुरासवम् ॥ २९ ॥ ब्रह्म च ब्राह्मणांश्चैव यद्यूयं परिनिंदथ ॥ सेतुं विधारणं पुंसामतः पाषंडमाश्रिताः ॥ ३० ॥ एष एव हि लोकानां शिवः पंथाः सनातनः ॥ यं पूर्वे चानुसंतस्थुर्यत्प्रमाणं जना-र्दनः ॥ ३१ ॥ तद्ब्रह्म परमं शुद्धं सतां वर्त्म सनातनम् ॥ विगर्ह्य यात पाषंडं दैवं वो यत्र भूतराट् ॥ ३२ ॥ मैत्रेय उवाच ॥ तस्यैवं वदतः शापं भृगोः स भगवान्भवः ॥ निश्चक्राम ततः किंचिद्विमना इव सानुगः ॥ ३३ ॥ तेऽपि विश्वसृजः सत्रं सहस्रपरिवत्सरान् ॥ संविधाय महेष्वास यत्रेज्य ऋषभो हरिः ॥ ३४ ॥ आप्लुत्यावभृथं यत्र गंगा यमुनयाऽन्विता ॥ विरजेनात्मना सर्वे स्वं स्वं धाम ययुस्ततः ॥ ३५ ॥ इति श्रीम-द्भागवते महापुराणे चतुर्थस्कन्धे दक्षशापो नाम द्वितीयोऽध्यायः ॥ २ ॥ मैत्रेय उवाच ॥ सदा विद्विषतोरेवं कालो वै ध्रियमाणयोः ॥ जामातुः श्वशुरस्यापि सुमहानतिचक्रमे ॥ १ ॥ यदाऽभिषिक्तो दक्षस्तु ब्रह्मणा परमेष्ठिना ॥ प्रजापतीनां सर्वेषामाधिपत्ये स्मयोऽभवत् ॥ २ ॥ इष्ट्वा स वाजपेयेन ब्रह्मिष्ठानभिभूय च ॥ बृहस्पतिसवं नाम समारेभे क्रतूत्तमम् ॥ ३ ॥ तस्मिन् ब्रह्मर्षयः सर्वे देवर्षिपितृदेवताः ॥ आसन्कृतस्वस्त्ययना-स्तत्पत्न्यश्च सभर्तृकाः ॥ ४ ॥ तदुपश्रुत्य नभसि खेचराणां प्रजल्पताम् ॥ सती दाक्षायणी देवी पितुर्यज्ञमहोत्सवम् ॥ ५ ॥ व्रजंतीः सर्वतो दिग्भ्य उपदेववरस्त्रियः ॥ विमानयानाः सप्रेष्ठा निष्ककंठीः सुवाससः ॥ ६ ॥ दृष्ट्वा स्वनिलयाभ्याशे लोलाक्षीर्मृष्टकुण्डलाः ॥ पतिं भूतपतिं देवमौत्सुक्या-

नयोः । धृङ् अवस्थान इत्यस्मात् ॥१॥ यद्यपि रुद्रविहीनो यज्ञो नास्त्येव तथापि दक्षस्य रुद्रपरित्यागो द्वेषाद्गर्वाच्च । तत्र द्वेष हेतुरुक्तः । गर्वे हेतुमाह । यदा तु प्रजापतीनामाधिपत्येऽभि-षिक्तस्तदा तस्य स्मयो गर्वोऽभवत् ॥ २ ॥ गर्वादेव ब्रह्मिष्ठान्सेश्वरानभिभूय तिरस्कृत्य । वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति श्रुतेर्वाजपेयेनेष्ट्वा समारेभे ॥ ३ ॥ कृतस्वस्त्ययनाः कृतमंगलाः सभर्तृका इति दक्षिणादिभिः प्रथममर्हितानामपि पत्न्यर्हणमुक्तम् ॥ ४ ॥ तत्तदा खेचराणां प्रजल्पतां सतां पितृयज्ञमहोत्सवं श्रुत्वा तत्र व्रजंतीरुपदेवानां गंधर्वादीनां वरस्त्रियश्च स्वस्य निलयस्याभ्याशे समीपे दृष्ट्वौत्सुक्यात्पतिमभ्यभाषतेति त्रयाणामन्वयः ॥ ५ ॥ कथंभूताः स्त्रियो दृष्ट्वा । विमानानि यानानि यासां ताः । प्रेष्ठैः सहिताः । निष्काणि पदकानि कंठेषु यासाम् ।

शोभमानानि वासांसि यासाम् ॥६॥ लोलानि चंचलान्यक्षीणि यासाम्। मृष्टान्युज्ज्वलानि कुण्डलानि यसां ताः ॥७॥ निर्यापितः प्रवर्तितः। हे वाम शिव ! ते यद्यर्थिता इच्छा तर्हि वयं च तत्राभिसराम गच्छामः। न चाद्यापि यागो निवृत्तो यतोऽमी विबुधा व्रजंति ॥८॥ औत्सुक्यं प्रकटयंत्याह। तस्मिन्निति षड्भिः। पितृभ्यामुपनीतं दत्तं परिबर्हमलंकारादि द्रव्यं भवता सहार्हितुं स्वीकर्तुमभिकामये। अर्हितमिति पाठे तत्कृतं परिबर्हमिच्छामीति ॥९॥ स्वसॄर्भगिनीर्भर्तृभिः संमिता सदृशीः। क्लिन्नधियं स्नेहार्द्रचित्ताम्। चिरमुत्कण्ठमुत्सुकं मनो यस्याः साऽहं द्रक्ष्यामि। हे मृड ! उन्नयमानं प्रवर्त्यमानमध्वरेषु ध्वजमिव दृश्यं श्रेष्ठमध्वरम्। यद्वा। उत्क्षिप्यमाणं यज्ञे केतुं यूपं वा ॥१०॥ अहो किं तत्राश्चर्यं येन तवैतदौत्सुक्यमिति चेदत आह। त्वयीति। हे अज ! एतद्विश्वमाश्चर्यरूपं त्वय्येव त्वन्मायया रचितं विभात्यतो यद्यपि तव नाश्चर्यबुद्धिस्तथाऽप्यहं योषिदुत्सुकस्वभावा तव तत्त्वं न जानाम्यतो दीना कृपणा सती। हे भव ! मे भवक्षितिं जन्मभूमिं दिदृक्षे द्रष्टुमिच्छामि ॥११॥ दिदृक्षामेव कैमुत्यन्यायेन व्यनक्ति। पश्येति द्वाभ्याम्। हे अभव ! इति सुहृद्वियोगदुःखं त्वया नास्वादितमिति भावः। अन्या योषितः संबंधरहिता अपि प्रयांतीः पश्य।

दभ्यभाषत ॥ ७ ॥ सत्युवाच ॥ प्रजापतेस्ते श्वशुरस्य सांप्रतं निर्यापितो यज्ञमहोत्सवः किल ॥ वयं च तत्राभिसराम वाम ते यद्यर्थिताऽमी विबुधा व्रजंति हि ॥ ८ ॥ तस्मिन्भगिन्यो मम भर्तृभिः स्वकैर्ध्रुवं गमिष्यन्ति सुहृद्दिदृक्षवः ॥ अहं च तस्मिन्भवताऽभिकामये सहोपनीतं परिबर्हमर्हितुम् ॥ ९ ॥ तत्र स्वसॄर्मे ननु भर्तृसंमिता मातृष्वसॄः क्लिन्नधियं च मातरम् ॥ द्रक्ष्ये चिरोत्कण्ठमना महर्षिभिरुन्नीयमानं च मृडाध्वरध्वजम् ॥ १० ॥ त्वय्येतदाश्चर्यमजात्ममायया विनिर्मितं भाति गुणत्रयात्मकम् ॥ तथाऽप्यहं योषिदतत्त्वविच्च ते दीना दिदृक्षे भव मे भवक्षितिम् ॥ ११ ॥ पश्य प्रयांतीरभवान्ययोषितोऽप्यलंकृताः कांतसखा वरूथशः ॥ यासां व्रजद्भिः शितिकंठ मंडितं नभो विमानैः कलहंसपांडुभिः ॥ १२ ॥ कथं सुतायाः पितृगेहकौतुकं निशम्य देहः सुरवर्य नेङ्गते ॥ अनाहुता अप्यभियंति सौहृदं भर्तुर्गुरोर्देहकृतश्च केतनम् ॥ १३ ॥ तन्मे प्रसीदेदममर्त्य वांछितं कर्तुं भवान्कारुणिको बतार्हति ॥ त्वयात्मनोऽर्धेऽहमदभ्रचक्षुषा निरूपिता माऽनुगृहाण याचितः ॥ १४ ॥ ऋषिरुवाच ॥ एवं गिरित्रः प्रिययाऽभिभाषितः प्रत्यभ्यधत्त प्रहसन्सुहृत्प्रियः ॥ संस्मारितो मर्मभिदः कुवागिषून्यानाह को विश्वसृजां समक्षतः ॥ १५ ॥ श्रीभगवानुवाच ॥ त्वयोदितं शोभनमेव शोभने अनाहुता अप्यभियंति बंधुषु ॥ ते यद्यनुत्पादितदोषदृष्टयो बलीयसाऽनात्म्यमदेन मन्युना ॥ १६ ॥ विद्यातपोवित्तवपुर्वयःकुलैः सतां

कांतसखा भर्तृसहिताः। वरूथशः संघशः। कथंभूताः। यासां विमनैर्नभो मंडितं ताः। हे शितिकंठ ! नीलकंठेति परानुग्रहाय त्वया विषमपि भक्षितमिति सूचयति॥ १२॥ तदा हे सुरश्रेष्ठ ! पितृगेहोत्सवं निशम्य सुताया देहः कथं नेंगते द्रष्टुं न प्रचलति। तथाऽप्यनाहुताः संतः कथं गच्छामस्तत्राह। सौहृदं सुहृत्संबंधि केतनं गृहं तथा भर्त्रादीनां च गृहमनाहूता अप्यभियंति संतः। हस्वत्वमार्षम् ॥१३॥ हे अमर्त्य ! तत्तस्मात्प्रसीद। इदं मे वांछितं कर्तुं भवानर्हति। कारुणिकत्वमेवाह। अदभ्रचक्षुषाऽनल्पज्ञानेनापि त्वयाऽऽत्मनो देहस्यार्धेऽहं निरूपिता धृता। यतोऽर्धनारीश्वर इति ख्यातोऽस्यतो मामनुगृहाण। याचितः सन् ॥ १४ ॥ अभिभाषितो याचितः। को दक्षो यानाह। मर्म भिंदंति ये तान्कुवागिषून्दुरुक्तिबाणान्संस्मारितः सन् ॥ १५ ॥ अनाहुता अपीति त्वया यदुदितमुक्तं तच्छोभनमेव। किं त्वनात्म्यं देहादावहंकारस्तत्कृतेन मदेन मन्युना च ते बंधवो यद्यनुत्पादितदोषदृष्टयो भवंति तर्हि न उत्पादिते आरोपिते दोषे दृष्टिर्येषां ते॥ १६॥ ननु

विद्यादिगुणयुक्तो दक्षस्त्वादृशेषु महत्सु कथं दोषदृष्टिर्भवेत्तत्राह । विद्यादिभिरेव स्मृतौ हतायां विवेकज्ञाने नष्टे सति भूयसां महत्तमानां धाम तेजो न पश्यन्ति हि। ननु गुणैः कथं विवेकनाशस्तत्राह । सतां गुणैर्विवेकहेतुभिरप्यसत्तमानामितरैर्दोषभूतैरतएव तैर्भृतो धृतः पुष्टो वाऽहं विद्वांस्तापस इत्यादिर्मानो गर्वस्तेन दुष्टा दृष्टिर्येषां ते ॥१७॥ स्वजनव्यपेक्षया बंधुदृष्ट्या गृहान्न प्रतियान्नावलोकयेत् । अनवस्थितचित्तत्वमेवाह । ये वक्रधिया कुटिलया बुद्धया पश्यन्ति । आरोपिता उत्तंभिता भ्रूर्येषु तान्यारोपितभ्रूणि तैः आरोपिताभिर्भ्रूभिरिति वा । अमर्षणैः सक्रोधैरक्षिभिः ॥ १८ ॥ ननु स्वजनानां गृहं सुहृद्भिर्गंतव्यं तेषां दुश्चेष्टितं च सोढव्यम् । न तस्य दुःसहत्वादित्याह । तथेति । अरिभिः शिलीमुखैर्बाणैरर्दितांगः खंडितगात्रोऽपि तथा न व्यथते । यतः शेषे स्वपिति । स्वानां दुरुक्तिभिर्मर्मसु ताडितो यथा दूयता व्यथमानेन हृदा दिवानिशं तप्यति ॥१९॥ मयि तत्र गतायां नेयं शंकेति चेत्तत्राह। व्यक्तं निश्चितमुत्कृष्टा गतिः स्थितिर्यस्य तस्यात्मजानां कन्यानां मध्ये त्वं प्रियेति मे संमताऽस्यथापि पितुः सकाशान्मानं न लप्स्यसे । मदाश्रयान्मत्संबंधात् ॥ २० ॥ ननु भगवंस्त्वया किमिति दक्षस्तिरस्कृतो यतोऽसौ त्वां द्वेष्टयत आह । पापच्यमानेनालं दह्यमानेन हृदा मनसा दुःखितेन्द्रियः । काभिः । पुरुषो जीवस्तस्य बुद्धिश्चित्तं तत्साक्षिणां निरहंकाराणामित्यर्थः । समृद्धिभिः पुण्यकीर्त्यादिभिः । एषां पदं स्थानमैश्वर्यं प्राप्तुमकल्पो-

गुणैः षड्भिरसत्तमेतरैः ॥ स्मृतौ हतायां भृतमानदुर्दृशः स्तब्धा न पश्यन्ति हि धाम भूयसाम् ॥१७॥ नैतादृशानां स्वजनव्यपेक्षया गृहान्प्रतीयादनवस्थितात्मनाम् ॥ येऽभ्यागतान्वक्रधियाऽभिचक्षते आरोपितभ्रूभिरमर्षणाक्षिभिः ॥१८॥ तथाऽरिभिर्न व्यथते शिलीमुखैः शेतेऽर्दितांगो हृदयेन दूयता ॥ स्वानां यथा वक्रधियां दुरुक्तिभिर्दिवानिशं तप्यति मर्मताडितः ॥ १९ ॥ व्यक्तं त्वमुत्कृष्टगतेः प्रजापतेः प्रियात्मजानामसि सुभ्रु संमता ॥ अथापि मानं न पितुः प्रपत्स्यसे मदाश्रयात्कः परितप्यते यतः ॥ २० ॥ पापच्यमानेन हृदाऽऽतुरेन्द्रियः समृद्धिभिः पूरुषबुद्धिसाक्षिणाम् ॥ अकल्प एषामधिरोढुमंजसा पदं परं द्वेष्टि यथाऽसुरा हरिम् ॥२१॥ प्रत्युद्गमप्रश्रयणाभिवादनं विधीयते साधु मिथः सुमध्यमे ॥ प्राज्ञैः परस्मै पुरुषाय चेतसा गुहाशयायैव न देहमानिने ॥ २२ ॥ सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः ॥ सत्त्वे च तस्मिन्भगवान्वासुदेवो ह्यधोक्षजो मे नमसा विधीयते ॥ २३ ॥ तत्ते निरीक्ष्यो न पिताऽपि देहकृद्दक्षो मम द्विट् तदनुव्रताश्च ये ॥ यो विश्वसृग्यज्ञगतं वरोरु मामनागसं दुर्वचसाऽकरो-

ऽशक्तः सन्परं द्वेष्टि । असुरा यथा हरिं केवलं द्विषंति ॥२१॥ ननु त्वया प्रत्युत्थानविनयाद्यकरणादवज्ञात एवासौ तत्राह । हे सुमध्यमे ! प्रत्युद्गमादिकं मिथो जनैर्यद्विधीयते तत्प्राज्ञैः साधु विधीयते । साधुत्वमेवाह। परस्मै श्रीवासुदेवाय । गुहाशयायांतर्यामिण एव । तच्च चेतसैव । परिपूर्णे तस्मिन्कायिकव्यापारायोगात् । अतोऽन्तर्यामिदृष्ट्या मनसा सर्वं कृतमिति भावः ॥ २२ ॥ किंच । न केवलमभ्यागतेष्वेव वासुदेवदृष्ट्या नमनं क्रियते। किंतु नित्यमेव मनसि वासुदेवश्चिंत्यत इत्याह । विशुद्धं सत्त्वमंतःकरणं सत्त्वगुणो वा वसुदेवशब्दितं वसुदेवशब्देनोक्तम्। कुतः यद्यस्मात्तत्र सत्त्वे पुमान्वासुदेव ईयते प्रकाशते । अपगतमावृतमावरणं यस्मात्स। अयमर्थः। वसुदेवे भवति प्रतीयत इति हि वासुदेवः परमेश्वरः प्रसिद्धः स च विशुद्धे सत्त्वे प्रतीयते । अतःप्रत्ययार्थेन प्रसिद्धेन प्रकृत्यर्थो निर्धार्यते । ततश्च वासयति देवमिति व्युत्पत्त्या वसत्यस्मिन्निति वा वसुः । देवो दीव्यति द्योतत इति वा वसुभिः पुण्यैर्दीव्यति प्रकाशत इति वा । वसुदेवशब्दवाच्यं शुद्धं सत्त्वम्। ततः किमत आह । सत्त्वे च तस्मिन्मे मया नमसा नमस्कारेणानुविधीयते सेव्यत इत्यर्थः । मनसेति पाठे मनसा विशेषेण धीयते धार्यते चिंत्यत इत्यर्थः । यतोऽधो भूतेषु प्रत्याहृतेष्वक्षेषु

भूयमानः विक्लिद्यमानं द्रवद्धृदयं यस्य पुलकैर्व्याप्तांगः ॥१८॥१९॥ अन्वनंतरं देवप्रवरौ ददर्शेत्यनुषंगः । गदामवष्टभ्य स्थितौ किरीटादिभिः सहिते चारुणी कुंडले ययोः ॥२०॥ उत्तमगायः पुण्यश्लोकस्तस्य किंकरौ तौ विज्ञाय मधुद्विषः पार्षदप्रधानाविति हेतोः साध्वसेन संभ्रमेण विस्मृतपूजाक्रमः केवलं तस्य नामानि गृणन्ननाम ॥ २१ ॥ २२ ॥ सुभद्रमिति सशरीरस्यैव विष्णुपदारोहाभिप्रायम् । अतीतृपत्तर्पितवान् ॥ २३ ॥ आवां तस्य पार्षदौ ॥ २४ ॥ सुदुर्जयत्वे हेतुः । सूरयः सप्तर्षयोऽपि यदप्राप्य केवलमधः स्थिताः पश्यंति । यच्चन्द्रादयः प्रदक्षिणं यथा भवत्येवं परिक्रामंति तदातिष्ठाधितिष्ठ ॥ २५ ॥ २६ ॥ आयुष्मन्नित्यपि सशरीरयानाभिप्रायमेव ॥ २७ ॥ मधु च्यवते स्रवतीति मधुच्युत्तम् । पाठांतरे मधु च्युतं यस्यां तामभृतस्राविणीमित्यर्थः । कृतं

विमानाग्र्यं नभसोऽवतरद्ध्रुवः ॥ विभ्राजयद्दश दिशो राकापतिमिवोदितम् ॥ १९ ॥ तत्रानु देवप्रवरौ चतुर्भुजौ श्यामौ किशोरावरुणांबुजेक्षणौ ॥ स्थिताववष्टभ्य गदां सुवाससौ किरीटहारांगदचारुकुंडलौ ॥ २० ॥ विज्ञाय तावुत्तमगायकिंकरावभ्युत्थितः साध्वसविस्मृतक्रमः ॥ ननाम नामानि गृणन्मधुद्विषः पार्षत्प्रधानाविति संहृतांजलिः ॥ २१ ॥ तं कृष्णपादाभिनिविष्टचेतसं बद्धांजलिं प्रश्रयनम्रकंधरम् ॥ सुनंदनंदावुपसृत्य सस्मितं प्रत्यूचतुः पुष्करनाभसंमतौ ॥ २२ ॥ सुनंदनंदावूचतुः ॥ भो भो राजन्सुभद्रं ते वाचं नोऽवहितः शृणु ॥ यः पञ्चवर्षस्तपसा भवान्देवमतीतृपत् ॥ २३ ॥ तस्याखिलजगद्धातुरावां देवस्य शार्ङ्गिणः ॥ पार्षदाविह संप्राप्तौ नेतुं त्वां भगवत्पदम् ॥ २४ ॥ सुदुर्जयं विष्णुपदं जितं त्वया यत्सूरयोऽप्राप्य विचक्षते परम् ॥ आतिष्ठ तच्चंद्रदिवाकरादयो ग्रहर्क्षतारा: परियंति दक्षिणम् ॥ २५ ॥ अनास्थितं ते पितृभिरन्यैरप्यंग कर्हिचित् ॥ आतिष्ठ जगतां वंद्यं तद्विष्णोः परमं पदम् ॥ २६ ॥ एतद्विमानप्रवरमुत्तमश्लोकमौलिना ॥ उपस्थापितमायुष्मन्नधिरोढुं त्वमर्हसि ॥ २७ ॥ मैत्रेय उवाच ॥ निशम्य वैकुंठनियोज्यमुख्ययोर्मधुच्युतं वाचमुरुक्रमप्रियः ॥ कृताभिषेकः कृतनित्यमंगलो मुनीन्प्रणम्याशिषमभ्यवादयत् ॥ २८ ॥ परीत्याभ्यर्च्य धिष्ण्याग्र्यं पार्षदावभिवंद्य च ॥ इयेष तदधिष्ठातुं बिभ्रद्रूपं हिरण्मयम् ॥ २९ ॥ तदोत्तानपदः पुत्रो ददर्शांतकमागतम् ॥ मृत्योर्मूर्ध्नि पदं दत्त्वा आरुरोहाद्भुतं गृहम् ॥ ३० ॥ तदा दुदुंभयो नेदुर्मृदंगपणवादयः ॥ गंधर्वमुख्याः प्रजगुः पेतुः कुसुमवृष्टयः ॥ ३१ ॥ स च स्वर्लोकमारोक्ष्यन्सुनीतिं जननीं ध्रुवः ॥ अन्वस्मरदगं हित्वा दीनां यास्ये त्रिविष्टपम् ॥ ३२ ॥ इति व्यवसितं तस्य व्यवसाय सुरोत्तमौ ॥ दर्शयामासतुर्देवीं पुरो यानेन गच्छतीम् ॥ ३३ ॥ तत्र तत्र प्रशंसद्भिः पथि वैमानिकैः सुरैः ॥ अवकीर्यमाणो ददृशे कुसुमैः क्रमशो ग्रहान् ॥ ३४ ॥ त्रिलोकीं देव-

नित्यं कर्म मंगलं चालंकरणं येन अभ्यवादयद्वादयामास ॥२८॥ तदेव रूपं हिरण्मयं प्रकाशबहुलं बिभ्रत्सन्नियेष ऐच्छत् ॥२९॥ गृहं विमानम् । अयं भावः । यदा ध्रुवो विमानमारोढुमैच्छत्तदा मृत्युरागत्य प्रणम्योवाच । हे महाराज ! मामंगीकुरु । उवाच ध्रुवः । स्वागतं ते क्षणं तावदुपविश । एवमुक्त्वा ध्रुवो विष्णोः स्मरणं कृत्वा मृत्योर्मूर्ध्नि पदं दत्त्वा विमानाग्र्यमारुरोह ॥ ३० ॥ ३१ ॥ दीनां हित्वा कथमगं दुर्गमं त्रिविष्टपं यास्यामीत्यन्वस्मरत् ॥ ३२ ॥ व्यवसितमभिप्रायम् । व्यवसाय ज्ञात्वा ॥३३॥३४॥ देवयानेन देवमार्गेण विमानेनेति वा मुनीन्सप्तर्षी-

नपि ततः परस्ताद्यद्विष्णोः पदं तदभ्यगात् । ध्रुवा गतिर्यस्य सः ॥ ३५ ॥ यद्भ्राजमानमनु यस्य रुचा लोका येऽननुग्रहा निष्कृपास्ते यत्रात्रजन्न गतवंतः ॥ ३६ ॥ अच्युतः प्रियो बांधवो येषाम् ॥३७॥३८॥ अनिमिषमनलसं ज्योतिषां चक्रं यस्मिन्नाहितमर्पितं सद्भ्रमति । मेढ्यामाहितो गंभीरवेगो गवां गण इव ॥३९॥ आतोद्यं वीणां वितुदन्वादयन्प्रचेतसां ब्रह्मसत्रे भगवन्माहात्म्यप्रसंगेन ध्रुवमहिमप्रतिपादनपरांस्त्रीन् श्लोकानगायत् ॥४०॥ नूनमिति । पतिरेव देवया यस्यास्तस्याः सुतस्य यस्तपःप्रभावस्तस्य तां गतिं फलमधिगंतुं वेदवादशीला ब्रह्मर्षयोऽपि नैव प्रभवंति । अभ्युपायान्भगवद्धर्मान् दृष्ट्वापि किं पुनर्नृपाः ॥४१॥ तपःप्रभावं गतिं च विशिनष्टि द्वाभ्याम्। गुरुदाराः पितृपत्नी सुरुचिस्तस्या वाक्यशरैर्भिन्नेनात एव दूयता हृदयेन वनं यातः

यानेन सोऽतिव्रज्य मुनीनपि ॥ परस्ताद्यद्ध्रुवगतिर्विष्णोः पदमथाभ्यगात् ॥३५॥ यद्भ्राजमानं स्वरुचैव सर्वतो लोकास्त्रयो ह्यनुविभ्राजंत एते ॥ यन्नाव्रजन्जंतुषु येऽननुग्रहा व्रजंति भद्राणि चरंति येऽनिशम् ॥३६॥ शांताः समदृशः शुद्धाः सर्वभूतानुरंजनाः ॥ यांत्यंजसाऽच्युपदमच्युतप्रियबांधवाः ॥ ३७ ॥ इत्युत्तानपदः पुत्रो ध्रुवः कृष्णपरायणः ॥ अभूत्त्रयाणां लोकानां चूडामणिरिवामलः ॥ ३८ ॥ गंभीरवेगोऽनिमिषं ज्योतिषां चक्रमाहितम् ॥ यस्मिन्भ्रमति कौरव्य मेढ्यामिव गवां गणः ॥ ३९ ॥ महिमानं विलोक्यास्य नारदो भगवानृषिः ॥ आतोद्यं वितुदन्श्लोकान्सत्रेऽगायत्प्रचेतसाम् ॥ ४० ॥ नारद उवाच ॥ नूनं सुनीतेः पतिदेवतायास्तपःप्रभावस्य सुतस्य तां गतिम् ॥ दृष्ट्वाऽभ्युपायानपि वेदवादिनो नैवाधिगंतुं प्रभवन्ति किं नृपाः ॥४१॥ यः पञ्चवर्षो गुरुदारवाक्शरैर्भिन्नेन यातो हृदयेन दूयता ॥ वनं मदादेशकरोऽजितं प्रभुं जिगाय तद्भक्तगुणैः पराजितम् ॥४२॥ यः क्षत्रबन्धुर्भुवि तस्याधिरूढमन्वारुरुक्षेदपि वर्षपूगैः ॥ षट्पञ्चवर्षो यदहोभिरल्पैः प्रसाद्य वैकुण्ठमवाप तत्पदम् ॥ ४३ ॥ मैत्रेय उवाच ॥ एतत्तेऽभिहितं सर्वं यत्पृष्टोऽहमिह त्वया ॥ ध्रुवस्योद्दामयशसश्चरितं संमतं सताम् ॥ ४४ ॥ धन्यं यशस्यमायुष्यं पुण्यं स्वस्त्ययनं महत् ॥ स्वर्ग्यं ध्रौव्यं सौमनस्यं प्रशस्यमघमर्षणम् ॥ ४५ ॥ श्रुत्वैतच्छ्रद्धयाऽभीक्ष्णमच्युतप्रियचेष्टितम् ॥ भवेद्भक्तिर्भगवति यया स्यात्क्लेशसंक्षयः ॥ ४६ ॥ महत्त्वमिच्छतां तीर्थं श्रोतुः शीलादयो गुणाः ॥ यत्र तेजस्तदिच्छूनां मानो यत्र मनस्विनाम् ॥ ४७ ॥ प्रयतः कीर्तयेत्प्रातः समवाये द्विजन्मनाम् ॥ सायं च पुण्यश्लोकस्य ध्रुवस्य चरितं महत् ॥ ४८ ॥ पौर्णमास्यां सिनीवाल्यां द्वादश्यां श्रवणेऽथवा ॥ दिनक्षये व्यतीपाते संक्रमेऽर्कदिनेऽपि वा ॥ ४९ ॥ श्रावयेच्छ्रद्दधानानां तीर्थपादपदाश्रयः ॥ नेच्छंस्तत्रात्मनात्मानं संतुष्ट इति सिद्ध्यति ॥ ५० ॥ ज्ञानमज्ञाततत्त्वाय यो दद्यात्सत्पथेऽमृ-

सन्नजितमपि यो जिगाय वशीकृतवान् ॥ ४२ ॥ यस्याधिरूढं तेन प्राप्तं पदं यो भुवि क्षत्रबंधुः क्षत्रियो भवेत्स तमनु वर्षसमूहैरप्यारोढुमिच्छेदपि किम् । तत्संकल्पोऽप्यशक्यो दूरत आरोहणमित्यर्थः । कथंभूतं पदम् । षड्वा पञ्च वा वर्षाणि यस्य सः । अल्पैरेवाहोभिर्वैकुंठं प्रसाद्य यत्तस्य पदमवाप तत् ॥ ४३ ॥ उद्दाममुत्कृष्टं यशो यस्य ॥४४॥ धनादेर्निमित्तम्। ध्रौव्यं ध्रुवस्थानप्रापकम् । प्रशस्यं प्रशंसार्हम्। अघमर्षणं पापनाशनम् ॥४५॥ अच्युतप्रियस्य ध्रुवस्य चेष्टितं श्रुत्वा यो वर्तते तस्य भक्तिर्भवेत् ॥४६॥ तीर्थं महत्त्वावाप्तिस्थानम् । गुणा यत्र भवन्ति ॥४७॥

समवाये सभायाम् ॥ ४८ ॥ ४९ ॥ नेच्छन्निष्कामस्तत्र श्रवणे आत्मनैवात्मानं प्रति संतुष्टो भवतीति हेतोः सिद्धिं प्राप्नोति ॥५०॥ किंच सत्पथे भगवन्मार्गेऽमृतरूपं ज्ञानं यो दद्यात् ॥५१॥ ध्रुवस्य चरितं मया तेऽभिहितम् । मातुर्गृहं च हित्वा ॥ ५२ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे टीकायां द्वादशोऽध्यायः ॥१२॥ एवं पञ्चभिरध्यायैर्ध्रुवचर्याऽनुवर्णिता ॥ अथैकादशभिश्चित्रं पृथुचारित्रमुच्यते ॥ १ ॥ तत्र त्रयोदशे वक्तुं पृथोर्जन्म ध्रुवान्वये ॥ अंगो वेनपिता पुत्रक्रौर्योद्वत इतीर्यते ॥ २ ॥ प्ररूढो भावो भक्तिर्यस्य ॥ १ ॥ अन्ववाये वंशे ॥ २ ॥ नारदेन प्रचेतसां सत्रे वर्णिताः कथाः प्रष्टुं तन्महिमानमाह । मन्य इति । देवस्य दर्शनं यस्य हरेः परिचर्याप्रकारः क्रियायोगः पञ्चरात्रे येन प्रोक्तः ॥ ३ ॥ स्वधर्मशीलैः पुरुषैः प्रचेतोभिः ॥ ४ ॥ ५ ॥

तम् ॥ कृपालोर्दीननाथस्य देवास्तस्यानुगृह्णते ॥ ५१ ॥ इदं मया तेऽभिहितं कुरूद्वह ध्रुवस्य विख्यातविशुद्धकर्मणः ॥ हित्वाऽर्भकः क्रीडनकानि मातुर्गृहं च विष्णुं शरणं यो जगाम ॥ ५२ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे ध्रुवचरितं नाम द्वादशोऽध्यायः ॥ १२ ॥ सूत उवाच ॥ निशम्य कौषारविणोपवर्णितं ध्रुवस्य वैकुंठपदाधिरोहणम् ॥ प्ररूढभावो भगवत्यधोक्षजे प्रष्टुं पुनस्तं विदुरः प्रचक्रमे ॥ १ ॥ विदुर उवाच ॥ के ते प्रचेतसो नाम कस्यापत्यानि सुव्रत ॥ कस्यान्ववाये प्रख्याताः कुत्र वा सत्रमासते ॥२॥ मन्ये महाभागवतं नारदं देवदर्शनम् ॥ येन प्रोक्तः क्रियायोगः परिचर्याविधिर्हरेः ॥३॥ स्वधर्मशीलैः पुरुषैर्भगवान्यज्ञपूरुषः ॥ इज्यमानो भक्तिमता नारदेनेरितः किल ॥४॥ यास्ता देवर्षिणा तत्र वर्णिता भगवत्कथाः ॥ मह्यं शुश्रूषवे ब्रह्मन्कात्स्न्र्येनाचष्टुमर्हसि ॥ ५ ॥ मैत्रेय उवाच ॥ ध्रुवस्य चोत्कलः पुत्रः पितरि प्रस्थिते वनम् ॥ सार्वभौमश्रियं नैच्छदधिराजासनं पितुः ॥ ६ ॥ स जन्मनोपशांतात्मा निःसंगः समदर्शनः ॥ ददर्श लोके विततमात्मानं लोकमात्मनि ॥ ७ ॥ आत्मानं ब्रह्म निर्वाणं प्रत्यस्तमितविग्रहम् ॥ अवबोधरसैकात्म्यमानंदमनुसंततम् ॥ ८ ॥ अव्यवच्छिन्नयोगाग्निदग्धकर्ममलाशयः ॥ स्वरूपमवरुंधानो नात्मनोऽन्यं तदैक्षत ॥ ९ ॥ जडांधबधिरोन्मत्तमूकाकृतिरतन्मतिः ॥ लक्षितः पथि बालानां प्रशांतार्चिरिवानलः ॥ १० ॥ मत्वा तं जडमुन्मत्तं कुलवृद्धाः समंत्रिणः ॥ वत्सरं भूपतिं चक्रुर्यवीयांसं भ्रमेः सुतम् ॥ ११ ॥ स्वर्वीथिर्वत्सरस्येष्टा भार्याऽसूत षडात्मजान् ॥ पुष्पार्णं तिग्मकेतुं च इषमूर्जं वसुं जयम् ॥ १२ ॥ पुष्पार्णस्य प्रभा भार्या दोषा च द्वे बभूवतुः ॥ प्रातर्मध्यंदिनं सायमिति ह्यासन्प्रभासुताः ॥ १३ ॥ प्रदोषो निशिथो व्युष्ट इति दोषासुतास्त्रयः ॥ व्युष्टः सुतं पुष्करिण्यां सर्वतेजसमादधे ॥ १४ ॥ स चक्षुःसुतमाकूत्यां पत्न्यां मनुमवाप ह ॥ मनोरसूत महिषी विरजान्नड्वला

ध्रुवस्य वंशे ते जाता इति वक्तुं ध्रुवस्य वंशमनुक्रामति । ध्रुवस्येत्यादिना । पितुः सार्वभौमश्रियं नैच्छदधिराजासनं च ॥ ६ ॥ अनिच्छाहेतुमाह । स इति चतुर्भिः ॥७॥ आत्मानं स्वरूपभूतं ब्रह्मावरुंधान आप्नुवन् जानन्नात्मनो नान्यं तदैक्षत । स्वयं सर्वस्मादन्यः सन् । कथंभूतं ब्रह्म । निर्वाणं शांतम् । प्रत्यस्तमितः शांतो विग्रहो भेदो यस्मिन् अवबोधरसेनैकात्म्यं यस्य ॥ ८ ॥ कथंभूतः । अव्यवच्छिन्नो यो योगः स एवाग्निस्तेन दग्धः कर्ममल आशयो वासना च यस्य ॥ ९ ॥ जडादीनामिवाकृतिर्यस्य तथाभूतो लक्षितः अतन्मतिः न तेषामिव मतिर्यस्य सर्वज्ञत्वात्। प्रशांतान्यर्चींषि ज्वाला यस्यानलस्य तद्वत्स्थितः ॥१०॥ यवीयांसमुत्कलमात्मनिष्ठम् ॥११॥ इष्टा प्रिया भार्या ॥ १२ ॥ १३ ॥ निशिथो निशीथः ॥ १४ ॥ स सर्वतेजाश्चक्षुःसंज्ञं मनुं सुतं

पुत्रमवाप । मनोर्महिषी नड्वला विरजान् शुद्धान्पुरुप्रमुखान्द्वादश सुतानसूत ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ अंग हे विदुर ! वागेव वज्रं येषाम् ॥१९॥ मथने हेतुः । अराजक इति । आद्यः पुरग्रामादीनां तेन रचितत्वात् ॥ २० ॥ यद्यस्याः प्रजाया हेतोर्विमनाः सन्ययौ ॥ २१ ॥ किंवा अंहः अपराधं वेने उद्दिश्य आलक्ष्य ॥२२॥ यतोऽयमधर्म इत्याह । नावध्येयोऽवज्ञेयोऽपि न भवति ॥ २३ ॥ परावरविदां मध्येऽतिश्रेष्ठः ॥ २४ ॥ अभावी पुत्रः काम्यकर्मणा बलादापादितो न सुखाय भवेदिति द्योतयन्नंगस्य पुत्रोत्पत्तिक्रममाह । अंग इत्यादिना ॥ २५ ॥ २६ ॥

सुतान् ॥ १५ ॥ पुरुं कुत्सं त्रितं द्युम्नं सत्यवंतमृतं व्रतम् ॥ अग्निष्टोममतीरात्रं प्रद्युम्नं शिबिमुल्मुकम् ॥ १६ ॥ उल्मुकोऽजनयत्पुत्रान्पुष्करिण्यां षडुत्तमान् ॥ अंगं सुमनसं ख्यातिं क्रतुमंगिरसं गयम् ॥ १७ ॥ सुनीथांगस्य या पत्नी सुषुवे वेनमुल्बणम् ॥ यद्दौःशील्यात्स राजर्षिर्निर्विण्णो निरगात्पुरात् ॥ १८ ॥ यमंग शेपुः कुपिता वाग्वज्रा मुनयः किल ॥ गतासोस्तस्य भूयस्ते ममंथुर्दक्षिणं करम् ॥ १९ ॥ अराजके तदा लोके दस्युभिः पीडिताः प्रजाः ॥ जातो नारायणांशेन पृथुराद्यः क्षितीश्वरः ॥ २० ॥ विदुर उवाच ॥ तस्य शीलनिधेः साधोर्ब्रह्मण्यस्य महात्मनः ॥ राज्ञः कथमभूद्दुष्टा प्रजा यद्विमना ययौ ॥२१॥ किंवांहो वेन उद्दिश्य ब्रह्मदंडमयूयुजन् ॥ दंडव्रतधरे राज्ञि मुनयो धर्मकोविदाः ॥२२॥ नावध्येयः प्रजापालः प्रजाभिरघवानपि ॥ यदसौ लोकपालानां बिभर्त्योजः स्वतेजसा ॥ २३ ॥ एतदाख्याहि मे ब्रह्मन्सुनीथात्मजचेष्टितम् ॥ श्रद्दधानाय भक्ताय त्वं परावरवित्तमः ॥ २४ ॥ मैत्रेय उवाच ॥ अंगोऽश्वमेधं राजर्षिराजहार महाक्रतुम् ॥ नाजग्मुर्देवतास्तस्मिन्नाहूता ब्रह्मवादिभिः ॥ २५ ॥ तमूचुर्विस्मितास्तत्र यजमानमथर्त्विजः ॥ हवींषि हूयमानानि न ते गृह्णंति देवताः ॥ २६ ॥ राजन्हवींष्यदुष्टानि श्रद्धयाऽऽसादितानि ते ॥ छंदांस्ययातयामानि योजितानि धृतव्रतैः ॥ २७ ॥ न विदामेह देवानां हेलनं वयमण्वपि ॥ यन्न गृह्णंति भागान्स्वान्ये देवाः कर्मसाक्षिणः ॥ २८ ॥ मैत्रेय उवाच ॥ अंगो द्विजवचः श्रुत्वा यजमानः सुदुर्मनाः ॥ तत्प्रष्टुं व्यसृजद्वाचं सदस्यांस्तदनुज्ञया ॥ २९ ॥ नागच्छंत्याहुता देवा न गृह्णंति ग्रहानिह ॥ सदसस्पतयो ब्रूत किमवद्यं मया कृतम् ॥ ३० ॥ सदसस्पतय ऊचुः ॥ नरदेवेह भवतो नाघं तावन्मनाक् स्थितम् ॥ अस्त्येकं प्राक्तनमघं यदिहेदृक् त्वमप्रजः ॥ ३१ ॥ तथा साधय भद्रं ते आत्मानं सुप्रजं नृप ॥ इष्टस्ते पुत्रकामस्य पुत्रं दास्यति यज्ञभुक् ॥ ३२ ॥ तथा स्वभागधेयानि ग्रहीष्यंति दिवौकसः ॥ यद्यज्ञपुरुषः साक्षादपत्याय हरिर्वृतः ॥ ३३ ॥ तांस्तान्कामान्हरिर्दद्याद्यान्यान्कामयते जनः ॥ आराधितो

अयातयामान्यगतवीर्याणि ॥ २७ ॥ २८ ॥ यज्ञे गृहीतमौनोऽपि वाचं व्यसृजत्प्रायुंक्त ॥ २९ ॥ आहुता आहूताः ग्रहान्सोमपात्राणि इह यज्ञे न गृह्णंति ॥ ३० ॥ इह जन्मनि न तावन्मनागीषदप्यघं स्थितम् । कथंचिज्ज्ञातस्याघस्य सद्य एव प्रायश्चित्तैः क्षालनात् । किंतु प्राक्तनमेकमघमस्ति यद्यस्मादीदृक् गुणाधिकोऽपि त्वं प्रजारहितः ॥३१॥ अतो यथा देवा हविर्गृह्णंति तथात्मानं सुप्रजं साधय । कथं साधनीयं तदाहुः । इष्ट इति ॥३२॥ तथा सति स्वभागान् ग्रहीष्यंति । यद्यतो हरिः साक्षाद्वृतः स्यात् । अतस्तेन सह सर्वे देवा आगमिष्यंतीत्यर्थः ॥३३॥ नन्वतितुच्छा-

न्कामान्हरिः कथं दद्यात्तत्राह । तांस्तानिति ॥ ३४ ॥ प्रजातये पुत्रोत्पत्तये शिपिविष्टाय शिपिषु पशुषु यज्ञरूपेण प्रविष्टाय । तथा च श्रुतिः । यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठतीति ॥ ३५ ॥ तस्मादिति योग्यतयाग्नेः ॥ ३६ ॥ पत्न्यै प्रादात् ॥ ३७ ॥ पुमांसं सूतेऽनेनेति तथा तत्प्राश्य पत्युः सकाशाद्गर्भमादधे अप्रजा सती ॥३८॥ मातामहं मृत्युम् । मृत्योर्हि पुत्री सुनीथा ॥ ३९ ॥ मृगयुर्लुब्धकः सन् तं दृष्ट्वा वेनोऽसावागच्छतीति जनः सर्वोऽप्यरौच्चुक्रोश ॥ ४० ॥ आक्रीडे क्रीडास्थाने बालान्पशूनिवामारयत् ॥ ४१ ॥ विचद्य दृष्ट्वा ॥ ४२ ॥ दुर्मनसस्तस्य कुपुत्रनिंदावाक्यान्याह प्रायेणेति त्रिभिः । अप्रजा यैस्तैरभ्यर्चितः । तत्र हेतुः । कुत्सितैरपत्यैः संभृतं दुर्भरं धारयितुमशक्यं दुःखं ये न विंदंति ॥४३॥ सर्वेषां सर्वैः सह आधिर्मानसी

यथैवैष तथा पुंसां फलोदयः ॥ ३४ ॥ इति व्यवसिता विप्रास्तस्य राज्ञः प्रजातये ॥ पुरोडाशं निरवपञ्छिपिविष्टाय विष्णवे ॥ ३५ ॥ तस्मात्पुरुष उत्तस्थौ हेममाल्यमलांबरः ॥ हिरण्मयेन पात्रेण सिद्धमादाय पायसम् ॥ ३६ ॥ स विप्रानुमतो राजा गृहीत्वांजलिनौदनम् ॥ अवघ्राय मुदा युक्तः प्रादात्पत्न्या उदारधीः ॥ ३७ ॥ सा तत्पुंसवनं राज्ञी प्राश्य वै पत्युरादधे ॥ गर्भं काल उपावृत्ते कुमारं सुषुवेऽप्रजा ॥ ३८ ॥ स बाल एव पुरुषो मातामहमनुव्रतः ॥ अधर्मांशोद्भवं मृत्युं तेनाभवदधार्मिकः ॥ ३९ ॥ स शरासनमुद्यम्य मृगयुर्वनगोचरः ॥ हंत्यसाधुर्मृगान्दीनान्वेनोऽसावित्यरौज्जनः ॥ ४० ॥ आक्रीडे क्रीडतो बालान्वयस्यानतिदारुणः ॥ प्रसह्य निरनुक्रोशः पशुमारममारयत् ॥ ४१ ॥ तं विचद्य खलं पुत्रं शासनैर्विविधैर्नृपः ॥ यदा न शासितुं कल्पो भृशमासीत्सुदुर्मनाः ॥ ४२ ॥ प्रायेणाभ्यर्चितो देवो येऽप्रजा गृहमेधिनः ॥ कदपत्यभृतं दुःखं ये न विंदंति दुर्भरम् ॥ ४३ ॥ यतः पापीयसी कीर्तिरधर्मश्च महान्नृणाम् ॥ यतो विरोधः सर्वेषां यत आधिरनंतकः ॥ ४४ ॥ कस्तं प्रजापदेशं वै मोहबंधनमात्मनः ॥ पंडितो बहु मन्येत यदर्थाः क्लेशदा गृहाः ॥ ४५ ॥ कदपत्यं वरं मन्ये सदपत्याच्छुचां पदात् ॥ निर्विद्येत गृहान्मर्त्यो यत्क्लेशनिवहा गृहाः ॥ ४६ ॥ एवं स निर्विण्णमना नृपो गृहान्निशीथ उत्थाय महोदयोदयात् ॥ अलब्धनिद्रोऽनुपलक्षितो नृभिर्हित्वा गतो वेनसुवं प्रसुप्ताम् ॥ ४७ ॥ विज्ञाय निर्विद्य गतं पतिं प्रजाः पुरोहितामात्यसुहृद्गणादयः ॥ विचिक्युरुर्व्यामतिशोककातरा यथा निगूढं पुरुषं कुयोगिनः ॥ ४८ ॥ अलक्षयंतः पदवीं प्रजापतेर्हतोद्यमाः प्रत्युपसृत्य ते पुरीम् ॥ ऋषीन्समेतानभिवंद्य साश्रवो न्यवेदयन्पौरव भर्तृविप्लवम् ॥ ४९ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे त्रयोदशोऽध्यायः ॥ १३ ॥ मैत्रेय उवाच ॥ भृग्वादयस्ते मुनयो लोकानां क्षेमदर्शिनः ॥ गोप्तर्यसति वै नृणां

व्यथा ॥४४॥ तं प्रजापदेशं पुत्रनाममात्रमप्यात्मनो मोहेन बंधनम् । यदर्था यन्निमित्ताः क्लेशदा गृहा भवंति ॥४५॥ इदानीं निर्वेदहेतुत्वेन कुत्सितमेवापत्यमभिनंदति । कदपत्यमिति । शुचां पदाच्छोकानां स्थानात् । वरत्वे हेतुः । निर्विद्येतेति । तत्कुतः । यद्यतः कदपत्यात् गृहाः क्लेशनिवहा भवंति ॥४६॥ महतामुदयानां विभूतीनामुदयो यस्मिंस्तस्माद्गृहादुद्गतः । या वेनं सूते स्म ताम् ॥ ४७ ॥ प्रजाः पुरोहितादयश्च विचिक्युरन्वेषितवंतः । तं तत्रैव संतमपि नापश्यन्निति दृष्टांतेनाह । यथेति ॥ ४८ ॥ साश्रवो रुदंतः भर्तृविप्लवं नाशमदर्शनमित्यर्थः ॥४९॥ इति श्रीमद्भागवते

महापुराणे चतुर्थस्कंधे त्रयोदशोऽध्यायः ॥ १३ ॥ चतुर्दशे तु दुष्पुत्रभयादंगे गते द्विजैः ॥ अभिषिक्तस्य वेनस्य रोषात्तैर्वध उच्यते ॥ १ ॥ क्षेमदर्शिनः क्षेमचिंतकाः पशुसमानरूपतां पश्यंतः ॥ १ ॥ अमात्यादीनां प्रकृतीनामसंमतम् । पाठांतरे प्रकृत्या स्वभावेनासंमतम् ॥ २ ॥ चोराः सर्वे लीना बभूवुः ॥ ३ ॥ आरूढं नृपस्थानं राजासनं येन अष्टविभूतिभिर्लोकपालैश्वर्यैः ॥ ४ ॥ ॥ ५ ॥ ६ ॥ सत्रिणो मिलिताः संतः ॥ ७ ॥ मूलतश्चाग्रतश्च दीप्ते ज्वलिते काष्ठे तन्मध्यवर्तिनां पिपीलिकादीनां यथोभयतो व्यसनमेवं तस्करेभ्यः पालकाच्च दुःखं प्राप्तमित्यर्थः ॥ ८ ॥ तदे-

पश्यंतः पशुसाम्यताम् ॥ १ ॥ वीरमातरमाहूय सुनीथां ब्रह्मवादिनः ॥ प्रकृत्यसंमतं वेनमभ्यषिंचन्पतिं भुवः ॥ २ ॥ श्रुत्वा नृपासनगतं वेनमत्यु-ग्रशासनम् ॥ निलिल्युर्दस्यवः सद्यः सर्पत्रस्ता इवाखवः ॥ ३ ॥ स आरुढनृपस्थान उन्नद्धोऽष्टविभूतिभिः ॥ अवमेने महाभागान्स्तब्धः संभावितः स्वतः ॥ ४ ॥ एवं मदांध उत्सिक्तो निरंकुश इव द्विपः ॥ पर्यटन्रथमास्थाय कंपयन्निव रोदसी ॥ ५ ॥ न यष्टव्यं न दातव्यं न होतव्यं द्विजाः क्वचित् ॥ इति न्यवारयद्धर्मं भेरीघोषेण सर्वशः ॥ ६ ॥ वेनस्यावेद्य मुनयो दुर्वृत्तस्य विचेष्टितम् ॥ विमृश्य लोकव्यसनं कृपयोचुः स्म सत्रिणः ॥ ७ ॥ अहो उभयतः प्राप्तं लोकस्य व्यसनं महत् ॥ दारुण्युभयतो दीप्त इव तस्करपालयोः ॥ ८ ॥ अराजकभयादेष कृतो राजाऽतदर्हणः ॥ ततोऽप्यासीद्भयं त्वद्य कथं स्यात्स्वस्ति देहिनाम् ॥ ९ ॥ अहेरिव पयःपोषः पोषकस्याप्यनर्थभृत् ॥ वेनः प्रकृत्यैव खलः सुनीथागर्भसंभवः ॥ १० ॥ निरूपितः प्रजापालः स जिघांसति वै प्रजाः ॥ तथापि सांत्वयेमामुं नास्मांस्तत्पातकं स्पृशेत् ॥ ११ ॥ तद्विद्वद्भिरसद्वृत्तो वेनोऽस्माभिः कृतो नृपः ॥ सांत्वितो यदि नो वाचं न ग्रहीष्यत्यधर्मकृत् ॥ १२ ॥ लोकधिक्कारसंदग्धं दहिष्यामः स्वतेजसा ॥ एवमध्यवसायैनं मुनयो गूढमन्यवः ॥ उपव्रज्याब्रुवन्वेनं सांत्वयित्वा च सामभिः ॥ १३ ॥ मुनय ऊचुः ॥ नृपवर्य निबोधैतद्यत्ते विज्ञापयाम भोः ॥ आयुःश्रीबलकीर्तीनां तव तात विवर्धनम् ॥ १४ ॥ धर्म आचरितः पुंसां वाङ्मनःकायबुद्धिभिः ॥ लोकान्विशोकान्वितरत्यथानंत्यमसंगिनाम् ॥ १५ ॥ स ते मा विनशेद्वीर प्रजानां क्षेमलक्षणः ॥ यस्मिन्विनष्टे नृपतिरैश्वर्यादवरोहति ॥ १६ ॥ राजन्नसाध्वमात्येभ्यश्चोरादिभ्यः प्रजा नृपः ॥ रक्षन्यथा बलिं गृह्णन्निह प्रेत्य च मोदते ॥ १७ ॥ यस्य राष्ट्रे पुरे चैव भगवान्यज्ञपूरुषः ॥ इज्यते स्वेन धर्मेण जनैर्वर्णाश्रमान्वितैः ॥ १८ ॥ तस्य राज्ञो महाभाग भगवा-न्भूतभावनः ॥ परितुष्यति विश्वात्मा तिष्ठतो निजशासने ॥ १९ ॥ तस्मिंस्तुष्टे किमप्राप्यं जगतामीश्वरेश्वरे ॥ लोकाः सपाला ह्येतस्मै हरंति बलिमादृताः ॥ २० ॥ तं सर्वलोकामरयज्ञसंग्रहं त्रयीमयं द्रव्यमयं तपोमयम् ॥ यज्ञैर्विचित्रैर्यजतो भवाय ते राजन्स्वदेशाननुरोद्धुमर्हसि ॥ २१ ॥

वाहुः । अराजकभयादिति । अतदर्हणो राज्यानर्हः ॥ ९ ॥ अस्माकमप्यनिष्टं जातमित्याहुः । अहेर्यथा पयःपोषः क्षीरेण पोषणं पोषकस्याप्यनर्थं बिभर्ति पुष्णाति । तदेवाहुः । वेन इति ॥ १० ॥ निरूपितो नियुक्तोऽस्माभिः । सांत्वयेयोपपत्तिभिः प्रार्थयिष्यामः । तस्य पातकम् ॥ ११ ॥ स्वस्य तत्पातकस्पर्शे हेतुः । तत्पातकित्वं विद्वद्भिः ॥ १२ ॥ गूढो मन्युर्येषाम् । सामभिः प्रियोक्तिभिः ॥ १३ ॥ १४ ॥ निष्कामानामानंत्यं मोक्षमपि ॥ १५ ॥ मा विनशेन्मा विनश्यतु ॥ १६ ॥ असाधवो ये अमात्यास्तेभ्यः यथा यथाशास्त्रम् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ सर्वान्लोकांश्च

तत्पालानमरांश्च तत्प्रापकान्यज्ञांश्च संगृह्णाति नियच्छतीति तथा तं विचित्रैर्द्रव्ययज्ञादिभिः भवाय समृद्धये स्वदेशांस्तद्वासिनो जनान् । अनुरोद्धमनुवर्तितुम् ॥२१॥ युष्मद्विषये त्वद्देशे हरेः कला अंशाः सुराः तेषां सुराणां हेलनमवज्ञाम् ॥ २२ ॥ बालिशा अज्ञाः वृत्तिदमन्नादिप्रदं मां हित्वा ॥ २३ ॥ २४ ॥ भर्तृस्नेहो विदूरो येषाम् ॥ २५ ॥ २६ ॥ देहे भवंति । नृपतिरेवेश्वर इतरे तदंशा इति भावः ॥२७॥ बलिं च करादिकम् । अग्रभुगाराध्यः ॥ २८ ॥ २९ ॥ तेनासंस्कृताः भग्नायां याच्ञायां चुक्रुधुः क्रोधं चक्रुः ॥ ३० ॥ ३१ ॥ ३२ ॥ परिचक्षीत निंदेत अशुभं

यज्ञेन युष्मद्विषये द्विजातिभिर्वितायमानेन सुराः कला हरेः ॥ स्विष्टाः सुतुष्टाः प्रदिशंति वांछितं तद्धेलनं नार्हसि वीर चेष्टितुम् ॥ २२ ॥ वेन उवाच ॥ बालिशा बत यूयं वा अधर्मे धर्ममानिनः ॥ ये वृत्तिदं पतिं हित्वा जारं पतिमुपासते ॥ २३ ॥ अवजानंत्यमी मूढा नृपरूपिणमीश्वरम् ॥ नानुविंदंति ते भद्रमिह लोके परत्र च ॥ २४ ॥ को यज्ञपुरुषो नाम यत्र वो भक्तिरीदृशी ॥ भर्तृस्नेहविदूराणां यथा जारे कुयोषिताम् ॥ २५ ॥ विष्णुर्विरिंचो गिरिश इन्द्रो वायुर्यमो रविः ॥ पर्जन्यो धनदः सोमः क्षितिरग्निरपां पतिः ॥ २६ ॥ एते चान्ये च विबुधाः प्रभवो वरशापयोः ॥ देहे भवंति नृपतेः सर्वदेवमयो नृपः ॥ २७ ॥ तस्मान्मां कर्मभिर्विप्रा यजध्वं गतमत्सराः ॥ बलिं च मह्यं हरत मत्तोऽन्यः कोऽग्रभुक् पुमान् ॥ २८ ॥ मैत्रेय उवाच ॥ इत्थं विपर्ययमतिः पापीयानुत्पथं गतः ॥ अनुनीयमानस्तद्याच्ञां न चक्रे भ्रष्टमंगलः ॥ २९ ॥ इति तेऽसत्कृतास्तेन द्विजाः पंडितमानिना ॥ भग्नायां भव्ययाच्ञायां तस्मै विदुर चुक्रुधुः ॥ ३० ॥ हन्यतां हन्यतामेष पापः प्रकृतिदारुणः ॥ जीवन्जगदसावाशु कुरुते भस्मसाद्ध्रुवम् ॥ ३१ ॥ नायमर्हत्यसद्वृत्तो नरदेववरासनम् ॥ योऽधियज्ञपतिं विष्णुं विनिंदत्यनपत्रपः ॥३२॥ को वैनं परिचक्षीत वेनमेकमृतेऽशुभम् ॥ प्राप्त ईदृशमैश्वर्यं यदनुग्रहभाजनः ॥ ३३ ॥ इत्थं व्यवसिता हंतुमृषयो रूढमन्यवः ॥ निजघ्नुर्हुंकृतैर्वेनं हतमच्युतनिंदया ॥ ३४ ॥ ऋषिभिः स्वाश्रमपदं गते पुत्रकलेवरम् ॥ सुनीथा पालयामास विद्यायोगेन शोचती ॥ ३५ ॥ एकदा मुनयस्ते तु सरस्वत्सलिलाप्लुताः ॥ हुत्वाऽग्नीन्सत्कथाश्चक्रुरुपविष्टाः सरित्तटे ॥ ३६ ॥ वीक्ष्योत्थितान्महोत्पातानाहुर्लोकभयंकरान् ॥ अप्यभद्रमनाथाया दस्युभ्यो न भवेद्भुवः ॥ ३७ ॥ एवं मृशंत ऋषयो धावतां सर्वतो दिशम् ॥ पांसुः समुत्थितो भूरिश्चोराणामभिलुंपताम् ॥ ३८ ॥ तदुपद्रवमाज्ञाय लोकस्य वसु लुंपताम् ॥ भर्तर्युपरते तस्मिन्नन्योन्यं च जिघांसताम् ॥ ३९ ॥ चोरप्रायं जनपदं हीनसत्त्वमराजकम् ॥ लोकान्नावारयन् शक्ता अपि तद्दोषदर्शिनः ॥ ४० ॥ ब्राह्मणः समदृक्

वेनं विना । कृतघ्नतामाहुः । यदनुग्रहविषयः सन्नीदृशमैश्वर्यं यः प्राप्तः ॥ ३३ ॥ पूर्वं गूढमन्यव इदानीं रूढमन्यवः प्रकटकोपाः हुंकृतैर्हुंकारैः ॥३४॥ स्वाश्रमपदं प्रति ऋषिभिर्गते गमने कृते सती विद्यायोगेन मंत्रसहितया युक्त्या पालयामास ॥ ३५ ॥ पुंवद्भाव आर्षः । सरस्वत्याः सलिले आप्लुताः कृतस्नानाः विष्णुकथाश्चक्रुः ॥३६॥ तदा तूत्पातान्वीक्ष्य भुवो भद्रं न भवेत्किमित्याहुश्च ॥ ३७ ॥ एवं मृशंतस्तर्कयंत ऋषयः स्थिताः । तदा धावतां चोराणां भूरिः पांसुः समुत्थितः ॥३८॥ तत्तदा तेषां लोकस्य धनं लुंपतां जिघांसतां चोपद्रवमाज्ञाय ॥३९॥ तथा चोर-

प्रायमराजकं हीनसत्त्वं च जनपदमाज्ञाय शक्ता अप्यवारणे दोषदर्शिनोऽपि लुंपतो लोकान्नावारयन्नित्यन्वयः ॥ ४० ॥ शक्तानां क्षत्रियाणामवारणे दोष इति किं वक्तव्यम् । समदृगपि शांतोऽपि ब्राह्मणोऽपि यदि दीनानां समुपेक्षको भवेत्तर्हि तस्यापि ब्रह्म तपः स्रवति ॥ ४१ ॥ अत उपेक्षादोषपरिहाराय नांगस्येत्यादि विनिश्चित्य महीपतेरूरुं तरसा ममंथुरित्यन्वयः । संस्थातुं नाशं गंतुम् । यद्वा । ऋषय एव लुंपतो लोकान्नावारयन् । कथंभूताः । हुंकारेणैव वेनं निवारयितुं शक्ता अपि । तत्किम् । तस्मिन्निवारणे तन्मरणादिदोषदर्शिनः । न चोदासत चोरोपद्रुते दीनोपेक्षायां तपोहानिप्रसंगात् । न चान्यं तन्निवारकं राजानमकुर्वन् । अंगवंशोच्छेदस्यानर्हत्वात् । अतो वेनस्यैव देहं ममंथुरिति योज्यम् । बाहुको वामनः ॥४२॥४३॥ तमेवाह । काक इव कृष्णः

शांतो दीनानां समुपेक्षकः ॥ स्रवते ब्रह्म तस्यापि भिन्नभांडात्पयो यथा ॥ ४१ ॥ नांगस्य वंशो राजर्षेरेष संस्थातुमर्हति ॥ अमोघवीर्या हि नृपा वंशेऽस्मिन्केशवाश्रयाः ॥ ४२ ॥ विनिश्चित्यैवमृषयो विपन्नस्य महीपतेः ॥ ममंथुरूरुं तरसा तत्रासीद्बाहुको नरः ॥ ४३ ॥ काककृष्णोऽतिह्रस्वांगो ह्रस्वबाहुर्महाहनुः ॥ ह्रस्वपान्निम्ननासाग्रो रक्ताक्षस्ताम्रमूर्धजः ॥ ४४ ॥ तं तु तेऽवनतं दीनं किं करोमीति वादिनम् ॥ निषीदेत्यब्रुवंस्तात स निषादस्ततोऽभवत् ॥ ४५ ॥ तस्य वंश्यास्तु नैषादा गिरिकाननगोचराः ॥ येनाहरज्जायमानो वेनकल्मषमुल्बणम् ॥ ४६ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे पृथुचरिते निषादोत्पत्तिर्नाम चतुर्दशोऽध्यायः ॥ १४ ॥ मैत्रेय उवाच ॥ अथ तस्य पुनर्विप्रैरपुत्रस्य महीपतेः ॥ बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत ॥ १ ॥ तद्दृष्ट्वा मिथुनं जातमृषयो ब्रह्मवादिनः ॥ ऊचुः परमसंतुष्टा विदित्वा भगवत्कलाम् ॥ २ ॥ ऋषय ऊचुः ॥ एष विष्णोर्भगवतः कला भुवनपालनी ॥ इयं च लक्ष्म्याः संभूतिः पुरुषस्यानपायिनी ॥ ३ ॥ अत्र तु प्रथमो राज्ञां पुमान्प्रथयिता यशः ॥ पृथुर्नाम महाराजो भविष्यति पृथुश्रवाः ॥ ४ ॥ इयं च सुदती देवी गुणभूषणभूषणा ॥ अर्चिर्नाम वरारोहा पृथुमेवावरुंधती ॥ ५ ॥ एष साक्षाद्धरेरंशो जातो लोकरिरक्षया ॥ इयं च तत्परा हि श्रीरनुजज्ञेऽनपायिनी ॥ ६ ॥ मैत्रेय उवाच ॥ प्रशंसंति स्म तं विप्रा गंधर्वप्रवरा जगुः ॥ मुमुचुः सुमनोधाराः सिद्धा नृत्यंति स्वःस्त्रियः ॥ ७ ॥ शंखतूर्यमृदंगाद्या नेदुर्दुंदुभयो दिवि ॥ तत्र सर्व उपाजग्मुर्देवर्षिपितृणां गणाः ॥ ८ ॥ ब्रह्मा जगद्गुरुर्देवैः सहासृत्य सुरेश्वरैः ॥ वैन्यस्य दक्षिणे हस्ते दृष्ट्वा चिह्नं गदाभृतः ॥ ९ ॥ पादयोररविंदं च तं वै मेने हरेः कलाम् ॥ यस्याप्रतिहतं चक्रमंशः स

महत्यौ हनू कपोलप्रांतौ यस्य ह्रस्वौ पादौ यस्य ॥४४॥४५॥ गिरिः काननं च गोचर आश्रयो न तु पुरादिप्रवेशो येषाम् । तत्र हेतुः । येन कारणेनासावहरत्ततस्तस्य वंश्यास्तथाभूताः॥४६॥ इति श्रीमद्भागवते चतुर्थे टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥ ततः पंचदशे विप्रैर्मंथनाद्वेनबाहुनः ॥ जातस्य तु पृथोरुक्तमभिषेकार्हणादिकम् ॥ १ ॥ १ ॥ २ ॥ किमूचुरित्यत आह । एष इति चतुर्भिः । लक्ष्म्याः संभूतिः कला ॥ ३ ॥ अत्र यः पुमान्स तु महाराजो भविष्यति ॥४॥ सुदती शोभदंतवती गुणानां भूषणानां च भूषणरूपा अवरुंधती भर्तृत्वेन भजंती भविष्यति ॥५॥ अत्र हेतुः । एष इति । लोकस्य रिरक्षयिषया ॥ ६ ॥ स्वःस्त्रियः अप्सरसो नृत्यंति स्म ॥ ७ ॥ ८ ॥ देवैः सहासृत्यागत्य वैन्यस्य पृथोः चिह्नं रेखात्मकं चक्रम् ॥ ९ ॥ अप्रतिहतं

रेखांतरैरभिन्नं चक्रं यस्य चिह्नं स परमेश्वरस्यांशः ॥ १० ॥ आभिषेचनिकान्यभिषेकसाधनानि ॥ ११ ॥ १२ ॥ १३ ॥ हे वीर! वरासनमुत्तमासनम्। सलिलस्य स्रावो यस्मात् ॥ १४ ॥ द्वे वालव्यजने ॥ १५ ॥ ब्रह्ममयं वेदमयं वर्म कवचं तत्पत्नी श्रीः श्रियं संपदम् ॥ १६ ॥ दश चंद्राकाराणि बिंबानि कोशे यस्य तं असिं खड्गं शतचंद्रं चर्म रूपाश्रयमतिसुंदरम् ॥ १७ ॥ अजस्य गोश्च शृङ्गाभ्यां निर्मितं चापम्। योगमय्यौ पादस्पर्शमात्रेणाभीष्टदेशप्रापिके ॥ १८ ॥ नाट्यादिकौशलं खेचराः आत्मजं स्वप्रभवम् ॥ १९ ॥ तं स्तोतुमुपस्थिताः ॥ २० ॥ स्तावकान् स्तोतुमुद्यतान् अभिप्रेत्य ज्ञात्वा ॥ २१ ॥ लोके स्पष्टगुणस्य सतो मे स्तुतिः स्यात्। अधुना तु किमाश्रयो मे स्तवो योज्यताम्। अतो वो गिरोऽधुना मयि वितथा माभूवन् यद्वा लोकेऽधुनाऽस्पष्टगुणस्य मे किमाश्रयः स्तवः स्यात्। अत एव क्रियमाणः स्तवो मे मदन्यस्य योज्यतां न तु मे। वितथाभिधानापत्तेरित्यर्थः ॥ २२ ॥ तस्मात्परोक्षे कालांतरे स्पष्टेषु सत्स्वस्माकमुपश्रुतानि

परमेष्ठिनः ॥ १० ॥ यस्याभिषेक आरब्धो ब्राह्मणैर्ब्रह्मवादिभिः ॥ आभिषेचनिकान्यस्मा आजह्रुः सर्वतो जनाः ॥ ११ ॥ सरित्समुद्रा गिरयो नागा गावः खगा मृगाः ॥ द्यौः क्षितिः सर्वभूतानि समाजह्रुरुपायनम् ॥ १२ ॥ सोऽभिषिक्तो महाराजः सुवासाः साध्वलंकृतः ॥ पत्न्याऽर्चिषाऽलंकृतया विरेजेऽग्निरिवापरः ॥ १३ ॥ तस्मै जहार धनदो हैमं वीर वरासनम् ॥ वरुणः सलिलस्रावमातपत्रं शशिप्रभम् ॥ १४ ॥ वायुश्च वालव्यजने धर्मः कीर्तिमयीं स्रजम् ॥ इन्द्रः किरीटमुत्कृष्टं दंडं संयमनं यमः ॥ १५ ॥ ब्रह्मा ब्रह्ममयं वर्म भारती हारमुत्तमम् ॥ हरिः सुदर्शनं चक्रं तत्पत्न्यव्याहतां श्रियम् ॥ १६ ॥ दशचंद्रमसिं रुद्रः शतचंद्रं तथांबिका ॥ सोमोऽमृतमयानश्वांस्त्वष्टा रूपाश्रयं रथम् ॥ १७ ॥ अग्निराजगवं चापं सूर्यो रश्मिमयानिषून् ॥ भूः पादुके योगमय्यौ द्यौः पुष्पावलिमन्वहम् ॥ १८ ॥ नाट्यं सुगीतं वादित्रमंतर्धानं च खेचराः ॥ ऋषयश्चाशिषः सत्याः समुद्रः शंखमात्मजम् ॥ १९ ॥ सिंधवः पर्वता नद्यो रथवीथीर्महात्मनः ॥ सूतोऽथ मागधो बंदी तं स्तोतुमुपतस्थिरे ॥ २० ॥ स्तावकांस्तानभिप्रेत्य पृथुर्वैन्यः प्रतापवान् ॥ मेघनिर्ह्रादया वाचा प्रहसन्निदमब्रवीत् ॥ २१ ॥ पृथुरुवाच ॥ भो सूत हे मागध सौम्य बंदिंल्लोकेऽधुना स्पष्टगुणस्य मे स्यात् ॥ किमाश्रयो मे स्तव एष योज्यतां मा मय्यभूवन्वितथा गिरो वः ॥ २२ ॥ तस्मात्परोक्षेऽस्मदुपश्रुतान्यलं करिष्यथ स्तोत्रमपीच्यवाचः ॥ सत्युत्तमश्लोकगुणानुवादे जुगुप्सितं न स्तवयंति सभ्याः ॥ २३ ॥ महद्गुणानात्मनि कर्तुमीशः कः स्तावकैः स्तावयतेऽसतोऽपि ॥ तेऽस्या भविष्यन्निति विप्रलब्धो जनावहासं कुमतिर्न वेद ॥ २४ ॥ प्रभावो ह्यात्मनः स्तोत्रं जुगुप्संत्यपि विश्रुताः ॥ ह्रीमंतः परमोदाराः पौरुषं वा विगर्हितम्

यशांसि प्रतिस्तोत्रमलमत्यर्थं करिष्यथ। हे अपीच्यवाचो मधुरगिरः! सभ्यैः प्रेरिता वयं त्वामेव स्तुम इति चेत्तत्राह। उत्तमश्लोकस्य गुणानुवादे कार्ये सति जुगुप्सितमर्वाचीनं न स्तावयंति ॥ २३ ॥ ननु संभावितैरेव गुणैरात्मानं जनः स्तावयतीति चेत्तत्राह। महतां गुणानात्मनि संपादयितुं शक्तोऽप्यसतो गुणान्सम्भावनामात्रेण कः स्तावयते यद्वा आदावेव सतोऽपि कः स्तावयते स्वत एव प्रख्यातिसिद्धेः। अन्यस्तु मिथ्यागुणस्तुतिश्लाघी मंद इत्याह। त इति। यद्ययं शास्त्राभ्यासादिकमकरिष्यत्तर्ह्यस्य ते विद्यादयो गुणा अभविष्यन्निति क्रियातिपत्त्या विप्रलब्धो जनानामवहासं न वेद ॥ २४ ॥ किंच प्रभवोऽपि विश्रुता अपि ह्रीमंतोऽपि जुगुप्संति वेति दृष्टांते यथाऽतिस्तुतौ क्रियमाणायां विगर्हितं ब्राह्मणवधादि पौरुषं निंदंति तथोचितामपि स्तुतिं न सहंत इत्यर्थः

॥ २५ ॥ वरीमभिरिति दीर्घत्वमार्षं भवितृप्रधानोऽयं निर्देशः । वरिष्ठैः कर्मभिरविदिता इत्यर्थः ॥ २६ ॥ इति चतुर्थे टीकायां पंचदशोऽध्यायः ॥ १५ ॥ षोडशे सर्वलोकेशैः सत्कृतं मायया युतम् ॥ मुनिप्रयुक्ताः सूताद्याः स्तुवंति स्मेति वर्ण्यते ॥१॥ गायकाः सूतादयः ॥१॥ नालं न समर्थाः । यो भवान् । अवतारेष्वप्यस्याधिक्यमाहुः । वेनस्यांगाज्जातस्य ते पौरुषाणि प्रत्य-वितर्क्यतया ब्रह्मादीनापि धियो बभ्रमुः । कुतः पुनर्वयं तद्वर्णने समर्था भवेम ॥२॥ अथापि यथावद्वर्णयितुमशक्ता अपि कथामृते सादराः मुनिभिः कृत उपदेशो योगबलेन हृदि प्रकाशनं तद-नतिक्रम्य वितन्महि विस्तारयामः ॥ ३ ॥ ४ ॥ तनौ स्वदेहे लोकपालानां तनूर्मूर्तीः काले बिभर्ति यथाभागं पालनपोषणानुरंजनादिकार्यानुसारेण यज्ञादिप्रवर्तनेन स्वर्गस्य हितं वृष्ट्यादिना च भूर्लोकस्य हितं यथा भवति तथा ॥ ५ ॥ सूर्यादितनुधारणमेवाहाष्टभिः । वसु धनं करादानकाले आदत्ते दुर्भिक्षादिकाले विमुंचति च । अष्टौ मासान्सूर्यो यथा वसु जलमादत्ते वर्षासु विमुंचति

॥ २५ ॥ वयं त्वविदिता लोके सूताद्यापि वरीमभिः ॥ कर्मभिः कथमात्मानं गापयिष्याम बालवत् ॥ २६ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पृथुचरिते पंचदशोऽध्यायः ॥ १५ ॥ मैत्रेय उवाच ॥ इति ब्रुवाणं नृपतिं गायका मुनिचोदिताः ॥ तुष्टुवुस्तुष्टमनसस्तद्वागमृतसेवया ॥ १ ॥ नालं वयं ते महिमानुवर्णने यो देववर्योऽवततार मायया ॥ वेनांगजातस्य च पौरुषाणि ते वाचस्पतीनामपि बभ्रमुर्धियः ॥ २ ॥ अथाप्युदारश्रवसः पृथोर्हरेः कलावतारस्य कथामृतादृताः ॥ यथोपदेशं मुनिभिः प्रचोदिताः श्लाघ्यानि कर्माणि वयं वितन्महि ॥ ३ ॥ एष धर्मभृतां श्रेष्ठो लोकं धर्मेऽनुवर्तयन् ॥ गोप्ता च धर्मसेतूनां शास्ता तत्परिपंथिनाम् ॥ ४ ॥ एष वै लोकपालानां बिभर्त्येकस्तनौ तनूः ॥ काले काले यथाभागं लोकयोरुभयोर्हितम् ॥ ५ ॥ वसु काल उपादत्ते काले चायं विमुन्चति ॥ समः सर्वेषु भूतेषु प्रतपन्सूर्यवद्विभुः ॥ ६ ॥ तितिक्षत्यक्रमं वैन्य उपर्याक्रमतामपि ॥ भूतानां करुणः शश्वदार्तानां क्षितिवृत्तिमान् ॥७॥ देव वर्षत्यसौ देवो नरदेववपुर्हरिः ॥ कृच्छ्रप्राणाः प्रजा ह्येष रक्षिष्यत्यन्जसेन्द्रवत् ॥८॥ आप्याययत्यसौ लोकं वदनामृतमूर्तिना ॥ सानुरागावलोकेन विशदस्मितचारुणा ॥ ९ ॥ अव्यक्तवर्त्मैष निगूढकार्यो गंभीरवेधा उपगुप्तवित्तः ॥ अनन्तमाहात्म्यगुणैकधामा पृथुः प्रचेता इव संवृतात्मा ॥ १० ॥ दुरासदो दुर्विषह आसन्नोपि विदूरवत् ॥ नैवाभिभवितुं शक्यो वेनारण्युत्थितोऽनलः ॥ ११ ॥ अन्तर्बहिश्च भूतानां पश्यन्कर्माणि चारणैः ॥ उदासीन इवाध्यक्षो वायुरात्मैव देहिनाम् ॥ १२ ॥ नादंड्यं दंडयत्येष सुतमात्मद्वि-

तद्वत् ॥ ६ ॥ मस्तके पादेनाक्रमतामप्यार्तानां भूतानामतिक्रमं सहिष्यते क्षितेर्वृत्तिः सर्वसहनं सा वृत्तिर्यस्यास्ति स तथा ॥७॥ देवे वर्षति एष कृच्छ्रं गताः प्राणा यासां ताः प्रजाः स्वयं वृष्टिं कृत्वा रक्षिष्यति । अत्र हेतुः । असौ नरदेववपुर्हरिरिति ॥ ८ ॥ वदनमेवामृतमूर्तिश्चंद्रस्तेन सानुरागोऽवलोको यस्मिन् । विशदं यत्स्मितं तेन चारुणा । अत्र च क्वचिद्वर्तमाननिर्देशो वर्तमान-सामीप्ये वर्तमानवद्वेति भूतनिर्देशश्चाशंसायां भूतवच्चेति द्रष्टव्यः ॥९॥ न व्यक्तं वर्त्म प्रवेशनिर्गममार्गो यस्य निगूढं निष्पत्तेः पूर्वमविज्ञातं कार्यं यस्य । तच्च कार्यं गंभीरं किमर्थमेतत्कृतमित्यन्यै-रज्ञाताभिप्रायं विधत्त इति तथा उपगुप्तं सुरक्षितं वित्तं यस्य अनंतमाहात्म्यश्चासौ गुणानामेकं धाम विष्णुर्यस्मिन् अनंतमाहात्म्योपेता गुणा एवैकं धाम स्थानं यस्येति वा । संवृतात्मा संयतमूर्तिः समुद्रचरत्वेन वरुणस्याप्येते गुणा द्रष्टव्याः ॥१०॥ दुरासदः शत्रोर्मनसापि प्राप्तुमशक्यः । दुर्विषहः शत्रुभिः सोढुमशक्यः विदूरवत्पौरुषेणाभिभवितुमशक्यः वेन एवारणिस्तस्मादुत्थितः ॥११॥

चारणैर्गुप्तभृत्यैः पश्यन्नपि स्वस्तुतिनिंदादावुदासीन इव वर्तिष्यते तथा देहिनामध्यक्षोऽविकृत आत्मभूतो वायुः सूत्रात्मा तद्वत् ॥ १२ ॥ आत्मद्विषां सुतमिति सुतग्रहणं स्वात्मजसाम्यार्थम् । धर्मपथे यमस्य वृत्ते स्थितः ॥१३॥ चक्रमाज्ञा सेना वा रथस्य वा चक्रं मानसाचलमभिव्याप्य प्रवर्तते । किं पर्यंतमित्यत आह । अर्को रश्मिगणैर्यावत्तपति तावत् ॥१४॥ यद्यस्माद्रंजयिष्यत्यथ तस्मान्मनोरंजनैर्हेतुभिरमुं राजानमाहुः । मनोरंजनकैरिति चेष्टितविशेषणं वा ॥ १५ ॥ १६ ॥ मातरीव भक्तिर्भजनं यस्य । आत्मनो देहस्यार्ध इव पत्न्यां प्रीतिमान् ॥१७॥ नंदिं सुखं वर्धयतीति तथा । मुक्तसंगेषु प्रकृष्टः संगो यस्य दंडपाणिरिवेत्यपराधानुपेक्षणमुच्यते । नादंड्यमित्यत्र पक्षपाताभाव उक्तः ॥ १८ ॥ अयं त्विति । तुशब्देन निरुपमत्वं दर्शयति । कोऽसावात्मा

षामपि ॥ दंडयत्यात्मजमपि दंड्यं धर्मपथे स्थितः ॥ १३ ॥ अस्याप्रतिहतं चक्रं पृथोरामानसाचलात् ॥ वर्तते भगवानर्को यावत्तपति गोगणैः ॥ १४ ॥ रंजयिष्यति यल्लोकमयमात्मविचेष्टितैः ॥ अथामुमाहू राजानं मनोरंजनकैः प्रजाः ॥ १५ ॥ दृढव्रतः सत्यसंधो ब्रह्मण्यो वृद्धसेवकः ॥ शरण्यः सर्वभूतानां मानदो दीनवत्सलः ॥ १६ ॥ मातृभक्तिः परस्त्रीषु पत्न्यामर्ध इवात्मनः ॥ प्रजासु पितृवत्स्निग्धः किंकरो ब्रह्मवादिनाम् ॥ १७ ॥ देहिनामात्मवत्प्रेष्ठः सुहृदां नंदिवर्धनः ॥ मुक्तसंगप्रसंगोऽयं दंडपाणिरसाधुषु ॥ १८ ॥ अयं तु साक्षाद्भगवांस्त्र्यधीशः कूटस्थ आत्मा कलयाऽवतीर्णः ॥ यस्मिन्नविद्यारचितं निरर्थकं पश्यंति नानात्वमपि प्रतीतम् ॥१९॥ अयं भुवो मंडलमोदयाद्रेर्गोप्तैकवीरो नरदेवनाथः ॥ आस्थाय जैत्रं रथमात्तचापः पर्यस्यते दक्षिणतो यथार्कः ॥ २० ॥ अस्मै नृपालाः किल तत्र तत्र बलिं हरिष्यंति सलोकपालाः ॥ मंस्यंत एषां स्त्रिय आदिराजं चक्रायुधं तद्यश उद्धरंत्यः ॥ २१ ॥ अयं महीं गां दुदुहेऽधिराजः प्रजापतिर्वृत्तिकरः प्रजानाम् ॥ यो लीलयाद्रीन्स्वशरासकोट्या भिंदन्समां गामकरोद्यथेन्द्रः ॥ २२ ॥ विस्फूर्जयन्नाजगवं धनुः स्वयं यदाऽचरत्क्ष्मामविषह्यमाजौ ॥ तदा निलिल्युर्दिशि दिश्यसंतो लांगूलमुद्यम्य यथा मृगेन्द्रः ॥ २३ ॥ एषोऽश्वमेधान् शतमाजहार सरस्वती प्रादुरभावि यत्र ॥ अहारषीद्यस्य हयं पुरंदरः शतक्रतुश्चरमे वर्तमाने ॥ २४ ॥ एष स्वसद्मोपवने समेत्य सनत्कुमारं भगवंतमेकम् ॥ आराध्य भक्त्या लभतामलं तज्ज्ञानं यतो ब्रह्म परं विदंति ॥२५॥ तत्र तत्र गिरस्तास्ता इति विश्रुतविक्रमः॥ श्रोष्यत्यात्माश्रिता गाथाः पृथुः पृथुपराक्रमः ॥ २६ ॥ दिशो विजित्याप्रतिरुद्धचक्रः स्वतेजसोत्पाटितलोकशल्यः ॥ सुरासुरेन्द्रैरुपगीयमानमहानुभावो भविता पतिर्भुवः ॥ २७ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे षोडशोऽध्यायः ॥ १६ ॥ मैत्रेय उवाच ॥ एवं स भगवान्वैन्यः

तमाह । यस्मिन्प्रतीतमपि नानात्वमर्थशून्यं पश्यंति ॥१९॥ आउदयाद्रेस्तत्पर्यंतं गोप्ता गोपायिष्यति तदर्थं पर्यस्यते पर्यटिष्यति प्रदक्षिणीकरिष्यतीत्यर्थः ॥ २० ॥ अस्मै तथा प्रदक्षिणं कुर्वते मंस्यंत ज्ञास्यंति । तस्य यश उद्धरंत्य उदाहरंत्यः कीर्तयंत्यः ॥२१॥ इन्द्र इवाद्रीन्विभिंदन् ॥२२॥ लांगूलमुन्नमय्य यथा मृगेन्द्रश्चरति तथा धनुर्विस्फूर्जयन्यदा क्ष्मामचरत् ॥२३॥ सरस्वती यत्र प्रादुरभावि प्रादुरभूत् । कर्मकर्तरि णिच् । तत्राहार्षीत् हरणं करिष्यतीत्यर्थः ॥ २४ ॥ २५ ॥ विश्रुता विक्रमा यस्य । गाथाः प्रबंधान् । आत्माश्रिता विष्ण्वाश्रिताः ॥२६॥ उपगीयमानो महानुभावो यस्य ॥२७॥ इति श्रीमद्भागवते चतुर्थे टीकायां षोडशोऽध्यायः ॥ १६ ॥ ततः सप्तदशे लोकक्षुधाः प्रशमयन्पृथुः ॥ ग्रस्तबीजां महीं हंतुं यत्तो भीत्या तया स्तुतः ॥ १ ॥

छंदयामास तेपितवान् ॥ १ ॥ भृत्यानमात्यान्पुरोधसः पुरोहितांश्च श्रेणीस्तैलिकतांबूलिकादीन्पौरविशेषान् प्रकृतीर्नियोगिनः ॥ २ ॥ दोहनं पात्रम् ॥ ३ ॥ मेध्यं यज्ञार्हम् ॥ ४ ॥ सविज्ञानमपरोक्षज्ञानसहितम् ॥ ५ ॥ पूर्वदेहः पृथ्ववतारस्तत्कथाश्रयम् । श्रवो यशः सुष्ठु श्रवो यस्य ॥ ६ ॥ अदुह्यद्दुग्धवान् ॥ ७ ॥ ८ ॥ जनतायास्त्वं पाल इत्यामंत्रितो नियुक्तः तदा निरन्ने क्षितितले सति क्षुधा क्षामाः क्षीणा देहा यासां ताः प्रजा एत्य पतिं पृथुमब्रुवन् ॥ ९ ॥ जाठरेणाग्निनाऽभितप्ताः । यः साधितो विप्रैर्मंथनेन संपादितस्तं त्वां शरणं याताः ॥ १० ॥ तत्तस्मान्नोऽस्माकमन्नं

ख्यापितो गुणकर्मभिः ॥ छंदयामास तान्कामैः प्रतिपूज्याभिनंद्य च ॥ १ ॥ ब्राह्मणप्रमुखान्वर्णान्भृत्यामात्यपुरोधसः ॥ पौरान् जानपदान् श्रेणीः प्रकृतीः समपूजयत् ॥ २ ॥ विदुर उवाच ॥ कस्माद्दधार गोरूपं धरित्री बहुरूपिणी ॥ यां दुदोह पृथुस्तत्र को वत्सो दोहनं च किम् ॥ ३ ॥ प्रकृत्या विषमा देवी कृता तेन समा कथम् ॥ तस्य मेध्यं हयं देवः कस्य हेतोरपाहरत् ॥ ४ ॥ सनत्कुमाराद्भगवतो ब्रह्मन्ब्रह्मविदुत्तमात् ॥ लब्ध्वा ज्ञानं सविज्ञानं राजर्षिः कां गतिं गतः ॥ ५ ॥ यच्चान्यदपि कृष्णस्य भवान्भगवतः प्रभोः ॥ श्रवः सुश्रवसः पुण्यं पूर्वदेहकथाश्रयम् ॥ ६ ॥ भक्ताय मेऽनुरक्ताय तव चाधोक्षजस्य च ॥ वक्तुमर्हसि योऽदुह्यद्वैन्यरूपेण गामिमाम् ॥ ७ ॥ सूत उवाच ॥ चोदितो विदुरेणैवं वासुदेवकथां प्रति ॥ प्रशस्य तं प्रीतमना मैत्रेयः प्रत्यभाषत ॥ ८ ॥ मैत्रेय उवाच ॥ यदाभिषिक्तः पृथुरंग विप्रैरामंत्रितो जनतायाश्च पालः ॥ प्रजा निरन्ने क्षितिपृष्ठ एत्य क्षुत्क्षामदेहाः पतिमभ्यवोचन् ॥ ९ ॥ वयं राजन् जाठरेणाभितप्ता यथाऽग्निना कोटरस्थेन वृक्षाः ॥ त्वामद्य याताः शरणं शरण्यं यः साधितो वृत्तिकरः पतिर्नः ॥ १० ॥ तन्नो भवानीहतु रातवेऽन्नं क्षुधार्दितानां नरदेवदेव ॥ यावन्न नंक्ष्यामह उज्झितोर्जा वार्तापतिस्त्वं किल लोकपालः ॥ ११ ॥ मैत्रेय उवाच ॥ पृथुः प्रजानां करुणं निशम्य परिदेवितम् ॥ दीर्घंदध्यौ कुरुश्रेष्ठ निमित्तं सोऽन्वपद्यत ॥ १२ ॥ इति व्यवसितो बुद्ध्या प्रगृहीतशरासनः ॥ संदधे विशिखं भूमेः क्रुद्धस्त्रिपुरहा यथा ॥ १३ ॥ प्रवेपमाना धरणी निशाम्योदायुधं च तम् ॥ गौः सत्यपाद्रवद्भीता मृगीव मृगयुद्रुता ॥ १४ ॥ तामन्वधावत्तद्वैन्यः कुपितोऽत्यरुणेक्षणः ॥ शरं धनुषि संधाय यत्र यत्र पलायते ॥ १५ ॥ सा दिशो विदिशो देवी रोदसी चांतरं तयोः ॥ धावती तत्र तत्रैनं ददर्शानूद्यतायुधम् ॥ १६ ॥ लोके नाविंदत त्राणं वैन्यान्मृत्योरिव प्रजाः ॥ त्रस्ता तदा निववृते हृदयेन विदूयता ॥ १७ ॥ उवाच च महाभागं धर्मज्ञापन्नवत्सल ॥ त्राहि मामपि भूतानां पालनेऽवस्थितो भवान् ॥ १८ ॥ स त्वं जिघांससे कस्माद्दीनामकृतकिल्बिषाम् ॥ अहनिष्यत्कथं योषां धर्मज्ञ इति यो मतः ॥ १९ ॥ प्रहरंति न वै स्त्रीषु कृतागःस्वपि जंतवः ॥ किमुत त्वद्विधा

रातवे रातुं दातुमीहतु ईहतां यत्नं करोतु । उज्झितोर्जास्त्यक्तान्नाः सत्यः वार्ताया जीविकायाः पतिः ॥ ११ ॥ परिदेवितं विलापम् । निमित्तं हेतुमन्वपद्यत ज्ञातवान् ॥ १२ ॥ पृथिव्या ओषधिबीजानि ग्रस्तानीति व्यवसितो निश्चितवान्सन् ॥ १३ ॥ मृगयुना द्रुतानुगता मृगीव ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ यो धर्मज्ञ इति मतः स भवान् योषां मां कथमहनिष्यद्धनिष्यति

॥ १९ ॥ २० ॥ अजरां दृढाम् । धास्यसि धारयिष्यसि ॥२१॥ बर्हिषि यज्ञे या भवती देवतारूपेण भागं वृंक्ते भजते । वसु धान्यादिकम् ॥२२॥ गोरूपेण तु यवसं तृणं जग्धि अत्तीत्यर्थः । पयस्तु नैव दोग्धि दुग्धं न स्रवति । अत्रास्मिन्नपराधे ॥ २३ ॥ आत्मनि देहे रुद्धानि ॥ २४ ॥ मद्वधे सर्वथा अन्नं न स्यादिति चेदत आह । अमूषां प्रजानाम् । मेदसा मांसेन ॥ २५ ॥ यदुक्तं योषां कथं हनिष्यतीति तत्राह । पुमानिति । तस्य वधोऽवध एव ॥ २६ ॥ यच्चोक्तं कथमंभसि धास्यसीति तत्राह । त्वामिति । तिलशस्तिलप्रमाणानि खंडानि इत्येवं भूतामवस्थां नीत्वा ॥ २७ ॥ मन्युमयीं मूर्तिं बिभ्रतः कृतांततुल्यत्वमुच्यते । न तु कृतांतस्य मन्युमयी मूर्तिरिति ॥२८॥ शुद्धसत्त्वतनुं देवमकस्मादतिदारुणम् ॥ वीक्षमाणा पृथुं पृथ्वी तुष्टाव करुणोक्तिभिः ॥ मायया विन्यस्ता रचिता नाना घोरादितनवो येन गुणात्मने गुणमयत्वेन प्रतीयमानाय । वस्तुतस्तु निर्धुता निरस्ता द्रव्यक्रियाकारकेष्वधिभूताध्यात्माधिदेवेषु विभ्रमोऽहंकारस्त-

राजन्करुणा दीनवत्सलाः ॥ २० ॥ मां विपाट्याजरां नावं यत्र विश्वं प्रतिष्ठितम् ॥ आत्मानं च प्रजाश्चेमाः कथमंभसि धास्यसि ॥ २१ ॥ पृथुरुवाच ॥ वसुधे त्वां वधिष्यामि मच्छासनपराङ्मुखीम् ॥ भागं बर्हिषि या वृंक्ते न तनोषि च नो वसु ॥ २२ ॥ यवसं जग्ध्यनुदिनं नैव दोग्ध्योधसं पयः ॥ तस्यामेवं हि दुष्टायां दंडो नात्र न शस्यते ॥ २३ ॥ त्वं खल्वोषधिबीजानि प्राक्सृष्टानि स्वयंभुवा ॥ न मुंचस्यात्मरुद्धानि मामवज्ञाय मंदधीः ॥ २४ ॥ अमूषां क्षुत्परीतानामार्तानां परिदेवितम् ॥ शमयिष्यामि मद्बाणैर्भिन्नायास्तव मेदसा ॥ २५ ॥ पुमान्योषिदुत क्लीब आत्मसंभावनोऽधमः ॥ भूतेषु निरनुक्रोशी नृपाणां तद्वधोऽवधः ॥ २६ ॥ त्वां स्तब्धां दुर्मदां नीत्वा मायागां तिलशः शरैः ॥ आत्मयोगबलेनेमा धारयिष्याम्यहं प्रजाः ॥ २७ ॥ एवं मन्युमयीं मूर्तिं कृतांतमिव बिभ्रतम् ॥ प्रणता प्रांजलिः प्राह मही संजातवेपथुः ॥ २८ ॥ धरोवाच ॥ नमः परस्मै पुरुषाय मायया विन्यस्तनानातनवे गुणात्मने ॥ नमः स्वरूपानुभवेन निर्धुतद्रव्यक्रियाकारकविभ्रमोर्मये ॥ २९ ॥ येनाहमात्मायतनं विनिर्मिता धात्रा यतोऽयं गुणसर्गसंग्रहः ॥ स एव मां हंतुमुदायुधः स्वराडुपस्थितोऽन्यं शरणं कमाश्रये ॥ ३० ॥ य एतदादावसृजच्चराचरं स्वमाययात्माश्रययाऽवितर्क्यया ॥ तयैव सोऽयं किल गोप्तुमुद्यतः कथं नु मां धर्मपरो जिघांसति ॥३१॥ नूनं बतेशस्य समीहितं जनैस्तन्मायया दुर्जययाऽकृतात्मभिः ॥ न लक्ष्यते यस्त्वकरोदकारयद्योऽनेक एकः परतश्च ईश्वरः ॥३२॥ सर्गादि योऽस्यानुरुणद्धि शक्तिभिर्द्रव्यक्रियाकारकचेतनात्मभिः ॥ तस्मै समुन्नद्धनिरुद्धशक्तये नमः परस्मै पुरुषाय वेधसे ॥ ३३ ॥ स वै भवानात्मविनिर्मितं जगद्भूतेन्द्रियान्तःकरणात्मकं विभो ॥ संस्थापयिष्यन्नज

श्चित्ता ऊर्मयो रागद्वेषादयश्च यस्मिंस्तस्मै ॥ २९ ॥ अहो सर्वजीवाश्रयत्वेन सृष्टां मां कथं हंतुं प्रवर्तत इत्याह । येन विधात्रात्मनां जीवानामायतनमहं निर्मिता । यतो यस्यां मयि गुणसर्गस्य चतुर्विधभूतग्रामस्य संग्रहो धारणम् । स्वराट् स्वतंत्रः ॥३०॥ सृष्टिसंहारकारकोऽहमेवेति चेत्तथापि प्रजापालने प्रवृत्तस्य मद्वधोऽनुचित एवेत्याह । य एतदिति । आत्माश्रयया जीवविषयिण्या ॥ ३१ ॥ अतो दुर्ज्ञेयमीश्वरचेष्टितमित्याह । नूनमिति । अकृतात्मभिर्विक्षिप्तचित्तैः य ईश्वरः स्वतंत्रः अकरोद्ब्रह्माणम् । परत इति तेन ब्रह्मणा चराचरमकारयत् । यश्च स्वत एकः परतो मायया-ऽनेकः ॥ ३२ ॥ तस्मादचिंत्यशक्तये केवलं नम इत्याह । सर्गादि जन्मस्थितिभंगमस्य जगतोऽनुरुणद्ध्यनुवर्तते करोति । द्रव्याणि महाभूतानि क्रिया इंद्रियाणि कारका देवाः चेतना बुद्धिः आत्मा-

ऽहंकारः तैः स्वशक्तिरूपैः संनद्धाः समुत्कटा निरुद्धाः शक्तयो यस्य ॥ ३३ ॥ प्राणिनां धारणार्थं मां रसातलादुद्धृत्येदानीं प्रजारक्षणे प्रवृत्तस्य मद्वधो न युक्त इति सकरुणमाह द्वाभ्याम् । हे अज ! या सृष्टवान्स एव भवान्स्वनिर्मितं चराचरं जगत्सम्यक् स्थापयितुमादिसूकरः सन्मामभ्युज्जहार ॥३४॥ स एव धराधरो वाराहोऽद्यापामुपस्थे उपरि मयि नावि आधारभूतायामवस्थिताः प्रजा रक्षितुमिच्छुर्वीरमूर्तिः पृथुरूपः समभूत् । एवंभूतो यः स त्वं पयसि निमित्ते मां जिघांससीति चित्रमित्यर्थः ॥ ३५ ॥ तस्मादीश्वरचेष्टितं दुर्ज्ञेयमिति कैमुत्यन्यायेनोपसंहरति । नूनमिति । तस्येश्वरस्य गुणसर्गरूपया मायया मोहितं चित्तमेव वर्त्म येषाम् । मोहितानि चित्तवर्त्मानि येषामिति वा तैर्जनैरीश्वराणां हरिभक्तानामेव तावदीहितं न ज्ञायते किं पुनस्तस्य परमेश्वरस्य । अतएव परमेश्वरवत्तेभ्योऽपि नम एव केवलम् । वीराणां जितेन्द्रियाणां यशः कुर्वंति ये तेभ्यः यथा वीराणां यशो वर्धेत तथा चेष्टतां न तु यथेष्टमिति भावः ॥ ३६ ॥ इति श्रीमद्भागवते चतुर्थे टीकायां

मां रसातलादभ्युज्जहारांभस आदिसूकरः ॥ ३४ ॥ अपामुपस्थे मयि नाव्यवस्थिताः प्रजा भवानद्य रिरक्षिषुः किल ॥ स वीरमूर्तिः समभूद्धराधरो यो मां पयस्युग्रशरो जिघांससि ॥ ३५ ॥ नूनं जनैरीहितमीश्वराणामस्मद्विधैस्तद्गुणसर्गमायया ॥ न ज्ञायते मोहितचित्तवर्त्मभिस्तेभ्यो नमो वीरयशस्करेभ्यः ॥ ३६ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पृथुविजये धरित्रीनिग्रहो नाम सप्तदशोऽध्यायः ॥ १७ ॥ मैत्रेय उवाच ॥ इत्थं पृथुमभिष्टूय रुषा प्रस्फुरिताधरम् ॥ पुनराहावनिर्भीता संस्तभ्यात्मानमात्मना ॥ १ ॥ संनियच्छाभिभो मन्युं निबोध श्रावितं च मे ॥ सर्वतः सारमादत्ते यथा मधुकरो बुधः ॥ २ ॥ अस्मिँल्लोकेऽथवाऽमुष्मिन्मुनिभिस्तत्त्वदर्शिभिः ॥ दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयःप्रसिद्धये ॥ ३ ॥ तानातिष्ठति यः सम्यगुपायान्पूर्वदर्शितान् ॥ अवरः श्रद्धयोपेत उपेयान्विंदतेऽञ्जसा ॥ ४ ॥ ताननादृत्य यो विद्वानर्थानारभते स्वयम् ॥ तस्य व्यभिचरंत्यर्था आरब्धश्च पुनः पुनः ॥ ५ ॥ पुरा सृष्टा ह्योषधयो ब्रह्मणा या विशांपते ॥ भुज्यमाना मया दृष्टा असद्भिरधृतव्रतैः ॥ ६ ॥ अपालिताऽनादृता च भवद्भिर्लोकपालकैः ॥ चोरीभूतेऽथ लोकेऽहं यज्ञार्थेऽग्रसमोषधीः ॥ ७ ॥ नूनं ता वीरुधः क्षीणा मयि कालेन भूयसा ॥ तत्र योगेन दृष्टेन भवानादातुमर्हति ॥ ८ ॥ वत्सं कल्पय मे वीर येनाहं वत्सला तव ॥ धोक्ष्ये क्षीरमयान्कामाननुरूपं च दोहनम् ॥ ९ ॥ दोग्धारं च महाबाहो भूतानां भूतभावन ॥ अन्नमीप्सितमूर्जस्वद्भगवान्वांछते यदि ॥ १० ॥ समां च कुरु मां राजन्देववृष्टं यथा पयः ॥ अपर्तावपि भद्रं ते

सप्तदशोऽध्यायः ॥ १७ ॥ अष्टादशे महीवाक्याद्वत्सपात्रादिभेदतः ॥ पृथ्वादिस्तु सा दुग्धा स्वं स्वं दुग्धामितीर्यते ॥ १ ॥ १ ॥ हे अभिभो प्रभो यद्वा भो देव ! अभि अभयं यथा भवत्येवं मन्युं संनियच्छ । श्रावितं विज्ञापितम् । न मद्वाक्येऽनादरः कर्तव्य इत्याह । बुधो हि सर्वतः सारमादत्ते ॥ २ ॥ मयि जीर्णाश्चोषधीरुपायेन गृहाणेति वक्तुमुपायेन सर्वं सिद्ध्यति नान्यथेत्याह । अस्मिन्निति त्रिभिः । पुंसां श्रेयसः पुरुषार्थस्य प्रसिद्धयेऽस्मिँल्लोके कृष्यादयोऽमुष्मिंश्च लोकेऽग्निहोत्रादयो योगा उपाया दृष्टाः प्रयुक्ता अनुष्ठिताश्च ॥ ३ ॥ पूर्वैर्दर्शितान् अवरोऽर्वाचीनः ॥ ४ ॥ अविद्वान्विद्वानपीति वा व्यभिचरन्ति न सिद्ध्यन्ति ॥ ५ ॥ सहेतुकमुपायमाह । पुरेति षड्भिः ॥ ६ ॥ भवद्भिरिति राजसामान्याभिप्रायेण वेनादिभिरिति वा अपालिता चोराद्यनिवारणात् अनादृता च यज्ञादिप्रवर्तनाभावात् यज्ञार्थे अग्रसं गिलितवती । अन्यथा धृतव्रतैर्भुक्ता न प्रसोष्यंते । ततश्च यज्ञादयो न सिद्ध्येरन्निति भावः ॥ ७ ॥ क्षीणा जीर्णाः ॥८॥ दोहनं दोहपात्रम् । दोग्धारं

चोपकल्पय धोक्ष्ये प्रपूरयिष्यामि ॥ ९ ॥ भूतानामीप्सितमन्नम् । ऊर्जस्वद्बलप्रदम् ॥ १० ॥ अपगतेऽपि वर्षर्तौ देववृष्टमुदकं यथा मे मयि सर्वतो वर्तेत ॥११॥ मनु स्वायंभुवम् । ओषधीर्व्रीह्यादीः ॥१२॥ प्रसंगादर्थांतरमाह तथेति । यथा पृथुरेवं सर्वत्र वाक्ये परेऽपि सारमाददते प्रस्तुतमनुवर्तयति । ततोऽन्ये च ऋष्यादयः पंचदश दुदुहुः । पृथुना भावितां वशीकृताम् ॥१३॥ देवीं पृथ्वीम् । वाङ्मनःश्रवणैर्वेदग्रहणादिंद्रियाणां पात्रत्वम् ॥१४॥ सोमममृतम् । वीर्यं मनःशक्तिम् । ओज इंद्रियशक्तिम् । बलं देहशक्तिं च तदेव पयः ॥ १५ ॥ सुरामासवं च तालादिमद्यम् ॥ १६ ॥ मधु वाङ्माधुर्यं सौभगं सौंदर्यं तत्सहितम् ॥ १७ ॥ कव्यं पितृणामन्नम् । आमपात्रे अपक्वे मृन्मये अधुक्षत दुदुहुः ॥ १८ ॥ संकल्पनामयीमणिमादिसिद्धिम् । ये विद्याधरादयस्ते च

उपावर्तेत मे विभो ॥ ११ ॥ इति प्रियं हितं वाक्यं भुव आदाय भूपतिः ॥ वत्सं कृत्वा मनुं पाणावदुहत्सकलौषधीः ॥ १२ ॥ तथापरे च सर्वत्र सारमाददते बुधाः ॥ ततोऽन्ये च यथाकामं दुदुहुः पृथुभाविताम् ॥ १३ ॥ ऋषयो दुदुहुर्देवीमिंद्रियेष्वथ सत्तम ॥ वत्सं बृहस्पतिं कृत्वा पयश्छन्दोमयं शुचि ॥ १४ ॥ कृत्वा वत्सं सुरगणा इन्द्रं सोममदूदुहन् ॥ हिरण्मयेन पात्रेण वीर्यमोजो बलं पयः ॥ १५ ॥ दैतेया दानवा वत्सं प्रह्लादमसुरर्षभम् ॥ विधायादूदुहन्क्षीरमयःपात्रे सुरासवम् ॥ १६ ॥ गंधर्वाप्सरसोऽधुक्षन्पात्रे पद्ममये पयः ॥ वत्सं विश्वावसुं कृत्वा गांधर्वं मधु सौभगम् ॥ १७ ॥ वत्सेन पितरोऽर्यम्णा काव्यं क्षीरमधुक्षत ॥ आमपात्रे महाभागाः श्रद्धया श्राद्धदेवताः ॥ १८ ॥ प्रकल्प्य वत्सं कपिलं सिद्धाः संकल्पनामयीम् ॥ सिद्धिं नभसि विद्यां च ये च विद्याधरादयः ॥ १९ ॥ अन्ये च मायिनो मायामंतर्धानाद्भुतात्मनाम् ॥ मयं प्रकल्प्य वत्सं ते दुदुहुर्धारणामयीम् ॥ २० ॥ यक्षरक्षांसि भूतानि पिशाचाः पिशिताशनाः ॥ भूतेशवत्सा दुदुहुः कपाले क्षतजासवम् ॥ २१ ॥ तथाहयो दंदशूकाः सर्पा नागाश्च तक्षकम् ॥ विधाय वत्सं दुदुहुर्बिलपात्रे विषं पयः ॥ २२ ॥ पशवो यवसं क्षीरं वत्सं कृत्वा च गोवृषम् ॥ अरण्यपात्रे चाधुक्षन्मृगेन्द्रेण च दंष्ट्रिणः ॥ २३ ॥ क्रव्यादाः प्राणिनः क्रव्यं दुदुहुः स्वे कलेवरे ॥ सुपर्णवत्सा विहगाश्चरं चाचरमेव च ॥ २४ ॥ वटवत्सा वनस्पतयः पृथग्रसमयं पयः ॥ गिरयो हिमवद्वत्सा नानाधातून्स्वसानुषु ॥ २५ ॥ सर्वे स्वमुख्यवत्सेन स्वे स्वे पात्रे पृथक् पयः ॥ सर्वकामदुघां पृथ्वीं दुदुहुः पृथुभाविताम् ॥ २६ ॥ एवं पृथ्वादयः पृथ्वीमन्नादाः स्वन्नमात्मनः ॥ दोहवत्सादिभेदेन क्षीरभेदं कुरूद्वह ॥ २७ ॥ ततो महीपतिः प्रीतः सर्वकामदुघां पृथुः ॥ दुहितृत्वे चकारेमां प्रेम्णा दुहितृवत्सलः ॥ २८ ॥ चूर्णयन्स्वधनुष्कोट्या गिरिकूटानि राजराट् ॥ भूमं-

तमेव वत्सं प्रकल्प्य नभस्येव पात्रे खेचरत्वादिरूपां विद्यां दुदुहुः ॥१९॥ अन्ये च किंपुरुषादयोऽन्तर्धानेनाद्भुतात्मनां संबंधिनीं मायाम् । धारणामयीं संकल्पमात्रप्रभवाम् ॥२०॥ भूतेशो रुद्रः स एव वत्सो येषाम् । क्षतजं रुधिरं तदेवासवम् ॥२१॥ अहयो निष्फणा दंदशूका वृश्चिकादयः सर्पाः सफणास्त एव कद्रुसंततिजा नागा बिलपात्रे मुखे ॥ २२ ॥ यवसं तृणम् । गोवृषं रुद्रवाहं वृषभम् । मृगेंद्रेणेत्युत्तरेणान्वयः ॥२३॥ क्रव्यं मांसम् । चरं कीटादि । अचरं फलादि ॥ २४ ॥ २५ ॥ अनुक्तसर्वसंग्रहार्थमाह । सर्वे इति । सर्वे स्वजातौ यो मुख्यस्तेन वत्सेन ॥ २६ ॥ उपसंहरति । एवमिति । स्वन्नमभीष्टमन्नम् । तमेव क्षीरभेदं दुदुहुः । दोहः पात्रम् ॥ २७॥ इमां पृथ्वीम् ॥ २८॥ धनुषोऽग्रेण गिरिशृङ्गाणि चूर्णयन् राजराट् राज्ञां राजा सर्वेषामाजीविका-

दानात् ॥ २९॥ ३० ॥ ग्रामा हट्टादिशून्याः । पुरो हट्टादिमत्यः । ता एव महत्यः पत्तनानि । दुर्गाणि विविधानि । यथाह बृहस्पतिः । औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा इति । घोषान् आभीराणां निवासान् । व्रजान् गवां निवासान् । शिविरं सेनानिवासस्थानम् । तत्सहितानाकरान्स्वर्णादिस्थानानि । खेटाः कर्षकग्रामाः । खर्वटाः पर्वतप्रांतग्रामास्तांश्च ॥ ३१ ॥३२ ॥ इति श्रीमद्भागवते चतुर्थे टीकायामष्टादशोऽध्यायः ॥ १८ ॥ ऊनविंशेऽश्वमेधांगहयापहरणात्पृथोः ॥ इंद्रं हंतुं प्रवृत्तस्य धात्रा वारणमुच्यते ॥ १ ॥ हयमेधशतेन निमित्तेनादीक्षत दीक्षितोऽभूत् । शताश्वमेधसंकल्पमकरोदित्यर्थः । ब्रह्मावर्ते । सरस्वतीदृषद्वत्योर्देवनद्योर्यदंतरम् ॥ तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥१॥ आत्मनः स्वस्य कर्मातिशेत इत्यतिशयमभिप्रेत्य ज्ञात्वा । तदिति तं

डलमिदं वैन्यः प्रायश्चक्रे समं विभुः ॥ २९ ॥ अथास्मिन्भगवान्वन्यः प्रजानां वृत्तिदः पिता ॥ निवासान्कल्पयांचक्रे तत्र तत्र यथार्हतः ॥ ३० ॥ ग्रामान्पुरः पत्तनानि दुर्गाणि विविधानि च ॥ घोषान्व्रजान्सशिबिरानाकरान्खेटखर्वटान् ॥ ३१ ॥ प्राक् पृथोरिह नैवैषा पुरग्रामादिकल्पना ॥ यथासुखं वसंति स्म तत्र तत्राकुतोभयाः ॥ ३२ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे पृथुविजयेऽष्टादशोऽध्यायः॥ १८ ॥ मैत्रेय उवाच ॥ अथादीक्षत राजा तु हयमेधशतेन सः ॥ ब्रह्मावर्ते मनोः क्षेत्रे यत्र प्राची सरस्वती ॥ १ ॥ तदभिप्रेत्य भगवान्कर्मातिशयमात्मनः ॥ शतक्रतुर्न ममृषे पृथोर्यज्ञमहोत्सवम् ॥ २ ॥ यत्र यज्ञपतिः साक्षाद्भगवान्हरिरीश्वरः ॥ अन्वभूयत सर्वात्मा सर्वलोकगुरुः प्रभुः ॥ ३ ॥ अन्वितो ब्रह्मशर्वाभ्यां लोकपालैः सहानुगैः ॥ उपगीयमानो गंधर्वैर्मुनिभिश्चाप्सरोगणैः ॥ ४ ॥ सिद्धविद्याधरा दैत्या दानवा गुह्यकादयः ॥ सुनंदनंदप्रमुखाः पार्षदप्रवरा हरेः ॥ ५ ॥ कपिलो नारदो दत्तो योगेशाः सनकादयः ॥ तमन्वीयुर्भागवता ये च तत्सेवनोत्सुकाः ॥ ६ ॥ यत्र धर्मदुघा भूमिः सर्वकामदुघा सती ॥ दोग्धि स्माभीप्सितनर्थान्यजमानस्य भारत ॥ ७ ॥ ऊहुः सर्वरसान्नद्यः क्षीरदध्यन्नगोरसान् ॥ तरवो भूरिवर्ष्माणः प्रासूयंत मधुच्युतः ॥ ८ ॥ सिंधवो रत्ननिकरान्गिरयोऽन्नं चतुर्विधम् ॥ उपायनमुपाजह्रुः सर्वे लोकाः सपालकाः ॥ ९ ॥ इति चाधोक्षजेशस्य पृथोस्तु परमोदयम् ॥ असूयन्भगवानिंद्रः प्रतिघातमचीकरत् ॥ १० ॥ चरमेणाश्वमेधेन यजमाने यजुष्पतिम् ॥ वैन्ये यज्ञपशुं स्पर्धन्नपोवाह तिरोहितः ॥ ११ ॥ तमत्रिर्भगवानैक्षत्त्वरमाणं विहायसा ॥ आमुक्तमिव पाखंडं योऽधर्मे धर्मविभ्रमः ॥ १२ ॥ अत्रिणा चोदितो हंतुं पृथुपुत्रो महारथः ॥ अन्वधावत

पृथोर्यज्ञमहोत्सवं न ममृषे न सेहे ॥ २ ॥ अतिशयमेव दर्शयति । यत्रेति सप्तभिः । साक्षादन्वभूयत प्रत्यक्षेणादृश्यत ॥ ३ ॥ ४ ॥ सिद्धादयश्च तं हरिमन्वीयुरित्युत्तरेणान्वयः ॥ ५ ॥ ६ ॥ धर्मदुघा हविर्दोग्ध्री धेनुः सती॥ ७॥ऊहुर्वहंति स्म । सर्वरसानिक्षुद्राक्षादिरसान् । क्षीरं च दधि च अन्नं च पानकादि गोरसो घृतं तक्रं च तांश्च । भूरीणि विस्तृतानि वर्ष्माणि शरीराणि येषां ते फलादि प्रासूयंत। मधुच्युतो मधुस्राविणः संतः ॥ ८ ॥ चतुर्विधं भक्ष्यं भोज्यं चोष्यं लेह्यं च ॥ ९ ॥ अधोक्षज ईशो नाथो यस्य। परम उदयोऽभिवृद्धिर्यस्मिंस्तत्कर्मासूयन्नसहमानः प्रतिघातं विघ्नं चकारेत्यर्थः ॥ १० ॥ वैन्ये यजुष्पतिं विष्णुं यजमाने सति स्पर्धमान इंद्रस्तिरोहितः सन्नश्वमपहृतवान् ॥११॥ त्वरमाणं धावंतम् । आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् ॥ सन्नद्धो

वर्मितः सज्ज इत्यमरसिंहः । पाखंडं वेषं कवचमिव गृहीतवंतमित्यर्थः । अधर्मे धर्मविभ्रमो धर्मोऽयमिति भ्रांतिकरो यस्तम् ॥ १२ ॥ १३ ॥ न मुंचति स्म ॥ १४ ॥ हंतवे हंतुम् । यज्ञहनं यज्ञं हतवंतम् ॥ १५ ॥ गृध्रराट् जटायुः ॥ १६ ॥ तस्मै हित्वा तदर्थमुत्सृज्य ॥ १७ ॥ विचक्ष्य दृष्ट्वा ॥ १८ ॥ उपसृज्य सृष्ट्वा तेन छन्नः सन् । चषालो यूपाग्रे विनिप्तः काष्ठकटकस्तद्युक्ताद्यूपात् । हिरण्यनिर्मिता रशना यस्य तम् । रशनाया दृढत्वेन छेदाशक्त्या रशनासहितमेवोद्धृत्य यूपाग्रान्नीतवानित्यर्थः । विभुः समर्थः ॥ १९ ॥ २० ॥ २१ ॥ अवद्यं निंदितं रूपं मंदप्रज्ञा जगृहुः ॥ २२ ॥ तदेव पाखंडनामनिरुक्त्या दर्शयति यानीति । बहुवचनेन चान्यान्यपि गृहीतानीत्युक्तम् ॥ २३ ॥ तत्प्रभृतिपाखंडमार्गाः प्रवृत्ता इत्याह । एवमिति । तेन गृहीतेषु पुनर्विसृष्टेषु । नग्ना

संक्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ १३ ॥ तं तादृशाकृतिं वीक्ष्य मेने धर्मशरीरिणम् ॥ जटिलं भस्मनाच्छन्नं तस्मै बाणं न मुंचति ॥ १४ ॥ वधान्निवृत्तं तं भूयो हंतवेऽत्रिरचोदयत् ॥ जहि यज्ञहनं तात महेन्द्रं विबुधाधमम् ॥ १५ ॥ एवं वैन्यसुतः प्रोक्तस्त्वरमाणं विहायसा ॥ अन्वद्रवदभिक्रुद्धो रावणं गृध्रराडिव ॥ १६ ॥ सोऽश्वं रूपं च तद्धित्वा तस्मा अंतर्हितः स्वराट् ॥ वीरः स्वपशुमादाय पितुर्यज्ञमुपेयिवान् ॥ १७ ॥ तत्तस्य चाद्भुतं कर्म विचक्ष्य परमर्षयः ॥ नामधेयं ददुस्तस्मै विजिताश्व इति प्रभो ॥ १८ ॥ उपसृज्य तमस्तीव्रं जहाराश्वं पुनर्हरिः ॥ चषालयूपतश्छन्नो हिरण्यरशनं विभुः ॥ १९ ॥ अत्रिः संदर्शयामास त्वरमाणं विहायसा ॥ कपालखट्वांगधरं वीरो नैनमबाधत ॥ २० ॥ अत्रिणा चोदितस्तस्य संदधे विशिखं रुषा ॥ सोऽश्वं रूपं च तद्धित्वा तस्थावंतर्हितः स्वराट् ॥ २१ ॥ वीरश्चाश्वमुपादाय पितृयज्ञमथाव्रजत् ॥ तदवद्यं हरे रूपं जगृहुर्ज्ञानदुर्बलाः ॥ २२ ॥ यानि रूपाणि जगृहे इन्द्रो हयजिहीर्षया ॥ तानि पापस्य खंडानि लिंगं खंडमिहोच्यते ॥ २३ ॥ एवमिंद्रे हरत्यश्वं वैन्ययज्ञजिघांसया ॥ तद्गृहीतविसृष्टेषु पाखंडेषु मतिर्नृणाम् ॥ २४ ॥ धर्म इत्युपधर्मेषु नग्नरक्तपटादिषु ॥ प्रायेण सज्जते भ्रांत्या पेशलेषु च वाग्मिषु ॥ २५ ॥ तदभिज्ञाय भगवान्पृथुः पृथुपराक्रमः ॥ इन्द्राय कुपितो बाणमादत्तोद्यतकार्मुकः ॥ २६ ॥ तमृत्विजः शक्रवधाभिसंधितं विचक्ष्य दुष्प्रेक्ष्यमसह्यरंहसम् ॥ निवारयामासुरहो महामते न युज्यतेऽत्रान्यवधः प्रचोदितात् ॥ २७ ॥ वयं मरुत्वंतमिहार्थनाशनं ह्वयामहे त्वच्छ्रवसा हतत्विषम् ॥ अयातयामोपहवैरनंतरं प्रसह्य राजन्जुहवाम तेऽहितम् ॥ २८ ॥ इत्यामंत्र्य क्रतुपतिं विदुरास्यर्त्विजो रुषा ॥ स्रुग्घस्तान्जुह्वतोऽभ्येत्य स्वयंभूः प्रत्यषेधत ॥ २९ ॥ न वध्यो भवतामिंद्रो यद्यज्ञो भगवत्तनुः ॥ यं जिघांसथ यज्ञेन यस्येष्टास्तनवः सुराः ॥ ३० ॥ तदिदं पश्यत मह-

जैनाः रक्तपटा बौद्धाः आदिशब्देन कापालिकादयस्तेषूपधर्मेषु धर्मोपमेषु धर्म एवायमिति मतिः सज्जत इति द्वयोरन्वयः । पेशलेषु आपाततो रम्येषु वाग्मिषु हेतूक्तिचतुरेषु ॥ २४ ॥ २५ ॥ २६ ॥ शक्रवधेऽभिसंधितं कृताभिप्रायम् । प्रचोदितात्पशोर्वधादन्यस्य वधस्तव न युज्यते ॥ २७ ॥ तद्वधं तु वयं करिष्याम इत्याहुः । वयमिह यज्ञनाशकं त्वत्कीर्त्यैव हतप्रभमिंद्रमाह्वयामहे । कैः । अयातयामैरगतवीर्यैराह्वानमंत्रैः । अनंतरं च ते तवाहितं जुहवाम होष्यामः ॥ २८ ॥ अस्य पृथोः । स्रुक् हस्ते येषां तान् ॥ २९ ॥ यमिंद्रं यज्ञेन जिघांसथ यज्ञेनेष्टाः सर्वे सुरा यस्य तनवः स इंद्रो भवतां वधार्हो न भवति । यद्यस्माद्यज्ञो नामायमिंद्रो भगवतस्तनुरवतारः । ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत ॥ स यामाद्यैः सुरगणैरपात्स्वायंभुवांतरम् इत्युक्तत्वात् ॥ ३० ॥ अतो बली-

यसाऽनेन सख्यमेव कर्तव्यमन्यथा भूयः पाखंडं स्रक्ष्यतीत्याशयेनाह । तदिदमिंद्रेणानुष्ठितं महदन्याय्यं पश्यत । किमित्यपेक्षायामाह । धर्मस्य व्यतिकरं विपर्ययं पाखंडपथम् ॥ ३१ ॥ तर्हि किमत्र युक्तमित्यत आह । पृथुकीर्तेरिति । एकेनोनं शतं यस्मिंस्तादृशः क्रतुः क्रतुप्रयोगः पृथोर्भूयात् । पृथुरिति पाठे एकोनशतं क्रतवो यस्य तादृशोऽपि महेन्द्रात्पृथुकीर्तिर्भूयादित्यर्थः । तदेवमृत्विजः प्रत्युक्त्वा पृथुं प्रत्येवाह । अलमिति ॥ ३२ ॥ आत्मनैवात्मने महेंद्राय रोषं कर्तुं नार्हसि । तत्र हेतुः । उभावपीति ॥ ३३ ॥ तथापि क्रतुसमाप्तिमेव ध्यायंतं प्रत्याह । अस्मिन्यज्ञविघ्ने चिंतां मा स्म कृथाः । यद्यस्माद्दैवहतं कार्यं कर्तुं ध्यायतो मनो नु निश्चितमतिरुष्टं सदंधं तमो मोहं विशति नतु शांतिं लभते ॥ ३४ ॥ अतएव तव क्रतुर्विरमतु । नन्विंद्रः किं न निवार्यतेऽत आह । यतो देवेषु दुराग्रहो भवतीति । यत्र क्रतौ ॥ ३५ ॥ इंद्रदुराग्रहकृतमनर्थं पश्येत्याह । एभिरिंद्रेणोपसंसृष्टैरधिष्ठितैर्हारिभिश्चित्तकर्षकैः । य इंद्रस्तेऽश्वं मुष्णातीति तथा यज्ञाय द्रुह्यति तथा ।

द्धर्मव्यतिकरं द्विजाः ॥ इन्द्रेणानुष्ठितं राज्ञः कर्मैतद्विजिघांसता ॥ ३१ ॥ पृथुकीर्तेः पृथोर्भूयात्तर्ह्येकोनशतक्रतुः ॥ अलं ते क्रतुभिः स्विष्टैर्यद्भवान्मोक्षधर्मवित् ॥ ३२ ॥ नैवात्मने महेन्द्राय रोषमाहर्तुमर्हसि ॥ उभावपि हि भद्रं त उत्तमश्लोकविग्रहौ ॥ ३३ ॥ माऽस्मिन्महाराज कृथाः स्म चिंतां निशामयास्मद्वच आदृतात्मा ॥ यद्ध्यायतो दैवहतं नु कर्तुं मनोऽतिरुष्टं विशते तमोऽन्धम् ॥ ३४ ॥ क्रतुर्विरमतामेष देवेषु दुरवग्रहः ॥ धर्मव्यतिकरो यत्र पाखंडैरिंद्रनिर्मितैः ॥ ३५ ॥ एभिरिंद्रोपसंसृष्टैः पाखंडैर्हारिभिर्जनम् ॥ ह्रियमाणं विचक्ष्वैनं यस्ते यज्ञध्रुगश्वमुट् ॥ ३६ ॥ भवान्परित्रातुमिहावतीर्णो धर्मं जनानां समयानुरूपम् ॥ वेनापचारादवलुप्तमद्य तद्देहतो विष्णुकलाऽसि वैन्य ॥ ३७ ॥ स त्वं विमृश्यास्य भवं प्रजापते संकल्पनं विश्वसृजां पिपीपृहि ॥ ऐन्द्रीं च मायामुपधर्ममातरं प्रचंडपाखंडपथं प्रभो जहि ॥ ३८ ॥ मैत्रेय उवाच ॥ इत्थं स लोकगुरुणा समादिष्टो विशांपतिः ॥ तथा च कृत्वा वात्सल्यं मघोनापि च संदधे ॥ ३९ ॥ कृतावभृथस्नानाय पृथवे भूरिकर्मणे ॥ वरान्ददुस्ते वरदा ये तद्बर्हिषि तर्पिताः ॥ ४० ॥ विप्राः सत्याशिषस्तुष्टाः श्रद्धया लब्धदक्षिणाः ॥ आशिषो युयुजुः क्षत्तरादिराजाय सत्कृताः ॥ ४१ ॥ त्वयाहूता महाबाहो सर्व एव समागताः ॥ पूजिता दानमानाभ्यां पितृदेवर्षिमानवाः ॥४२॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पृथुविजये एकोनविंशोऽध्यायः ॥ १९ ॥ मैत्रेय उवाच ॥ भगवानपि वैकुंठः साकं मघवता विभुः ॥ यज्ञैर्यज्ञपतिस्तुष्टो यज्ञभुक् तमभाषत ॥ १ ॥ श्रीभगवानुवाच ॥ एष तेऽकार्षीद्भंगं हयमेधशतस्य ह ॥ क्षमापयत आत्मानममुष्य क्षंतुमर्हसि ॥ २ ॥ सुधियः साधवो लोके नरदेव नरोत्तमाः ॥ नाभिद्रुह्यंति भूतेभ्यो यर्हि

तेन सृष्टैः ॥ ३६ ॥ ततो मम किमिति चेत्तत्राह । भवानिति द्वाभ्याम् । सांख्ययोगादिनानासिद्धांतानुरूपं धर्मं वेनस्यान्यायाल्लुप्तं परित्रातुं तद्देहाद्विष्णोः कलैव त्वमवतीर्णोऽसि ॥३७॥ हे प्रजापते ! अस्य विश्वस्योद्भवं विचार्य यैरुत्पादितोऽसि तेषां विश्वसृजां संकल्पं पिपीपृहि आर्पः प्रयोगः पूरयेत्यर्थः । प्रचंडो यः पाखंडमार्गः सैवैंद्री मायोपधर्मजननी तां जहि ॥३८॥ तथा च कृत्वा यज्ञाग्रहं हित्वा वात्सल्यं स्नेहं कृत्वेंद्रेण सह संधानं च कृतवान् ॥ ३९ ॥ कृतमवभृथसंबंधि स्नानं येन स तस्मै ॥ ४० ॥ ४१ ॥ तुष्टानां वाक्यं त्वयेति ॥ ४२ ॥ इति श्रीमद्भागवते चतुर्थस्कंधे टीकायामेकोनविंशोऽध्यायः ॥ १९ ॥ विंशे तु विष्णुना साक्षात्पृथोर्यज्ञेऽनुशासनम् ॥ वरदानप्रसंगेन प्रीतिश्चान्योन्यमीर्यते ॥ १ ॥ मघवता साकमिंद्रेण सह वर्तमानः ॥ १ ॥

आत्मानं त्वां क्षमां कारयतोऽमुष्य त्वमपि क्षंतुमर्हसि ॥ २ ॥ यर्हि यस्मात्कलेवरमात्मा न भवत्यतस्तदभिमानेन भूतानि नाभिद्रुह्यंति ॥ ३ ॥ ४ ॥ अविद्या स्वरूपाज्ञानं ततः कामस्ततः कर्म
तैरारब्ध इति विज्ञानत एव प्रतिबुद्ध आत्मज्ञोऽस्मिन्नैवानुषज्जते ॥ ५ ॥ तथापि पुत्रादिममत्वेन भूतद्रोहेण च संगो भवेत्तत्राह। असंसक्त इति॥ ६ ॥ प्रतिबोधक्रमं विवृण्वन्देहेऽनुषंगाभावमाह।
एक इति द्वाभ्याम् । असावात्मा आत्मनो देहात्परो भिन्नः तत्र नवधा वैलक्षण्येन भेदं साधयति । एक इति नवभिः पदैः । देहो हि बालयुवादिभेदादनेको मलिनश्च जडश्च सगुणश्च स्वकारण-
भूतगुणाश्रितश्च परिच्छिन्नश्च गृहादिभिरावृतश्च दृश्यश्च सात्मा च। आत्मा तु नैवमतो भिन्नः ॥ ७ ॥ आत्मस्थं स्वस्मिन् स्थितम् । प्रकृतिस्थोऽपि देहस्थोऽपि तद्विकारैर्न लिप्यते । यतः स मयि
ब्रह्मणि स्थितः ॥ ८ ॥ इयमवस्था कस्योत्पद्यत इत्यपेक्षायामाह। यः स्वधर्मेणेति चतुर्भिः ॥ ९ ॥ भवतु मनः प्रसन्नं ततः किं तत्राह । यर्हि विशदाशयः प्रसन्नमनास्तदा परित्यक्तगुणः सन्सम्य-
ग्दर्शनो भूत्वा शांतिमश्नुते । शांतिमेवाह। मम सम्यगौदासीन्येनावस्थानमेव ब्रह्म तदेव कैवल्यमश्नुते ॥ १० ॥ सम्यग्दर्शनमेवाह। उदासीनमेवात्मानं द्रव्यज्ञानक्रियात्मनां देहज्ञानकर्मेंद्रिय-

नात्मा कलेवरम् ॥ ३ ॥ पुरुषा यदि मुह्यंति त्वादृशा देवमायया ॥ श्रम एव परं जातो दीर्घया वृद्धसेवया ॥ ४ ॥ अतः कायमिमं विद्वानवि-
द्याकामकर्मभिः ॥ आरब्ध इति नैवास्मिन्प्रतिबुद्धोऽनुषज्जते ॥ ५ ॥ असंसक्तः शरीरेऽस्मिन्नमुनोत्पादिते गृहे ॥ अपत्ये द्रविणे वापि कः कुर्यान्म-
मतां बुधः ॥ ६ ॥ एकः शुद्धः स्वयंज्योतिर्निर्गुणोऽसौ गुणाश्रयः ॥ सर्वगोऽनावृतः साक्षी निरात्मात्मात्मनः परः ॥ ७ ॥ य एवं संतमात्मान-
मात्मस्थं वेद पूरुषः ॥ नाज्यते प्रकृतिस्थोऽपि तद्गुणैः स मयि स्थितः ॥ ८ ॥ यः स्वधर्मेण मां नित्यं निराशीः श्रद्धयाऽन्वितः ॥ भजते शनकै-
स्तस्य मनो राजन्प्रसीदति ॥ ९ ॥ परित्यक्तगुणः सम्यग्दर्शनो विशदाशयः ॥ शांतिं मे समवस्थानं ब्रह्म कैवल्यमश्नुते ॥ १० ॥ उदासीनमिवा-
ध्यक्षं द्रव्यज्ञानक्रियात्मनाम् ॥ कूटस्थमिममात्मानं यो वेदाप्नोति शोभनम् ॥ ११ ॥ भिन्नस्य लिंगस्य गुणप्रवाहो द्रव्यक्रियाकारकचेतनात्मनः ॥
दृष्टासु संपत्सु विपत्सु सूरयो न विक्रियंते मयि बद्धसौहृदाः ॥ १२ ॥ समः समानोत्तममध्यमाधमः सुखे च दुःखे च जितेंद्रियाशयः ॥ मयोपक्लृ-
प्ताखिललोकसंयुतो विधत्स्व वीराखिललोकरक्षणम् ॥ १३ ॥ श्रेयः प्रजापालनमेव राज्ञो यत्सांपराये सुकृतात्षष्ठमंशम् ॥ हर्ताऽन्यथा हृतपुण्यः
प्रजानामरक्षिता करहारोऽघमत्ति ॥१४॥ एवं द्विजाग्र्यानुमतानुवृत्तधर्मप्रधानोऽन्यतमोऽविताऽस्याः ॥ ह्रस्वेन कालेन गृहोपयातान्द्रष्टासि सिद्धा-

मनसामध्यक्षमिव स्थितमात्मानं यो वेद॥ ११ ॥ संसारिणः कथं कूटस्थत्वमत आह । भिन्नस्य लिंगस्य देहस्य गुणप्रवाहः संसारः। भिन्नत्वे हेतुः द्रव्याद्यात्मकस्य । तत्र चेतना चिदाभासः
अतो दृष्टासु प्राप्तासु हर्षशोकादिभिर्न विक्रियंते ॥ १२ ॥ त्वं च सूरिरतः सुखे दुःखे च समः सन्समाना उत्तममध्यमाधमा यस्य। जितानींद्रियाण्याशयश्च येन। स त्वमखिललोकरक्षणं विधत्स्व।
कथमेकेन मया रक्षणं कर्तुं शक्यं तत्राह। मयेश्वरेणोपक्लृप्ताः संपादिता येऽखिला लोका अमात्यादयस्तैः संयुतः ॥१३॥ ननु रक्षणं दंडादिसापेक्षमतस्ततपोऽन्यद्वा पुण्यं करिष्यामीति चेदत आह ।
श्रेय इति । यद्यस्मात्सांपराये परलोके प्रजाभिः कृतात्सुकृतात्षष्ठमंशं हर्ता हरति । अरक्षणे दोषमाह । अन्यथा प्रजाभिर्हृतं पुण्यं यस्य स प्रजानामघमत्ति पापं भुंक्ते । अन्यथेत्यस्य विवरणम् ।
करहारः सन्न रक्षिता चेत् ॥ १४ ॥ एवं च मोक्षोऽप्यनायासेन भविष्यतीत्याह । द्विजाग्र्याणामनुमतश्चासावनुवृत्तश्च परंपराप्राप्तो यो धर्मः स एव प्रधानमर्थकामौ तु प्रासंगिकौ यस्य । अन्यतमो-
ऽतिशयेनान्यः । धर्मादिष्वनासक्त इत्यर्थः । ऐकपद्यपाठे धर्मप्रधानावन्यतमावर्थकामौ यस्येत्यर्थः । अस्याः पृथिव्या अविता सन्नल्पेन कालेन गृहागतान्सनकादीन्द्रक्ष्यसि । अनुरक्तो लोको

यस्मिन्सः ॥ १५ ॥ मत् मत्तः सकाशात्किंचिद्वरं वृणीष्व । गुणाः शमादयः शीलं निर्मत्सरत्वादिस्वभावस्तैरहं यंत्रितो वशीकृतः । तद्रहितैस्तु मखादिभिर्नाहं सुलभः । यतः समं चित्तं येषां तेष्वेव वर्तितुं शीलं यस्य सोऽहम् ॥ १६ ॥ १७ ॥ क्षमापयितुं पादयोः स्पृशंतम् । स्वेन कर्मणाऽश्वापहरणेन व्रीडितम् । प्रेम्णा परिष्वज्य ॥१८॥ भगवान्प्रस्थानाभिमुखोऽप्यनुग्रहेण विलंबितः सन्न प्रतस्थे । प्रयाणं न कृतवानिति द्वयोरन्वयः । कथंभूतः । उपहृतमर्पितमर्हणं यस्मै । समुज्जिहानया समुद्गच्छंत्या वर्धमानया भक्त्या गृहीते चरणांबुजे यस्य ॥१९॥ पद्मपलाशवदक्षिणी यस्य तथाभूतः सन् एनं पृथु पश्यन् ॥२०॥ भगवतस्तत्कृपातिरेकमुक्त्वा तस्य भक्त्युद्रेकमाह । स इति द्वाभ्याम् । बाष्पविक्लवत्वेन तूष्णीमवस्थितः सन्नमुं हरिं हृदोपगुह्याधाद्धृतवान् ॥ २१ ॥ अतृप्तयोर्दृशोर्गोचरं विषयभूतम् । पदा क्षितिं स्पृशंतमिति । अयं भावः । न खलु देवाः पदा भुवं स्पृशंत्यतः कृपापरवशो नूनं हरिरात्मानं विस्मृतवानिवेति । अतएव स्खलनपरिहारायैव गरुडस्योन्नते स्कंधे विन्यस्तं हस्ताग्रं येन तम् ॥२२॥ वरं वृणीष्वेति यदुक्तं तदसहमान आह । हे विभो ! वरदानां ब्रह्मादीनामीश्वराद्वरप्रदत्वात्त्वत्तः सकाशाद्बुधः कथं वरान्वृणीते । कीदृशान् ।

नुरक्तलोकः ॥ १५ ॥ वरं च मत्कंचन मानवेन्द्र वृणीष्व तेऽहं गुणशीलयंत्रितः ॥ नाहं मखैर्वै सुलभस्तपोभिर्योगेन वा यत्समचित्तवर्ती ॥ १६ ॥ मैत्रेय उवाच ॥ स इत्थं लोकगुरुणा विष्वक्सेनेन विश्वजित् ॥ अनुशासित आदेशं शिरसा जगृहे हरेः ॥ १७ ॥ स्पृशंतं पादयोः प्रेम्णा व्रीडितं स्वेन कर्मणा ॥ शतक्रतुं परिष्वज्य विद्वेषं विससर्ज ह ॥ १८ ॥ भगवानथ विश्वात्मा पृथुनोपहृतार्हणः ॥ समुज्जिहानया भक्त्या गृहीतचरणांबुजः ॥ १९ ॥ प्रस्थानाभिमुखोऽप्येनमनुग्रहविलंबितः ॥ पश्यन्पद्मपलाशाक्षो न प्रतस्थे सुहृत्सताम् ॥ २० ॥ स आदिराजो रचितांजलिर्हरिं विलोकितुं नाशकदश्रुलोचनः ॥ न किंचनोवाच सबाष्पविक्लवो हृदोपगुह्यामुमधादवस्थितः ॥ २१ ॥ अथावमृज्याश्रुकला विलोकयन्नतृप्तदृग्गोचरमाह पूरुषम् ॥ पदा स्पृशंतं क्षितिमंस उन्नते विन्यस्तहस्ताग्रमुरंगविद्विषः ॥ २२ ॥ पृथुरुवाच ॥ वरान्विभो त्वद्वरदेश्वराद्बुधः कथं वृणीते गुणविक्रियात्मनाम् ॥ ये नारकाणामपि संति देहिनां तानीश कैवल्यपते वृणे न च ॥ २३ ॥ न कामये नाथ तदप्यहं क्वचिन्न यत्र युष्मच्चरणांबुजासवः ॥ महत्तमांतर्हृदयान्मुखच्युतो विधत्स्व कर्णायुतमेष मे वरः ॥ २४ ॥ स उत्तमश्लोकमहन्मुखच्युतो भवत्पदांभोजसुधाकणानिलः ॥ स्मृतिं पुनर्विस्मृततत्त्ववर्त्मनां कुयोगिनां नो वितरत्यलं वरैः ॥ २५ ॥ यशः शिवं सुश्रव आर्यसंगमे यदृच्छया चोपशृणोति ते सकृत् ॥ कथं गुणज्ञो

गुणैर्विक्रियत इति गुणविक्रियोऽहंकारः स एवात्मा येषां तेषां ब्रह्मादीनां संबंधिनः देहाभिमानिनां भोग्यानिति वा । तथा चेद्बुध एव न भवतीत्यर्थः । जुगुप्सितत्वादपीत्याह । ये इति । बुध एवाहमपि न वृणे । इति समुच्चयाय चकारः ॥२३॥ कैवल्यमत इति संबोधनात्कैवल्यं वरिष्यतीति माशंकीरित्याह । नेति । महत्तमानामंतर्हृदयान्मुखद्वारेण निर्गतो भवत्पदांभोजमकरंदो यशःश्रवणादिसुखं यत्र नास्ति तादृशं चेत्कैवल्यं तर्हि तत्क्वचित्कदाचिदपि कामये । तर्हि किं कामयसे तदाह । यशःश्रवणाय कर्णानामयुतं विधत्स्व । ननु कोऽप्येवं वृतवान् किमन्यचिंतयेत्याह । मम तु एष वरः ॥२४॥ ननु तर्हि कैवल्याभावे रागद्वेषाद्याकुलानां भक्तिसुखमपि न स्यादित्याशंक्याह । स इति । भवत्पदांभोजसुधायाः कणो लेशस्तत्संबंधी योऽनिलः स एव दूरादपि किंचिद्यशःश्रवणमात्रमित्यर्थः । विस्मृतं तत्त्ववर्त्म यैः कुयोगिभिस्तेषामपि पुनः स्मृतिमात्मज्ञानं वितरति । अतो न खलु भक्तानां रागादिसंभवोऽतो नोऽस्माकं सारग्राहिणामन्यैर्वरैरलम् ।

भक्तावेव मोक्षादिसर्वसुखांतर्भावादिति भावः ॥२५॥ ननु भक्तिर्मुक्तिफलैवातः फलं विहाय साधने भवतः कोऽयमाग्रह इत्याशंक्याह । हे सुश्रवः मंगलकीर्ते ! ते शिवं यशः सतां संगमे यः सकृदपि यदृच्छयाप्युपशृणोति गुणज्ञश्चेत्स पशुं विनाऽन्यः कथं विरमेत् । गुणातिशयं सूचयति। श्रीर्यद्यश एव प्रकर्षेण वृतवती गुणानां सर्वपुरुषार्थानां संग्रहः स्वस्मिन्समाहारस्तदिच्छया ॥ २६ ॥ अतो लक्ष्मीरिवान्यवरत्यागेन त्वामेवाहं भज इत्याह। अथेति । लालस उत्सुकः सन् कर्मणि क्रियमाणे यथेंद्रेण सह कलिरेवं भक्तावपि किं लक्ष्म्या सह कलिः स्यादिति वितर्कयति । एकस्मिन्पत्यौ स्पर्धमानयोरावयोरपि किं कलिर्न स्यादिति काक्वा वितर्कः । ननु पर्यायेण सेवायां न स्यात् । नैवम् । कृतस्त्वच्चरणयोरेवैकतानो मनोविस्तारो याभ्यां वयोः ॥२७॥ भवतु वा कलिस्तथापि भजेयमेवेत्याह । जगज्जनन्यां वैशसं विरोधः स्यादेव । तत्र हेतुर्यस्याः कर्मणि नः समीहितमिच्छा भवति तथापींद्रविरोधे मत्पक्षपातवदत्रापि तव पक्षपात एव स्यादित्याह । फल्गु तुच्छमप्युरु

विरमेद्विना पशुं श्रीर्यत्प्रवव्रे गुणसंग्रहेच्छया ॥ २६ ॥ अथाभजे त्वाखिलपूरुषोत्तमं गुणालयं पद्मकरेव लालसः ॥ अप्यावयोरेकपतिस्पृधोः कलिर्न स्यात्कृतत्वच्चरणैकतानयोः ॥ २७ ॥ जगज्जनन्यां जगदीश वैशसं स्यादेव यत्कर्मणि नः समीहितम् ॥ करोति फल्ग्वप्युरु दीनवत्सलः स्व एव धिष्ण्येऽभिरतस्य किं तया ॥ २८ ॥ भजंत्यथ त्वामत एव साधवो व्युदस्तमायागुणविभ्रमोदयम् ॥ भवत्पदानुस्मरणादृते सतां निमित्तमन्यद्भगवन्न विद्महे ॥ २९ ॥ मन्ये गिरं ते जगतां विमोहिनीं वरं वृणीष्वेति भजंतमात्थ यत् ॥ वाचा नु तंत्या यदि ते जनोऽसितः कथं पुनः कर्म करोति मोहितः ॥ ३० ॥ त्वन्माययाऽद्धा जन ईश खंडितो यदन्यदाशास्त ऋतात्मनो बुधः ॥ यथाचरेद्बालहितं पिता स्वयं त्वमेवार्हसि नः समीहितुम् ॥ ३१ ॥ मैत्रेय उवाच ॥ इत्यादिराजेन नुतः स विश्वदृक्तमाह राजन्मयि भक्तिरस्तु ते ॥ दिष्ट्येदृशी धीर्मयि ते कृता यया मायां मदीयां तरति स्म दुस्त्यजाम् ॥ ३२ ॥ तत्त्वं कुरु मयादिष्टमप्रमत्तः प्रजापते ॥ मदादेशकरो लोकः सर्वत्राप्नोति शोभनम् ॥ ३३ ॥ मैत्रेय उवाच ॥ इति वैन्यस्य राजर्षेः प्रतिनंद्यार्थवद्वचः ॥ पूजितोऽनुगृहीत्वैनं गंतुं चक्रेऽच्युतो मतिम् ॥ ३४ ॥ देवर्षिपितृगंधर्वसिद्धचारणपन्नगाः ॥ किन्नराप्सरसो मर्त्याः खगा भूतान्यनेकशः ॥ ३५ ॥ यज्ञेश्वरधिया राज्ञा वाग्वित्तांजलिभक्तितः ॥ सभाजिता ययुः सर्वे वैकुण्ठानुगतास्ततः ॥ ३६ ॥ भगवानपि राजर्षेः सोपाध्यायस्य चाच्युतः ॥ हरन्निव मनोऽमुष्य स्वधाम प्रत्यपद्यत ॥ ३७ ॥ अदृष्टाय नमस्कृत्य नृपः संदर्शनात्मने ॥ अव्यक्ताय

बहु करोषि । यतो दीनेषु वत्सलो दयावान् स्वे स्वरूप एव रतस्य तया किं प्रयोजनम् । तां नाद्रियस इत्यर्थः ॥ २८ ॥ यतस्त्वं दीनवत्सलोऽतएव साधवो निष्कामा अथ ज्ञानानंतरमपि त्वां भजंति । कथंभूतम् । मायागुणानां विभ्रमो विलासस्तस्योदयः कार्यं स निरस्तो यस्मिंस्तम् । ते किमर्थं भजंति तत्राह । भवत्पदानुस्मरणाद्विनाऽन्यत्तेषां निमित्तं फलं न विद्मः ॥ २९ ॥ वरैः प्रलोभनं च कृपालोस्तवानुचितमित्याशयेनाह । मन्य इति । नु अहो ते वाचा तंत्या यदि जनोऽयमसितोऽबद्धः स्यात्तर्हि पुनः पुनः फलैर्मोहितः सन्कथं कर्म करोति ॥ ३० ॥ त्वन्मायया खंडितस्य त्वया पुनः खंडनं न कर्तव्यं किंतु हितं चेष्टितव्यमित्याह । त्वन्मायया ऋतादात्मनस्त्वत्तः खंडितः पृथक्कृतो यद्यतोऽन्यत्पुत्रादिकमाशास्ते अतः स्वयमविज्ञापित एव हितं चेष्टितुमर्हसि ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ वाग्वित्तांजलिभिर्भक्तितः पूजिताः संतः । वैकुंठानुगताः पार्षदाश्च ॥ ३६ ॥ अमुष्य राज्ञः । हरन्निवेति लोकोक्तिः । वस्तुतस्तस्य मनः सर्वदैव तदधीन-

मस्त्येव। स्वधाम राज्ञो हृदयम् ॥ ३७ ॥ अदृष्टाय लोचनपथमतिक्रांताय । संदर्शित आत्मा येन तस्मै । वस्तुतो व्यक्ताय ॥ ३८ ॥ इति श्रीमद्भागवते चतुर्थे टीकायां विंशोऽध्यायः ॥२०॥
एकविंशे तु पृथुना प्रजानामनुशासनम् ॥ महासत्रे सुरादीनां महासदसि वर्ण्यते ॥ १ ॥ पुरं ययावित्युक्तं तत्पुरमनुवर्णयति । मौक्तिकैरिति त्रिभिः ॥ १ ॥ चंदनागुरुयुक्तैस्तोयैराद्रा रथ्याद-
यस्तद्युक्तम् । तोक्मैर्हरितयवैरंकुरैरिति वा अर्चिभिर्दीपैः ॥ २ ॥ सवृंदैः पुष्पफलयुक्तैः कदलीस्तंभैः पूगैर्वृक्षैस्तथाविधैः सर्वतः समलंकृतं शोभितम् ॥ ३ ॥ संभृतान्यशेषाणि मंगलानि दध्यादीनि
तैः सहाभिजग्मुः। मृष्टा उज्ज्वलाः कन्याश्च ॥ ४ ॥ गतस्मयो निरहंकारः ॥ ५ ॥ प्रियान्वरान्प्रददातीति तथा ॥ ६ ॥ गुणैर्महानतएव महत्तमः पूज्यतमः ॥७॥ गुणैर्विजृम्भितमूर्जितं गुणवद्भिः

च देवानां देवाय स्वपुरं ययौ ॥ ३८ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे विंशोऽध्यायः ॥२०॥ मैत्रेय उवाच ॥ मौक्तिकैः कुसुमस्रग्भिर्दु-
कूलैः स्वर्णतोरणैः ॥ महासुरभिभिर्धूपैर्मंडितं तत्र तत्र वै ॥ १ ॥ चंदनागुरुतोयार्द्ररथ्याचत्वरमार्गवत् ॥ पुष्पाक्षतफलैस्तोक्मैर्लाजैरर्चिभिरर्चितम्
॥ २ ॥ सवृंदैः कदलीस्तंभैः पूगपोतैः परिष्कृतम् ॥ तरुपल्लवमालाभिः सर्वतः समलंकृतम् ॥ ३ ॥ प्रजास्तं दीपबलिभिः संभृताशेषमङ्गलैः ॥
अभीयुर्मृष्टकन्याश्च मृष्टकुंडलमंडिताः ॥ ४ ॥ शंखदुंदुभिघोषेण ब्रह्मघोषेण चर्त्विजाम् ॥ विवेश भवनं वीरः स्तूयमानो गतस्मयः ॥ ५ ॥ पूजितः
पूजयामास तत्र तत्र महायशाः ॥ पौरान्जानपदांस्तांस्तान्प्रीतः प्रियवरप्रदः ॥ ६ ॥ स एवमादीन्यनवद्यचेष्टितः कर्माणि भूयांसि महान्महत्तमः ॥
कुर्वन्शशासावनिमंडलं यशः स्फीतं निधायारुरुहे परं पदम् ॥ ७ ॥ सूत उवाच ॥ तदादिराजस्य यशो विजृम्भितं गुणैरशेषैर्गुणवत्सभाजितम् ॥
क्षत्ता महाभागवतः सदस्पते कौषारविं प्राह गृणंतमर्चयन् ॥ ८ ॥ विदुर उवाच ॥ सोऽभिषिक्तः पृथुर्विप्रैर्लब्धाशेषसुरार्हणः ॥ बिभ्रत्स वैष्णवं तेजो
बाह्वोर्याभ्यां दुदोह गाम् ॥ ९ ॥ को न्वस्य कीर्तिं न शृणोत्यभिज्ञो यद्विक्रमोच्छिष्टमशेषभूपाः ॥ लोकाः सपाला उपजीवंति काममद्यापि तन्मे वद
कर्म शुद्धम् ॥ १० ॥ मैत्रेय उवाच ॥ गंगायमुनयोर्नद्योरंतरा क्षेत्रमावसन् ॥ आरब्धानेव बुभुजे भोगान्पुण्यजिहासया ॥ ११ ॥ सर्वत्रास्खलि-
तादेशः सप्तद्वीपैकदंडधृक् ॥ अन्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रतः ॥ १२ ॥ एकदाऽऽसीन्महासत्रदीक्षा तत्र दिवौकसाम् ॥ समाजो ब्रह्मर्षीणां
च राजर्षीणां च सत्तम ॥ १३ ॥ तस्मिन्नर्हत्सु सर्वेषु स्वर्चितेषु यथार्हतः ॥ स स्थितः सदसो मध्ये ताराणामुडुराडिव ॥ १४ ॥ प्रांशुः पीनाय-

सभाजितं सत्कृतं यशो गृणंतमर्चयन्प्राह । सदस्पते शौनक ॥ ८ ॥ लब्धान्यशेषसुराणामर्हणानि येन स । किमकरोदिति शेषः ॥ ९ ॥ श्रवणौत्सुक्यमाविष्कुर्वन्प्रार्थयते । को न्विति । यस्य
विक्रमः पृथ्वीदोहनं तस्योच्छिष्टतुल्यं कामम् । तत्तस्य कर्म वद ॥१०॥ प्राचीनकर्मभिः प्रारब्धानेव बुभुजे। नतु भोगांतरार्थं कर्माणि करोति । तदपि भोगेन पुण्यक्षपणेच्छया नतु सुखासक्त्येत्यर्थः
॥ ११ ॥ अस्खलितोऽप्रतिहत आदेश आज्ञा यस्य सप्तसु द्वीपेष्वेक एव दंडं धारयतीति तथा । किं सर्वत्र नेत्याह । ब्राह्मणकुलव्यतिरेकेण अच्युतो गोत्रप्रवर्तकतुल्यो येषां वैष्णवानां तद्व्यति-
रेकेण च ॥ १२ ॥ एकदा तस्य महासत्रदीक्षा आसीत्तत्र सत्रे देवादीनां समाज आसीदित्यर्थः ॥ १३ ॥ तस्मिन्पूज्येष्वर्चितेषु सत्सु सदसो मध्ये उत्थितः सन्समंततः समैक्षतेति षष्ठेनान्वयः

॥१४॥ प्रांशुरुन्नतः पीनावायतौ भुजौ यस्य कंजवदरुणे ईक्षणे यस्य शोभना द्विजाः स्मितं च यस्य ॥१५॥ व्यूढं विस्तीर्णं वक्षो यस्य वलिभिस्तिसृभिर्वल्गु सुंदरं दलवदश्वोऽग्रमश्वत्थपत्रमिव उपरि विस्तृतमधस्तात्संकुचितमुदरं यस्य आवर्तवन्निम्ना नाभिर्यस्य कांचनवदुज्ज्वलावूरू यस्य उदग्रावुन्नताग्रौ पादौ यस्य ॥ १६ ॥ सूक्ष्माश्च ते वक्राश्चासिताश्च स्निग्धाश्च मूर्धजा यस्य कंबुवत्त्रिरेखांकिता कंधरा यस्य परिधाय वसित्वा उपवीयोत्तरीयं कृत्वा ॥१७॥ नियमे निमित्ते न्यस्तानि त्यक्तानि भूषणानि येन सः । अतएव तैरनावृतत्वाद्व्यंजिताशेषगात्रेषु श्रीः स्वाभाविकी शोभा येन कृतान्युचितानि कर्माणि येन ॥१८॥ शिशिरे संतापहरे स्निग्धे च तारे ययोस्ते अक्षिणी यस्य । इदं वक्ष्यमाणं वाक्यमुक्तवांश्च ॥१९॥ चारु श्रोत्रप्रियम् । चित्राणि पदानि यस्मिन् । श्लक्ष्णं प्रशस्तम् । मृष्टं शुद्धम् । गूढं गंभीरार्थम् । अविक्लवमव्याकुलम् । उत्प्रेक्षते स्वयमनुभूतमनुवदन्निव ॥ २० ॥ भाषणे हेतुः । धर्मं जिज्ञासुभिः पुंभिः सत्सु स्वमनीषितमावेद्यं वक्तव्यम् । अतः प्रजानुशासनमिषेण जिज्ञासैव क्रियते न युष्मान्प्रति धर्मप्रवचनमिति भावः ॥ २१ ॥ इदानीं प्रजाः शिक्षयिष्यन्प्रजाशिक्षणादिकं ममावश्यकमित्याह । अहमिति त्रिभिः । पृथक् सेतुषु

तभुजो गौरः कंजारुणेक्षणः ॥ सुनासः सुमुखः सौम्यः पीनांसः सुद्विजस्मितः ॥ १५ ॥ व्यूढवक्षा बृहच्छ्रोणिर्वलिवल्गुदलोदरः ॥ आवर्तनाभिरोजस्वी कांचनोरुरुदग्रपात् ॥ १६ ॥ सूक्ष्मवक्रासितस्निग्धमूर्धजः कंबुकंधरः ॥ महाधने दुकूलाग्र्ये परिधायोपवीय च ॥१७॥ व्यंजिताशेषगात्रश्रीर्नियमे न्यस्तभूषणः ॥ कृष्णाजिनधरः श्रीमान्कुशपाणिः कृतोचितः ॥१८॥ शिशिरः स्निग्धताराक्षः समैक्षत समंततः ॥ ऊचिवानिदमुर्वीशः सदः संहर्षयन्निव ॥ १९ ॥ चारु चित्रपदं श्लक्ष्णं मृष्टं गूढमविक्लवम् ॥ सर्वेषामुपकारार्थं तदा अनुवदन्निव ॥ २० ॥ राजोवाच ॥ सभ्याः शृणुत भद्रं वः साधवो य इहागताः ॥ सत्सु जिज्ञासुभिर्धर्ममावेद्यं स्वमनीषितम् ॥ २१ ॥ अहं दंडधरो राजा प्रजानामिह योजितः ॥ रक्षिता वृत्तिदः स्वेषु सेतुषु स्थापिता पृथक् ॥ २२ ॥ तस्य मे तदनुष्ठानाद्यानाहुर्ब्रह्मवादिनः ॥ लोकाः स्युः कामसंदोहा यस्य तुष्यति दिष्टदृक् ॥ २३ ॥ य उद्धरेत्करं राजा प्रजा धर्मेष्वशिक्षयन् ॥ प्रजानां शमलं भुंक्ते भगं च स्वं जहाति सः ॥ २४ ॥ तत्प्रजा भर्तृपिंडार्थं स्वार्थमेवानसूयवः ॥ कुरुताधोक्षजधियस्तर्हि मेऽनुग्रहः कृतः ॥ २५ ॥ यूयं तदनुमोदध्वं पितृदेवर्षयोऽमलाः ॥ कर्तुः शास्तुरनुज्ञातुस्तुल्यं यत्प्रेत्य तत्फलम् ॥ २६ ॥ अस्ति यज्ञपतिर्नाम केषांचिदर्हसत्तमाः ॥ इहामुत्र च लक्ष्यंते ज्योत्स्नावत्यः कचिद्भुवः ॥ २७ ॥ मनोरुत्तानपादस्य ध्रुवस्यापि महीपतेः ॥ प्रियव्रतस्य राज-

स्थापयिता ॥२२॥ दिष्टदृक् प्राक्कर्मसाक्षीश्वरो यस्य तुष्यति तस्य वेदवादिनो यान्लोकानाहुः प्रजारक्षणाद्यनुष्ठानात्ते लोका मे स्युः । कथंभूताः । कामानां सम्यक् दोहः प्रपूरणं येषु ॥ २३ ॥ अन्यथा त्वनिष्टं स्यादित्याह । य इति । शमलं पापम् । भगमैश्वर्यम् ॥२४॥ तत्तस्माद्धे प्रजाः ! भर्तुर्मम पिंडार्थं पिंडदानवत्परलोकहितार्थं स्वकार्यमेव कुरुत स्वधर्ममेवानुतिष्ठत । अधोक्षजे धीर्येषां तादृशाः संतः वासुदेवार्पणदृष्ट्येत्यर्थः । अनुग्रहः कुतो भवेदिति शेषः ॥२५॥ शास्तुः शिक्षयितुरनुज्ञातुरनुमोदितुश्च प्रेत्य परलोके यत्फलं तत्तुल्यम् ॥२६॥ कर्म कर्तव्यमित्यनुमोदामहे न तु वासुदेवेऽर्पणीयमिति वेनादिभिस्तदनंगीकारादित्येवंवादिनः शनैः संबोधयन्नाह । हे अर्हसत्तमाः ! यज्ञपतिर्नाम परमेश्वरः केषांचिन्मते तावदस्ति तथापि विप्रतिपत्तेर्न तत्सिद्धिरित्याशंक्य जगद्वैचित्र्यान्यथानुपपत्तिं प्रमाणयति । इहामुत्र च ज्योत्स्नावत्यः कांतिमत्यो भुवो भोगभूमयः शरीराणि च ॥२७॥ नन्विदं कर्म वैचित्र्यादेव सेत्स्यति । तथापि विद्वदनुभवेनेश्वरसिद्धिरित्याह ।

मनोरिति त्रिभिः । अस्मत्पितामहस्यांगस्य ॥ २८ ॥ कृत्यमस्ति अवश्यं कर्मफलदात्रा भाव्यमिति तेषां मतमित्यर्थः ॥ २९ ॥ मृत्योर्दौहित्रान्वेनादीन्विना धर्मे विमोहितान् अतः शोच्यान् । ननु कर्मैव फलं दास्यति विध्युद्देशगता वा देवताः किं परमेश्वरेण तत्राह । वर्गेति । वर्गोऽत्र त्रिवर्गः । स्वर्गो धर्मस्य फलमपवर्गो मोक्षस्तेषामैकात्म्यनेनैकरूप्येण सर्वानुगतेन हेतुना तत्रापि प्रायेण हेतुना । अयं भावः । न तावज्जडस्य कर्मणः फलदातृत्वं घटते न चार्वाग्देवतानां स्वातंत्र्यम् । अंतर्यामिश्रुतेः । न च तदा कर्मसाम्ये फलतारतम्यं क्वचित्तदसिद्धिश्च संभवति । अतः स्वातंत्र्येण कर्तुमकर्तुमन्यथाकर्तुं समर्थेन परमेश्वरेण भाव्यमिति ॥३०॥ किंच । जीवानां मोक्षदः परमेश्वर एव नार्वाग्देवतास्तासामपि जीवत्वाविशेषादित्याशयेनाह त्रिभिः । यस्य पादयोः सेवायामभिरुचिस्तपस्विनां संसारतप्तानामशेषैर्जन्मभिः समृद्धं धियो मलं सद्यः क्षपयति तमेव भजेतेति तृतीयेनान्वयः । कथंभूता । अहन्यहनि वर्धमाना सती सात्त्विकी तत्पादसंबंधस्यैवैष महिमेति दृष्टांतेनाह यथेति ॥ ३१ ॥ विनिर्धुता अशेषा मनोमला यस्य । असंगो वैराग्यं तेन विज्ञातस्य विशेषः साक्षात्कारस्तदेव वीर्यं यस्य । यस्यांघ्रिमूले कृताश्रयः सन् ॥३२॥ आत्मवृत्तिभिरध्यापनादिभिः मनोवचःकायानां गुणैर्ध्यानस्तुतिसपर्याभिः अमायिनो निष्कपटाः संतः । ननु ब्रह्मादिभिः सेव्ये किमस्मद्भक्त्या भविष्यति तत्राह । यथाधिकारमेवावसिता निश्चिता समाप्ता वाऽर्थसिद्धिर्येषाम्

षैरंगस्यास्मत्पितुः पितुः ॥२८॥ ईदृशानामथान्येषामजस्य च भवस्य च ॥ प्रह्लादस्य बलेश्चापि कृत्यमस्ति गदाभृता ॥२९॥ दौहित्रादीनृते मृत्योः शोच्यान्धर्मविमोहितान् ॥ वर्गस्वर्गापवर्गाणां प्रायेणैकात्म्यहेतुना ॥ ३० ॥ यत्पादसेवाभिरुचिस्तपस्विनामशेषजन्मोपचितं मलं धियः ॥ सद्यः क्षिणोत्यन्वहमेधती सती यथा पदांगुष्ठविनिःसृता सरित् ॥ ३१ ॥ विनिर्धुताशेषमनोमलः पुमानसंगविज्ञानविशेषवीर्यवान् ॥ तदंघ्रिमूले कृतकेतनः पुनर्न संसृतिं क्लेशवहां प्रपद्यते ॥ ३२ ॥ तमेव यूयं भजतात्मवृत्तिभिर्मनोवचःकायगुणैः स्वकर्मभिः ॥ अमायिनः कामदुघांघ्रिपंकजं यथाधिकारावसितार्थसिद्धयः ॥ ३३ ॥ असाविहानेकगुणोऽगुणोऽध्वरः पृथग्विधद्रव्यगुणक्रियोक्तिभिः ॥ संपद्यतेऽर्थाशयलिङ्गनामभिर्विशुद्धविज्ञानघनः स्वरूपतः ॥ ३४ ॥ प्रधानकालाशयधर्मसंग्रहे शरीर एष प्रतिपद्य चेतनाम् ॥ क्रियाफलत्वेन विभुर्विभाव्यते यथानलो दारुषु तद्गुणात्मकः ॥ ३५ ॥ अहो ममामी वितरंत्यनुग्रहं हरिं गुरुं यज्ञभुजामधीश्वरम् ॥ स्वधर्मयोगेन यजंति मामका निरंतरं क्षोणितले दृढव्रताः ॥ ३६ ॥ मा जातु तेजः

॥ ३३ ॥ स्वकर्मभिर्यागादिभिर्भजतेत्युक्तं तत्र ब्रह्मार्पणं ब्रह्म हविरिति न्यायेन सर्वेषु यागतदंगतत्फलेषु भगवद्दृष्ट्या कर्म कर्तव्यं न भिन्नदृष्ट्येति वक्तुं तेषां भगवद्रूपतामाह द्वाभ्याम् । असौ भगवानेव स्वरूपतो विशुद्धविज्ञानघनोऽप्यगुणो निर्विशेषणोऽपि सन्निह कर्ममार्गेऽनेकगुणो नानाविशेषणवान् अध्वरो यज्ञः संपद्यते । यज्ञो वै विष्णुरिति श्रुतेः । अनेकगुणत्वमेवाह । पृथग्विधानि यानि द्रव्यादीनि तैः । तत्र द्रव्याणि व्रीह्यादीनि गुणाः शुक्लादयः क्रिया अवघातादयः उक्तयो मंत्राः अर्थोऽङ्गसाध्य उपकारः आशयः संकल्पः लिंगं पदार्थानां शक्तिः नाम ज्योतिष्टोमादि तैश्चाध्वरः संपद्यते ॥ ३४ ॥ यागतदंगानां भगवद्रूपत्वमुक्त्वा यागफलस्यापि भगवद्रूपतामाह । प्रधानेति । एष विभुः परमानंदोऽपि शरीरे चेतनां विषयाकारां बुद्धिं प्रतिपद्य तदभिव्यंग्यानंदरूपः सन् क्रियाफलत्वेन प्रतीयते । एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीति श्रुतेः । यथानलो दारुषु स्थितस्तद्गुणात्मको दारुधर्मदैर्घ्यवक्रत्वादिमांस्तद्वत् । कथंभूते शरीरे प्रधानमव्यक्तम् । कालस्तत्क्षोभकः आशयो वासना धर्मोऽदृष्टं तैः संगृह्यते जन्यत इति यथा तस्मिन् ॥ ३५ ॥ तदेवमप्रवृत्तान्भगवद्भजने प्रवर्त्य स्वतः प्रवृत्तानां प्रवृत्तिमभिनंदनेन द्रढयति अहो इति । वितरंति कुर्वन्ति

॥ ३६ ॥ इदानीं हरिभक्तिदार्ढ्याय ब्राह्मणभक्तिं विधत्ते । माजातित्यष्टभिः । महत्यश्च ता ऋद्धयश्च ताभिर्यद्राजकुलस्य तेजस्तत्तस्मात्सकाशाद्द्विजानां कुलेऽजितो देवता येषां वैष्णवानां तेषां च कुले मा जातु प्रभवेत्कदाचिदपि प्रभावं न करोतु । कथंभूते समृद्धिभिर्विनापि स्वयमेव तितिक्षाभिर्देदीप्यमाने ॥३७॥ ब्राह्मणान् स्तुवन्नाह । यच्चरणाभिवंदनाद्धरिर्लक्ष्मीं यशश्चावाप यत्सेवया चेश्वरस्तुष्यति तदेव ब्रह्मकुलं निषेव्यतामिति द्वयोरन्वयः ॥ ३८ ॥ तस्य हरेर्लोकसंग्रहरूपो यो धर्मस्तत्परैः ॥ ३९ ॥ ननु ब्रह्मकुल एव नित्यं सेव्यमाने सर्वदेवतामुखभूतेऽग्नौ यज्ञाद्यनुष्ठानं न स्यान्न च तेन विना चित्तशुद्धिर्न च तया विना मोक्षः स्यादित्याशंक्याह । पुमानिति द्वाभ्याम् । यस्य ब्रह्मकुलस्य नित्यं संबंधेन निषेवया पुमान्स्वयमेव ज्ञानाभ्यासादिकं विनाप्यत्युत्तमं शमं मोक्षं लभेत । कुतः । यत्सेवया स्वत एवानतिवेलं शीघ्रं प्रसीदतः शुद्ध्यत आत्मनश्चित्तात् ततः परं श्रेष्ठं देवानां किं सुखमस्ति । ब्राह्मणसेवयैव यज्ञादिफलं ज्ञानफलं तत्सर्वं भवतीत्यर्थः ॥४०॥ हरेरपि तदेव परं सुखमित्याह । अश्नातीति। इज्यानां पूज्यानामिंद्रादीनां नामभिर्यस्य मुखे श्रद्धया हुतं हविरनंतो यथाऽश्नाति तथा चेतनया रहिते हुताशने हुतं नाश्नाति । कैर्हुतमश्नाति तत्त्व-

प्रभवेन्महर्धिभिस्तितिक्षया तपसा विद्यया च ॥ देदीप्यमानेऽजितदेवतानां कुले स्वयं राजकुलाद्द्विजानाम् ॥ ३७ ॥ ब्रह्मण्यदेवः पुरुषः पुरातनो नित्यं हरिर्यच्चरणाभिवंदनात् ॥ अवाप लक्ष्मीमनपायिनीं यशो जगत्पवित्रं च महत्तमाग्रणीः ॥ ३८ ॥ यत्सेवयाऽशेषगुहाशयः स्वराट् विप्रप्रियस्तुष्यति काममीश्वरः ॥ तदेव तद्धर्मपरैर्विनीतैः सर्वात्मना ब्रह्मकुलं निषेव्यताम् ॥३९॥ पुमान्लभेतानतिवेलमात्मानः प्रसीदतोऽत्यंतशमं स्वतः स्वयम् ॥ यं नित्यसंबंधनिषेवया ततः परं किमत्रास्ति मुखं हविर्भुजाम् ॥ ४० ॥ अश्नात्यनंतः खलु तत्त्वकोविदैः श्रद्धाहुतं यन्मुख इज्यनामभिः ॥ न वै तथा चेतनया बहिष्कृते हुताशने पारमहंस्यपर्यगुः ॥ ४१ ॥ यद्ब्रह्म नित्यं विरजं सनातनं श्रद्धातपोमंगलमौनसंयमैः ॥ समाधिना बिभ्रति हार्थदृष्टये यत्रेदमादर्श इवावभासते ॥ ४२ ॥ तेषामहं पादसरोजरेणुमार्या वहेयाधिकिरीटमायुः ॥ यं नित्यदा बिभ्रत आशु पापं नश्यत्यमुं सर्वगुणा भजन्ति ॥ ४३ ॥ गुणायनं शीलधनं कृतज्ञं वृद्धाश्रयं संवृणुते नु संपदः ॥ प्रसीदतां ब्रह्मकुलं गवां च जनार्दनः सानुचरश्च मह्यम् ॥४४॥ मैत्रेय उवाच ॥ इति ब्रुवाणं नृपतिं पितृदेवद्विजातयः ॥ तुष्टुवुर्हृष्टमनसः साधुवादेन साधवः ॥ ४५ ॥ पुत्रेण जयते लोकानिति सत्यवती श्रुतिः ॥ ब्रह्मदंडहतः पापो यद्वेनोऽत्यतरत्तमः ॥ ४६ ॥ हिरण्यकशिपुश्चापि भगवन्निंदया तमः ॥ विविक्षुरत्यगात्सूनोः प्रह्लादस्यानुभावतः ॥ ४७ ॥ वीर-

कोविदैः सर्वदेवमयश्चैतन्यमूर्तिरनंत इति तत्त्वं विद्वद्भिः । कुत एवंभूतोऽसौ तत्राह । पारमहंस्यं ज्ञानं तत्परानर्हत्यधिकुर्वंतीति पारमहंस्यपर्यस्ता गावो वाचो यस्मिन् उपनिषद्भिर्ज्ञानघनत्वेनोक्त इत्यर्थः । यद्वा । परमहंसानां ज्ञाननिष्ठानां गम्यः पारमहंस्यः परितो न गच्छंति गावो वाचो यस्मात्स पर्यगुरिंद्रियनियंता स चासौ स च पारमहंस्यपर्यगुर्ज्ञानरूपः सर्वांतर्यामीत्यर्थः ॥ ४१ ॥ न केवलं चेतनत्वेन हुताशनाद्विशेषः किंतु वेदज्ञानादपीत्याह। यदित्यव्ययम् । ये ब्रह्म वेदं नित्यं बिभ्रति तेषामित्युत्तरेणान्वयः । मंगलं नाम । प्रशस्ताचरणं नित्यमप्रशस्तस्य वर्जनम् ॥ एतद्धि मंगलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥ मौनमध्ययनविरोधिवार्तात्यागः समाधिना चित्तस्थैर्येण अर्थदृष्टये वेदार्थमपि विचारयंतीत्यर्थः । यत्र वेदे इदं विश्वमवभासते । यथा आदर्शे मुखम् ॥ ४२ ॥ हे आर्याः ! आ आयुर्यावज्जीवमधिकिरीटं मुकुटस्योपरि वहेयेति। प्रार्थनायां लिङ्। यं रेणुम् ॥४३॥ गुणभजनस्य फलमाह। गुणायनमन्वनु संपदः संवृणुते सम्यग्भजंति। तस्मात्प्रसीदतां प्रसीदतु

गवां च कुलम् ॥४४॥४५॥ साधुवादमाह । पुत्रेणेति षड्भिः । यद्यतो वेनोऽपि तमो नरकमत्यतरदतितार ॥ ४६ ॥ ४७ ॥ ४८ ॥ मुकुंदनाथाः स्म त्वन्नाथत्वमेव मुकुंदनाथत्वे पर्यवसितमित्यर्थः । तत्र हेतुर्य इति ॥४९॥ आजीविनां सेवकानां आ सम्यगनुशासनम् । प्रजास्वनुरागः प्रकृतिः स्वभावः ॥५०॥ उपासादितः प्रापितः कर्मभिर्भ्राम्यताम् ॥५१॥ ईश्वरदृष्ट्या विप्रादयोऽपि प्रणमंति । नम इति । ब्रह्माविश्य ब्राह्मणजातिमधिष्ठाय क्षत्रं क्षत्रियं बिभर्ति क्षत्रं चाविश्य ब्रह्म बिभर्ति तदुभयं चाविश्येदं विश्वं बिभर्ति ॥५२॥ इति चतुर्थे टीकायामेकविंशोऽध्यायः ॥ २१ ॥ द्वाविंशे तु परं ज्ञानं पृथवे हरिशासनात् ॥ सनत्कुमारो भगवानुपादिशदितीर्यते ॥ १ ॥ मुनयः सनकादयः ॥ १ ॥ अर्चिषा लक्षितान्सनकादय इति ज्ञापितान् । अचष्टापश्यत् ॥ २ ॥ तेषां दर्शनेनोद्गतान्प्राप्तुमिच्छुरिव । अयं भावः । ऊर्ध्वं प्राणा ह्युत्क्रामंति यूनः स्थविर आयति ॥ प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यत इति स्मृतेः । प्राणास्तावत्तत्तेजसाक्षिप्ता-

वर्य पितः पृथ्व्याः समाः संजीव शाश्वतीः ॥ यस्येदृश्यच्युते भक्तिः सर्वलोकैकभर्तरि ॥ ४८ ॥ अहो वयं ह्यद्य पवित्रकीर्ते त्वयैव नाथेन मुकुंदनाथाः ॥ य उत्तमश्लोकतमस्य विष्णोर्ब्रह्मण्यदेवस्य कथां व्यनक्ति ॥ ४९ ॥ नात्यद्भुतमिदं नाथ तवाजीव्यानुशासनम् ॥ प्रजानुरागो महतां प्रकृतिः करुणात्मनाम् ॥ ५० ॥ अद्य नस्तमसः पारस्त्वयोपासादितः प्रभो ॥ भ्राम्यतां नष्टदृष्टीनां कर्मभिर्दैवसंज्ञितैः ॥५१॥ नमो विवृद्धसत्त्वाय पुरुषाय महीयसे ॥ यो ब्रह्म क्षत्रमाविश्य बिभर्तीदं स्वतेजसा ॥ ५२ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे एकविंशोऽध्यायः ॥ २१ ॥

मैत्रेय उवाच ॥ जनेषु प्रगृणत्स्वेवं पृथु पृथुलविक्रमम् ॥ तत्रोपजग्मुर्मुनयश्चत्वारः सूर्यवर्चसः ॥१॥ तांस्तु सिद्धेश्वरान्राजा व्योम्नोऽवतरतोऽर्चिषा ॥ लोकानपापान्कुर्वत्या सानुगोऽचष्ट लक्षितान् ॥ २ ॥ तद्दर्शनोद्गतान्प्राणान्प्रत्यादित्सुरिवोत्थितः ॥ ससदस्यानुगो वैन्य इन्द्रियेशो गुणानिव ॥ ३ ॥ गौरवाद्यंत्रितः सभ्यः प्रश्रयानतकन्धरः ॥ विधिवत्पूजयांचक्रे गृहीताध्यर्हणासनान् ॥ ४ ॥ तत्पादशौचसलिलैर्मार्जितालकबंधनः ॥ तत्र शीलवतां वृत्तमाचरन्मानयन्निव ॥ ५ ॥ हाटकासन आसीनान्स्वधिष्ण्येष्विव पावकान् ॥ श्रद्धासंयमसंयुक्तः प्रीतः प्राह भवाग्रजान् ॥ ६ ॥ पृथुरुवाच ॥ अहो आचरितं किं मे मंगलं मंगलायनाः ॥ यस्य वो दर्शनं ह्यासीद्दुर्दर्शानां च योगिभिः ॥ ७ ॥ किं तस्य दुर्लभतरमिह लोके परत्र च ॥ यस्य विप्राः प्रसीदंति शिवो विष्णुश्च सानुगः ॥ ८ ॥ नैव लक्ष्यते लोको लोकान्पर्यटतोऽपि यान् ॥ यथा सर्वदृशं सर्व आत्मानं येऽस्य हेतवः ॥ ९ ॥ अधना अपि ते धन्या साधवो गृहमेधिनः ॥ यद्गृहा ह्यर्हवर्याम्बुतृणभूमीश्वरावराः ॥ १० ॥ व्यालालयद्रुमा वै तेऽप्यरिक्ताखिल-

स्तान्प्रत्युद्गच्छंत्यतः स्वयमनुद्गच्छतः प्राणहानिः स्यादिति भयादिव ससंभ्रमं प्रत्युद्गमं चकारेति सह सदस्यैरनुगैश्च वर्तमानः इंद्रियेशो जीवो गुणान्गंधादीन्प्रति यथोद्गच्छतीत्यौत्सुक्ये दृष्टांतः ॥ ३ ॥ यंत्रितो वशीकृतः गृहीतमध्यर्हणमर्घ्यमासनं च यैस्तान् ॥ ४ ॥ मार्जितं क्षालितमलकबंधनं यस्य मानयन्निव स्वयं चचार ॥५॥ भवस्याप्यग्रजत्वेन मान्यान् ॥६॥ प्रीतः प्राहेत्युक्तं तदेव प्रीतिपूर्वकं वचनमाह । अहो इति दशभिः । हे मंगलायनाः ! मंगलमयनं येषाम् । मया किं मंगलमाचरितम् । यस्य मे योगिभिरपि दुर्दर्शानां वो दर्शनमासीत् ॥७॥८॥ दुर्दर्शत्वमेवाह । नैवेति । सर्वदृशमात्मानं यथा सर्वे दृश्या न लक्ष्यंते येऽस्य विश्वस्य हेतवो महदादयो मन्वादयो वा। यद्वा कथंभूतान्। येऽस्य सर्वदृगात्मदर्शनस्य हेतवस्तान् ॥९॥ येषां साधूनां गृहा अर्हाणां

पूज्यानां वर्या वरणीयाः स्वीकारार्हा अंब्वादयो येषु तादृशाः। अंबु च तृणं च भूमिश्च ईश्वरो गृहस्वामी चावरा भृत्यादयश्च ॥ १० ॥ व्यालानामालया द्रुमा एव ते अरिक्ताः पूर्णा अखिलाः संपदो येषु तादृशा अपि यद्गृहा ये गृहास्तीर्थपादीया वैष्णवास्तेषां पादतीर्थेन विवर्जिताः ॥ ११ ॥ स्वागतं भद्रमागमनं जातम्। यद्यस्माद्बाला एव भवंतो बृहंति व्रतानि चरंति। यद्वा। येषां वो व्रतान्यन्ये बालाश्चरंति ॥ १२ ॥ इंद्रियार्था विषयास्तानेवार्थं पुरुषार्थं ये विदंति तेषां नः व्यसनान्युप्यंते यस्मिंस्तस्मिन्संसारे ॥ १३ ॥ नन्वभ्यागतानां कुशलं पृच्छते लोके न त्वात्मनस्तत्राह। भवत्स्विति ॥ १४ ॥ तत्तस्मात्कृतविश्वासः संस्तपस्विनां संतप्तानां सुहृदो वो युष्मान्पृच्छामि ॥ १५ ॥ न खल्वन्ययोगितुल्या यूयं किंतु साक्षाद्भगवानेवेत्याह। व्यक्तं निश्चितमात्मवतां धीराणामात्मा तेष्वात्मत्वेन प्रकाशमानः आत्मानं भावयति प्रकाशयतीति तथा अजः श्रीनारायणः इमां पृथ्वीं चरति ॥ १६ ॥ सूक्तं शोभनवचनम्। सारं न्याय्यम्। सुष्ठु गंभीरार्थम्। मितमल्पाक्षरम्। मधु श्रोत्रप्रियम्। मुखप्रसत्त्या स्मयमान इव प्रतीयमानः ॥१७॥ विदुषा जानतापि ईदृशी परार्थैकपरा ॥१८॥ स्वयमपि पृथोः संगममभिनंदति। संगम इति उभयेषां वक्तॄणां श्रोतॄणां च येषां संभाषणसहितः संप्रश्नः सर्वेषां शं सुखं विस्तारयति ॥ १९ ॥ तदेवं संगमं प्रश्नं चाभिनंद्यानुवादमुखेनैव मोक्षसाधनमुपदिशति। अस्त्येवेति। गुणानामनुवादने प्रश्नद्वारेणानुवादप्रवर्तने श्रवण इत्यर्थः। आत्मनो मनसोऽन्तरंतस्थं कामात्मकं मलं विधुनोति। कषायं धातुरागवदनिवर्त्यम् ॥२०॥ चित्तशुद्ध्यैव बहिर्वैराग्यमात्मरतिश्च भवति। न च ततोऽधिकं साधनमस्ति शास्त्रेषु तयोरेव मोक्षहेतुत्वनिश्चयादित्याह। शास्त्रेष्विति। सध्र्यग्विमृशेषु सम्यग्विचारवत्सु शास्त्रेषु क्षेमस्य हेतुरेतावानेव सुनिश्चितः कोऽसौ आत्मव्यतिरिक्ते देहादावसंगो वैराग्यमात्मनि च दृढा रतिः प्रीतिः आत्मनो विशेषणम्। निर्गुणे ब्रह्मणीति ॥ २१ ॥ नन्वेतदेवातिदुर्लभमित्याशंक्योत्तमाधिकारिणः श्रवणमात्रेण भवत्यन्यस्य तु चित्तशुद्ध्यनुसारेण साधनतारतम्यतो वर्धमानया भक्त्येत्यभिप्रेत्याह। सेति चतुर्भिः। सा ब्रह्मणि रतिरसंगश्च श्रद्धादिभिः स्यादिति चतुर्थेनान्वयः। जिज्ञासया तत्तद्विशेषबुभुत्सया पुण्यं श्रवो यशो यस्य तस्य हरेः पुण्यया कथया च ॥ २२ ॥ अर्थारामा

संपदः ॥ यद्गृहास्तीर्थपादीयपादतीर्थविवर्जिताः ॥ ११ ॥ स्वागतं वो द्विजश्रेष्ठा यद्व्रतानि मुमुक्षवः ॥ चरंति श्रद्धया धीरा बाला एव बृहंति च ॥ १२ ॥ कच्चिन्नः कुशलं नाथा इन्द्रियार्थार्थवेदिनाम् ॥ व्यसनावाप एतस्मिन्पतितानां स्वकर्मभिः ॥ १३ ॥ भवत्सु कुशलप्रश्न आत्मारामेषु नेष्यते ॥ कुशलाकुशला यत्र न संति मतिवृत्तयः ॥ १४ ॥ तदहं कृतविश्रंभः सुहृदो वस्तपस्विनाम् ॥ संपृच्छे भव एतस्मिन्क्षेमः केनांजसा भवेत् ॥ १५ ॥ व्यक्तमात्मवतामात्मा भगवानात्मभावनः ॥ स्वानामनुग्रहायेमां सिद्धरूपी चरत्यजः ॥ १६ ॥ मैत्रेय उवाच ॥ पृथोस्तत्सूक्तमाकर्ण्य सारं सुष्ठु मितं मधु ॥ स्मयमान इव प्रीत्या कुमारः प्रत्युवाच ह ॥ १७ ॥ सनत्कुमार उवाच ॥ साधु पृष्टं महाराज सर्वभूतहितात्मना ॥ भवता विदुषा चापि साधूनां मतिरीदृशी ॥ १८ ॥ संगमः खलु साधूनामुभयेषां च संमतः ॥ यत्संभाषणसंप्रश्नः सर्वेषां वितनोति शम् ॥१९ ॥ अस्त्येव राजन्भवतो मधुद्विषः पादारविंदस्य गुणानुवादने ॥ रतिर्दुरापा विधुनोति नैष्ठिकी कामं कषायं मलमंतरात्मनः ॥ २० ॥ शास्त्रेष्वियानेव सुनिश्चितो नृणां क्षेमस्य सध्र्यग्विमृशेषु हेतुः ॥ असंग आत्मव्यतिरिक्त आत्मनि दृढा रतिर्ब्रह्मणि निर्गुणे च या ॥ २१ ॥ सा श्रद्धया भगवद्धर्मचर्यया जिज्ञासयाध्यात्मिकयोगनिष्ठया ॥ योगेश्वरोपासनया च नित्यं पुण्यश्रवःकथया पुण्यया च ॥२२॥ अर्थेन्द्रियारामसगोष्ठ्यतृष्णया तत्संमताना-

अर्थनिष्ठास्तामसा इंद्रियारामाः कामनिष्ठा राजसास्तैः सह या गोष्ठी तस्यामतृष्णया तेषां च ये संमता अर्थाः कामाश्च तेषामपरिग्रहेणानासक्त्या विविक्ते विजने या रुचिस्तया सा चात्मन्येव परितोषे सति स्यात्किंतु हरेर्गुणपीयूषपानाद्विना तस्मिन्सति विविक्ते रुचिर्न कार्या । न चात्मनि परितोषः कार्य इत्यर्थः ॥२३॥ पारमहंस्यचर्यया उपशमादिप्रधानया वृत्त्या स्मृत्यात्महितानुसंधानेन मुकुंदाचरितमेवाग्र्यं सीधु श्रेष्ठममृतं तच्चरितस्मृतिसुखेनेत्यर्थः । मार्गान्तरस्यानिंदया निरीहया योगक्षेमार्थक्रियाराहित्येन शीतोष्णादिद्वंद्वसहनेन ॥२४॥ कथयेत्यत्रोक्तमपि कथनं भक्त्यावंतरंगत्वेन पुनरुच्यते। तत्परा हरिभक्तास्तेषां कर्णपूराः कर्णालंकारभूता ये हरेर्गुणास्तेषामभिधानेन सदसति कार्यकारणरूपे ॥२५॥ भवत्वन्यत्रासंग आत्मरतिश्च ततः किमत आह । यदा निष्ठां प्राप्ता रतिर्भवति तदाचार्यवान्सन् ज्ञानवैराग्ययोर्वेगेनावीर्यं निर्वासनं सज्जीवस्य कोशमावरकं हृदयं पुमान्दहति । कथंभूतम् । पंचमहाभूतप्रधानम्। यद्वा । अविद्यास्मितारागद्वेषाभिनिवेशाः पंच तदात्मकम् । उत्थितः प्रज्वलितोऽग्निर्योनिमरणिमिव । यद्वा। यदा रतिराचार्यानुग्रहश्च तदा ज्ञानविरागयोर्वेगेनोत्थितः साक्षात्कारो वीर्यं पुनः प्ररोहक्षमं यथा न भवत्येवं हृदयं दहति। शेषं समानम् ॥ २६ ॥ ततः किमत आह। दग्ध आशयो हृदयमुपाधिर्यस्य अतएव मुक्ताः समस्तास्तद्गुणाः कर्तृत्वादयो येन आत्मनः सकाशाद्बहिर्घटाद्यंतः सुखदुःखादिनैव विचष्टे न पश्यत्येव। कुत इत्य-

मपरिग्रहेण च ॥ विविक्तरुच्या परितोष आत्मन्विना हरेर्गुणपीयूषपानात् ॥ २३ ॥ अहिंसया पारमहंस्यचर्यया स्मृत्या मुकुंदाचरिताग्र्यसीधुना ॥ यमैरकामैर्नियमैश्चाप्यनिंदया निरीहया द्वंद्वतितिक्षया च ॥ २४ ॥ हरेर्मुहुस्तत्परकर्णपूरगुणाभिधानेन विजृम्भमाणया ॥ भक्त्या ह्यसंगः सदसत्यनात्मनि स्यान्निर्गुणे ब्रह्मणि चांजसा रतिः ॥ २५ ॥ यदा रतिर्ब्रह्मणि नैष्ठिकी पुमानाचार्यवान्ज्ञानविरागरंहसा ॥ दहत्यवीर्यं हृदयं जीवकोशं पंचात्मकं योनिमिवोत्थितोऽग्निः ॥ २६ ॥ दग्धाशयो मुक्तसमस्ततद्गुणो नैवात्मनो बहिरंतर्विचष्टे ॥ परात्मनोर्यद्व्यवधानं पुरस्तात्स्वप्ने यथा पुरुषस्तद्विनाशे ॥ २७ ॥ आत्मानमिंद्रियार्थं च परं यदुभयोरपि ॥ सत्याशय उपाधौ वै पुमान्पश्यति नान्यदा ॥ २८ ॥ निमित्ते सति सर्वत्र जलादावपि पूरुषः ॥ आत्मनश्च परस्यापि भिदां पश्यति नान्यदा ॥ २९ ॥ इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मनः ॥ चेतनां हरते बुद्धेः स्तंबस्तोयमिव ह्रदात् ॥ ३० ॥ भ्रश्यत्यनुस्मृतिश्चित्तं ज्ञानभ्रंशः स्मृतिक्षये ॥ तद्रोधं कवयः प्राहुरात्मापह्नवमात्मनः ॥ ३१ ॥ नातः परतरो लोके

पेक्षायां द्रष्टृदृश्यप्रतीतेरंतःकरणहेतुत्वादित्याह। परो दृश्य आत्मा द्रष्टा तयोर्यद्व्यवधानं भेदकं पूर्वमासीत्तस्य विनाशे सति यथा स्वप्ने राजाऽहमित्यारोपितं सैन्यादि द्रष्टारं दृश्यं सैन्यं च स्वप्नावस्थानाशे न पश्यति तद्वत् ॥२७॥ द्रष्टृदृश्यभेदप्रतीतेरंतःकरणहेतुत्वमन्वयव्यतिरेकाभ्यामुपपादयति। आत्मानमिति। आत्मानं द्रष्टारमिंद्रियार्थं दृश्यमुभयोस्तयोः परं संबंधहेतुमहंकारं चाशयेऽन्तःकरणे सत्येव जाग्रत्स्वप्नयोः पश्यत्यन्यदा सुषुप्तौ न । तदुक्तम् । दृश्यानुरंजितं द्रष्टृदृश्यं द्रष्ट्रनुरंजितम् ॥ अहंकृत्योभयं रक्तं तन्नाशेऽद्वैततात्मनः इति ॥ २८ ॥ एकस्मिन्नात्मनि दृश्यादिभेदप्रतीतिरौपाधिकीति दृष्टांतेन स्पष्टयति । निमित्त इति । लोकेऽपि च सर्वत्र जलदर्पणादौ भेदनिमित्ते सत्येवात्मनो बिंबभूतस्य परस्य प्रतिबिंबस्य च भेदं पश्यति न तु जलाद्यभावे ॥ २९ ॥ तदेवं चतुर्भिरसंगात्मरत्योर्मोक्षहेतुत्वमुक्तमिदानीमनात्मरतेः संसारहेतुत्वमाह । इंद्रियैरिति चतुर्भिः । ध्यायतां गुणारोपेण स्मरतां पुंसामिंद्रियाणि स्मृतैर्विषयैराकृष्यंते तैश्च मन आकृष्यते विषयासक्तिं प्राप्यते। तच्च बुद्धेः सकाशात्तद्धर्मं चेतनां विचारसामर्थ्यं हरति । एतच्चाविवेकिना न लक्ष्यत इति दृष्टांतेनाह । तीरजः कुशादिस्तंबो यथा मूलैस्तोयं ह्रदादपहरति तद्वत् ॥ ३० ॥ चित्तं चेतनामनु तस्यामपहृतायां स्मृतिः पूर्वापरानुसंधानं भ्रश्यति एवं तद्रोधं ज्ञानभ्रंशमात्मन एव हेतोरात्मनोऽपह्नवं नाशं प्राहुः ॥ ३१ ॥ एवंभूतो नाशो भवतु । ततश्च किमित्यत आह । यदधि

यमधिकृत्यान्यस्य विषयस्य प्रियतमत्वम् । आत्मनस्तु कामाय सर्वं प्रियं भवतीति श्रुतेः । तस्यात्मनः स्वेनैव यो व्यतिक्रमोऽपह्नवस्तस्माद्यः स्वार्थनाशोऽतः परतरः स्वार्थनाशो नास्ति ॥३२॥ कुत इत्यत आह । अर्थस्याभिध्यानमिंद्रियस्यार्थः कामस्तस्याभिध्यानं सर्वार्थनाशः । ज्ञानं विज्ञानं च परोक्षापरोक्षम् । येन ध्यानेन मुख्यतां स्थावरताम् ॥ ३३ ॥ अनात्मरतेरनर्थहेतुत्वमुक्तं संगस्याप्याह । नेति । यद्वस्तु धर्मादीनां विघातकं तस्मिन्संगम् । तमः संसारम् ॥३४॥ तुल्यवन्निर्देशात्पुरुषार्थसाम्यभ्रांतिं वारयति । तत्रापीति । कृतांतः कालः ॥३५॥ भयसंयुतत्वमेवाह । परे ब्रह्मादयोऽवरेऽस्मदादयो गुणक्षोभादनु पश्चाद्भवंति ईशः कालस्तेन विध्वंसिता आशिषो येषाम् ॥३६॥ यस्मादनात्मरतिरनर्थहेतुस्तत्तस्माज्जगतां जंगमानां तस्थुषां स्थावराणां च देहादिभिरात्मनोऽहंकारेण चावृतानां हृदि यश्चकास्ति प्रकाशते तमवेहि । कथं सोऽस्मीति पाठे स एवैकोऽस्ति ततोऽन्यदसदित्यर्थः । ननु जीवो हृदि चकास्ति नान्यस्तत्राह । क्षेत्रविदं जीवं तपति नियमयतीति क्षेत्रवित्तपस्तस्य भावस्तत्ता । तयांतर्यामिरूपेण यद्वा क्षेत्रवित्ते अहंममतास्पदे पातीति क्षेत्रवित्तपस्तेन रूपेण जीवस्तु पारतंत्र्यान्न पाति । ननु कर्म जीवं नियच्छति न आविः प्रत्यक्षः तर्हि बुद्धि-

पुंसः स्वार्थव्यतिक्रमः ॥ यदध्यन्यस्य प्रेयस्त्वमात्मनः स्वव्यतिक्रमात् ॥ ३२ ॥ अर्थेन्द्रियार्थाभिध्यानं सर्वार्थापह्नवो नृणाम् ॥ भ्रंशितो ज्ञानविज्ञानाद्येनाविशति मुख्यताम् ॥ ३३ ॥ न कुर्यात्कर्हिचित्संगं तमस्तीव्रं तितीरिषुः ॥ धर्मार्थकाममोक्षाणां यदत्यंतविघातकम् ॥ ३४ ॥ तत्रापि मोक्ष एवार्थ आत्यंतिकतयेष्यते ॥ त्रैवर्ग्योऽर्थो यतो नित्यं कृतान्तभयसंयुतः ॥ ३५ ॥ परेऽवरे च ये भावा गुणव्यतिकरादनु ॥ न तेषां विद्यते क्षेममीशविध्वंसिताशिषाम् ॥ ३६ ॥ तत्त्वं नरेन्द्र जगतामथ तस्थुषां च देहेन्द्रियासुधिषणात्मभिरावृतानाम् ॥ यः क्षेत्रवित्तपतया हृदि विश्वगाविः प्रत्यक् चकास्ति भगवांस्तमवेहि सोऽस्मि ॥ ३७ ॥ यस्मिन्निदं सदसदात्मतया विभाति माया विवेकविधुति स्रजि वाऽहिबुद्धिः ॥ तं नित्यमुक्तपरिशुद्धविबुद्धतत्त्वं प्रत्यूढकर्मकलिलप्रकृतिं प्रपद्ये ॥ ३८ ॥ यत्पादपंकजपलाशविलासभक्त्या कर्माशयं ग्रथितमुद्ग्रथयंति संतः ॥ तद्वन्न रिक्तमतयो मतयोऽपि रुद्धस्रोतोगणास्तमरणं भज वासुदेवम् ॥ ३९ ॥ कृच्छ्रो महानिह भवार्णवमप्लवेशां षड्वर्गनक्रमसुखेन तितीरिषंति ॥ तत्त्वं हरेर्भगवतो भजनीयमंघ्रिं कृत्वोडुपं व्यसनमुत्तर दुस्तरार्णम् ॥ ४० ॥ मैत्रेय उवाच ॥ स एवं ब्रह्मपुत्रेण कुमारेणात्ममेधसा ॥ दर्शितात्मगतिः सम्यक् प्रशस्योवाच

र्न प्रत्यक्प्रतिलोमं चकास्ति । बुद्धिस्तु पराग्विषयाकारेण तर्ह्यहंकारः न विष्वग्व्याप्तत्वेन स तु परिच्छिन्नः एवंभूतो यो भगवांस्तमवेहीति ॥३७॥ स्थावरजंगमादीनां हृदि चकास्तीत्युक्तं तेषां सत्त्वं तत्संबंधादीश्वरस्य मालिन्यं च प्रसक्तं निराकुर्वन्नुद्रिक्तभक्त्या तं प्रणमति । यस्मिन्निदं विश्वं सदसदात्मतयोत्कृष्टभावेन कार्यकारणभावेन वा मायैव विभाति तं प्रपद्ये । मायात्वे हेतुः । विवेकेन विधुतिर्निराकृतिर्यस्य तत् स्रजि वेति वाशब्दो दृष्टांते । नित्यमुक्तम् । यतः परिशुद्धम् । तत्कुतः । विबुद्धं तत्त्वं सत्यमतएव प्रत्यूढाभिभूता कर्मभिः कलिला मलिना प्रकृतिर्येन तम् ॥३८॥ तमवेहीति ज्ञानमुपदिष्टं तस्य दुष्करत्वेन भक्तिमुपदिशति द्वाभ्याम् । यस्य पादपंकजयोः पलाशान्यंगुलयस्तेषां विलासः कांतिस्तस्य भक्त्या स्मृत्या कर्माशयमहंकाररूपं हृदयग्रंथिम् । कर्मभिरेव ग्रथितम् । रिक्ता निर्विषया मतिर्येषाम् । रुद्धः प्रत्याहृतः स्रोतोगणः इन्द्रियवर्गो यैः । अरणं शरणम् ॥ ३९ ॥ ननु ब्रह्मविदाप्नोति परमिति श्रुतेः कथं यतयो नोद्ग्रथयंतीत्युच्यते तत्राह । कृच्छ्र इति । अप्लवेशां न प्लवस्तरणहेतुरिट् ईशो येषां तेषां महानिह तरणे कृच्छ्रः क्लेशः ते ह्यसुखेन योगादिनेन्द्रियषड्वर्गग्राहं भवार्णवं तितीर्षन्ति । तत्तस्मात् उडुपं प्लवं दुस्तरार्णवमित्यर्थः । अर्णशब्दे

वकाराभाव आर्षः । यद्वा । दुस्तरोदकरूपं व्यसनमित्यर्थः ॥४०॥ आत्ममेधसा ब्रह्मविदा दर्शिता आत्मनो गतिस्तत्त्वं यस्मै सः ॥ ४१ ॥ ब्रह्मन्निति संबोधनं प्राधान्यादेकस्तस्य यूयमित्युक्तिः सर्वान्प्रति ॥ ४२ ॥ आत्मना देहेन सह सर्वं राज्यादिकं मदीयं साधूच्छिष्टं साधुभिः स्वीयं सन्मह्यं प्रसादरूपेण दत्तमतस्तत्र मम स्वत्वाभावाद्गुरुदक्षिणार्थं किं ददे । नहि पित्रा दत्तं मोदकादि तस्मै दानरूपेण प्रत्यर्प्यते ॥ ४३ ॥ निवेदनं तु तदीयस्यैव समर्पणं यथा भृत्यो राज्ञे सेवादिरूपेण तांबूलादिकमर्पयति तथा मयापि सर्वं निवेदितं स्वीकुरुतेत्याह । प्राणा इति ॥ ४४ ॥ आत्मनः स्वत्वाभावं प्रपंचयति । सैनापत्यं चेति द्वाभ्याम् ॥ ४५ ॥ वस्ते परिधत्ते अन्नमात्रं केवलं भुंजते न तु दाने स्वतंत्राः ॥४६॥ सत्यपि स्वत्वे सर्वस्वेनापि न गुरोः प्रत्युपकर्तुं शक्य-

तं नृपः ॥ ४१ ॥ राजोवाच ॥ कृतो मेऽनुग्रहः पूर्वं हरिणाऽर्तानुकंपिना ॥ तमापादयितुं ब्रह्मन्भगवन्यूयमागताः ॥४२॥ निष्पादितश्च कार्त्स्न्येन भगवद्भिर्घृणालुभिः ॥ साधूच्छिष्टं हि मे सर्वमात्मना सह किं ददे ॥४३॥ प्राणा दाराः सुता ब्रह्मन्गृहाश्च सपरिच्छदाः ॥ राज्यं बलं मही कोश इति सर्वं निवेदितम् ॥ ४४ ॥ सैनापत्यं च राज्यं च दंडनेतृत्वमेव च ॥ सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥ ४५ ॥ स्वमेव ब्राह्मणो भुंक्ते स्वं वस्ते स्वं ददाति च ॥ तस्यैवानुग्रहेणान्नं भुंजते क्षत्रियादयः ॥ ४६ ॥ यैरीदृशी भगवतो गतिरात्मवाद एकांततो निगमिभिः प्रतिपादिता नः ॥ तुष्यंत्वदभ्रकरुणाः स्वकृतेन नित्यं को नाम तत्प्रतिकरोति विनोदपात्रम् ॥४७॥ मैत्रेय उवाच ॥ त आत्मयोगपतय आदिराजेन पूजिताः ॥ शीलं तदीयं शंसंतः खेऽभूवन्मिषतां नृणाम् ॥ ४८ ॥ वैन्यस्तु धुर्यो महतां संस्थित्याध्यात्मशिक्षया ॥ आप्तकाममिवात्मानं मेन आत्मन्यवस्थितः ॥ ४९ ॥ कर्माणि च यथाकालं यथादेशं यथाबलम् ॥ यथोचितं यथावित्तमकरोद्ब्रह्मसात्कृतम् ॥ ५० ॥ फलं ब्रह्मणि विन्यस्य निर्विषंगः समाहितः ॥ कर्माध्यक्षं च मन्वान आत्मानं प्रकृतेः परम् ॥५१॥ गृहेषु वर्तमानोऽपि स साम्राज्यश्रियान्वितः ॥ नासज्यतेन्द्रियार्थेषु निरहंमतिरर्कवत् ॥ ५२ ॥ एवमध्यात्मयोगेन कर्माण्यनुसमाचरन् ॥ पुत्रानुत्पादयामास पंचार्चिष्यात्मसंमतान् ॥ ५३ ॥ विजिताश्वं धूम्रकेशं हर्यक्षं द्रविणं वृकम् ॥ सर्वेषां लोकपालानां दधारैकः पृथुर्गुणान् ॥ ५४ ॥ गोपीथाय जगत्सृष्टेः काले स्वे स्वेऽच्युतात्मकः ॥ मनो वाग्वृत्तिभिः सौम्यैर्गुणैः संरंजयन्प्रजाः ॥ ५५ ॥ राजेत्यधान्नामधेयं सोमराज इवापरः ॥ सूर्यवद्विसृजन्गृह्णन्प्रतपंश्च भुवो वसु ॥ ५६ ॥ दुर्धर्षस्तेजसेवाग्निर्महेंद्र इव दुर्जयः ॥ तिति-

मित्याह । यैरिति । आत्मवादेऽध्यात्मविचारे एकांततो निश्चयेन निगमिभिर्वेदविद्भिः ते नित्यमनल्पकरुणाः स्वकृतेनैव दीनोद्धरणकर्मणा तुष्यंतु । को नाम तत्कृतमुपकारं प्रति स्वयमुपकरोत्युद-पात्रमंजलिं विना । मयांजलिरेव तेभ्यो बद्ध इत्यर्थः । यद्वा । विनोदपात्रमुपहासास्पदम् । प्रत्युपकारे प्रवृत्तो जनानामुपहासास्पदं भवेदित्यर्थः ॥ ४७ ॥ खेऽभूवन्नाकाशमार्गेणोद्गताः ॥ ४८ ॥ धुर्यो मुख्यः अध्यात्मशिक्षया संस्थितिरेकाग्रता तयात्मन्यवस्थितः सन्मेने ॥ ४९ ॥ ब्रह्मसात्कृतं ब्रह्मण्यर्पितं यथा भवति तथा ॥ ५० ॥ निर्विषंगः कर्मस्वनासक्तः कर्माध्यक्षं कर्मसाक्षिणमुदा-सीनं मन्वानोऽकरोदिति पूर्वेणैवान्वयः । नासज्जतेत्युत्तरेण वा ॥ ५१ ॥ ५२ ॥ अर्चिषि भार्यायाम् ॥ ५३ ॥ ५४ ॥ ५५ ॥ सोमश्चासौ राजा च स इव भुवो वसु धनं गृह्णन्विसृजंश्चासौ सूर्यवत्

राज्ञः प्रतपनमाज्ञाकरणम् ॥ ५६ ॥ अग्निरिव दुर्धर्षः द्यौः स्वर्ग इव ॥ ५७ ॥ समुद्रो यथा गांभीर्येणैतावानिति न बुद्ध्यते तथाऽसावभिप्रायतो दुर्बोधः । अचलराण्मेरुरिव ॥ ५८ ॥ ५९ ॥ सर्वात्मा सर्वत्र संचारशक्तिः बलादिभिर्मातरिश्वेव भूतराट् श्रीरुद्रः ॥ ६० ॥ अजो ब्रह्मेव ॥ ६१ ॥ आत्मवत्त्वे जितेन्द्रियत्वे भक्त्यादिभिः परार्थोद्यमे चात्मनैव तुल्यो निरुपमः ॥६२॥ पुंभिः सत्पुरुषै रामः सीतापतिर्यथा सतां कर्णरंध्रेषु प्रविष्टः ॥ ६३ ॥ इति चतुर्थे टीकायां द्वाविंशतितमोऽध्यायः ॥ २२ ॥ त्रयोविंशे सभार्यस्य वने नित्यसमाधितः ॥ विमानमधिरुह्याथ वैकुंठगति-री ते ॥ १ ॥ प्रवयसं वृद्धं दृष्ट्वा तपोवनमगादिति तृतीयेनान्वयः । स्वीकृतोऽनुसर्गोऽन्नादिसर्गः पुरग्रामादिसर्गश्च वर्धतोऽशेषः स्वानुसर्गो येन ॥१॥ निष्पादित ईश्वरादेशः प्रजापालनादिर्येन।

क्षया धरित्रीव द्यौरिवाभीष्टदो नृणाम् ॥ ५७ ॥ वर्षति स्म यथाकामं पर्जन्य इव तर्पयन् ॥ समुद्र इव दुर्बोधः सत्त्वेनाचलराडिव ॥ ५८ ॥ धर्मराडिव शिक्षायामाश्चर्ये हिमवानिव ॥ कुबेर इव कोशाढ्यो गुप्तार्थो वरुणो यथा ॥ ५९ ॥ मातरिश्वेव सर्वात्मा बलेन सहसौजसा ॥ अविषह्यतया देवो भगवान्भूतराडिव ॥ ६० ॥ कंदर्प इव सौंदर्ये मनस्वी मृगराडिव ॥ वात्सल्ये मनुवन्नृणां प्रभुत्वे भगवानजः ॥ ६१ ॥ बृहस्पतिर्ब्रह्मवादे आत्मवत्त्वे स्वयं हरिः ॥ भक्त्या गोगुरुविप्रेषु विष्वक्सेनानुवर्तिषु ॥ ह्रिया प्रश्रयशीलाभ्यामात्मतुल्यः परोद्यमे ॥ ६२ ॥ कीर्त्योर्ध्वगीतया पुंभिस्त्रैलोक्ये तत्र तत्र ह ॥ प्रविष्टः कर्णरंध्रेषु स्त्रीणां रामः सतामिव ॥ ६३ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे पृथुचरिते द्वाविंशतितमोऽध्यायः ॥ २२ ॥ मैत्रेय उवाच ॥ दृष्ट्वात्मानं प्रवयसमेकदा वैन्य आत्मवान् ॥ आत्मना वर्धिताशेषस्वानुसर्गः प्रजापतिः ॥ १ ॥ जगतस्तस्थुषश्चापि वृत्तिदो धर्मभृत्सताम् ॥ निष्पादितेश्वरादेशो यदर्थमिह जज्ञिवान् ॥ २ ॥ आत्मजेष्वात्मजां न्यस्य विरहाद्रुदतीमिव ॥ प्रजासु विमनःस्वेकः सदारोऽगात्तपोवनम् ॥ ३ ॥ तत्राप्यदाभ्यनियमो वैखानससुसंमते ॥ आरब्ध उग्रतपसि यथा स्वविजये पुरा ॥ ४ ॥ कंदमूलफलाहारः शुष्कपर्णाशनः क्वचित् ॥ अब्भक्षः कतिचित्पक्षान्वायुभक्षस्ततः परम् ॥ ५ ॥ ग्रीष्मे पंचतपा वीरो वर्षास्वासारषाण्मुनिः ॥ आकंठमग्नः शिशिरे उदके स्थंडिलेशयः ॥ ६ ॥ तितिक्षुर्यतवाग्दांत ऊर्ध्वरेता जितानिलः ॥ आरिराधयिषुः कृष्णमचरत्तप उत्तमम् ॥ ७ ॥ तेन क्रमानुसिद्धेन ध्वस्तकर्माऽमलाशयः ॥ प्राणायामैः सन्निरुद्धषड्वर्गश्छिन्नबंधनः ॥ ८ ॥ सनत्कुमारो भगवान्यदाहाध्यात्मिकं परम् ॥ योगं तेनैव पुरुषमभजत्पुरुषर्षभः ॥ ९ ॥ भगवद्धर्मिणः साधोः श्रद्धया यततः सदा ॥ भक्तिर्भगवति ब्रह्मण्यनन्यविषयाऽभवत् ॥ १० ॥ तस्यानया भगवतः परिकर्मशुद्धस-

जज्ञिवान् जातः ॥२॥ आत्मजां पृथ्वीम् । विमनःसु चिंतातुरासु सदारः सभार्यः ॥३॥ अदाभ्या विघ्नैर्नाशयितुमशक्या नियमा यस्य वानप्रस्थानां सुसंमते उग्रे तपस्यारब्धः प्रवृत्तः । कर्तरि क्तः । यथा स्वस्य धरामंडलस्य विजये पूर्वं महता यत्नेन प्रवृत्तस्तथेति ॥४॥ उग्रं तपो दर्शयति । कंदमूलेति त्रिभिः । क्वचित्कदाचित् ॥५॥ चतुर्दिक्षु चत्वारोऽग्नय उपरि सूर्य इति पंचानां तपः संतापो यस्य स पंचतपाः । आसारं सहत इत्यासारषाट् । शिशिरर्तौ स्थंडिलेशयो भूमिशयनः सर्वदा ॥६॥७॥ तेन तपसा क्रमानुसिद्धेन शनैः प्राप्तेन ध्वस्तानि कर्माणि यस्यातोऽमल आशयो

॥२४॥२५॥२६॥ स्वापरभेददर्शने किं भवति तदाह । शोकहर्षेति । भावैरेव निमित्तभूतैर्मिथोभावान् घ्नंतं भावमीश्वरं पृथग्दृशस्तेन पश्यंति किं त्वहमेव हंता हतश्चेति मन्यंत इत्यर्थः ॥२७॥ विशुद्धं यथा भवति ॥ २८ ॥ २९ ॥ नातिकोविदा दृष्टमात्रमतयो न दीर्घदर्शनाः ॥ ३० ॥ न निर्गतानि दश दिनानि येषां तानन्यांश्च ॥ ३१ ॥ ३२ ॥ अस्यतो विध्यतः सतः । उत्सृज्य रणं त्यक्त्वा ॥ ३३ ॥ ३४ ॥ अन्यासक्तान्विमुखांश्चेति न हंसि न हिनत्सि ॥३५॥ क्षेमे निर्भयदेशे शूरैः संयुगादन्यत्र विकत्थनं प्रौढिवादो येषां तैः । ननु हरेर्बिभेमि शंभोश्चेति चेत्तत्राहुः ।

रात्र्यां व्यतीतायां कंस आहूय मंत्रिणः॥ तेभ्य आचष्ट तत्सर्वं यदुक्तं योगनिद्रया ॥ २९ ॥ आकर्ण्य भर्तुर्गदितं तमूचुर्देवशत्रवः ॥ देवान्प्रतिकृतामर्षा दैतेया नातिकोविदाः ॥ ३० ॥ एवं चेत्तर्हि भोजेंद्र पुरग्रामव्रजादिषु ॥ अनिर्दशान्निर्दशांश्च हनिष्यामोऽद्य वै शिशून् ॥ ३१ ॥ किमुद्यमैः करिष्यंति देवाः समरभीरवः ॥ नित्यमुद्विग्नमनसो ज्याघोषैर्धनुषस्तव ॥ ३२ ॥ अस्यतस्ते शरव्रातैर्हन्यमानाः समंततः ॥ जिजीविषव उत्सृज्य पलायनपरा ययुः ॥ ३३ ॥ केचित्प्रांजलयो दीना न्यस्तशस्त्रा दिवौकसः॥ मुक्तकच्छशिखाः केचिद्भीताः स्म इति वादिनः ॥ ३४ ॥ न त्वं विस्मृतशस्त्रास्त्रान्विरथान्भयसंवृतान्॥ हंस्यन्यासक्तविमुखान्भग्नचापानयुद्ध्यतः ॥ ३५ ॥ किं क्षेमशूरैर्विबुधैरसंयुगविकत्थनैः ॥ रहोजुषा किं हरिणा शंभुना वा वनौकसा ॥ ३६ ॥ किमिंद्रेणाल्पवीर्येण ब्रह्मणा वा तपस्यता ॥ तथापि देवाः सापत्न्यान्नोपेक्ष्या इति मन्महे ॥ ततस्तन्मूलखनने नियुंक्ष्वास्माननुव्रतान् ॥३७॥ यथाऽऽमयोऽङ्गे समुपेक्षितो नृभिर्न शक्यते रूढपदश्चिकित्सितुम् ॥ यथेंद्रियग्राम उपेक्षितस्तथा रिपुर्महान्बद्धबलो न चाल्यते ॥३८॥ मूलं हि विष्णुर्देवानां यत्र धर्मः सनातनः ॥ तस्य च ब्रह्मगोविप्रास्तपोयज्ञाः सदक्षिणाः ॥ ३९ ॥ तस्मात्सर्वात्मना राजन्ब्राह्मणान्ब्रह्मवादिनः ॥ तपस्विनो यज्ञशीलान्गाश्च हन्मो हविर्दुघाः ॥ ४० ॥ विप्रा गावश्च वेदाश्च तपः सत्यं दमः शमः ॥ श्रद्धा दया तितिक्षा च क्रतवश्च हरेस्तनूः ॥ ४१ ॥ स हि सर्वसुराध्यक्षो ह्यसुरद्विड् गुहाशयः ॥ तन्मूला देवताः सर्वाः सेश्वराः सचतुर्मुखाः ॥ अयं वै तद्वधोपायो यदृषीणां विहिंसनम् ॥ ४२ ॥ श्रीशुक उवाच ॥ एवं दुर्मंत्रिभिः कंसः सह संमंत्र्य दुर्मतिः ॥ ब्रह्महिंसां हितं मेने कालपाशावृतोऽसुरः ॥ ४३ ॥ संदिश्य साधुलोकस्य कदने कदनप्रियान् ॥ कामरूपधरान्दिक्षु दानवान्गृहमाविशत् ॥ ४४ ॥ ते वै रजःप्रकृतयस्तमसा मूढचेतसः ॥ सतां विद्वेषमाचेरुराराद‌ागतमृत्यवः ॥४५॥ आयुः श्रियं यशो धर्मं लोकानाशिष एव च ॥ हंति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः ॥४६॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे

रहोजुषेति सर्वस्याप्यंतःप्रविष्टेन क्वचिदपि बहिरदृष्टेनेत्यर्थः । पुरुषप्रवृत्तिरहितमिलावृतवनमोको यस्य तेन शंभुना वा ॥३६॥ यद्यप्युद्यमैर्देवा न किंचिदपि कर्तुं समर्थास्तथापि नीतिरनुसर्तव्येत्याहुः । तथापीति ॥ ३७ ॥ रूढपदो बद्धमूलः ॥ ३८ ॥ देवानां मूलं विष्णुः स च यत्र धर्मस्तत्रास्ते । धर्मस्य मूलं वेदादयः इति ॥ ३९ ॥ ४० ॥ ४१ ॥ किंच विप्रादयो हरेरेव तनवो यस्मात्तस्मादयमेवोपाय इत्याहुः । अयमिति ॥ ४२ ॥४३॥४४॥ आरात्समीपमागतो मृत्युर्येषां ते ॥४५॥ सतां विद्वेषो न मृत्युमात्रहेतुः किंतु बह्वनर्थकारीत्याह । आयुःश्रियमिति ॥४६॥

इति श्रीमद्भागवते महापुराणे दशमस्कंधे टीकायां चतुर्थोऽध्यायः ॥४॥ पंचमे जातकं नंदः सूनोः कृत्वा महोत्सवम् ॥ गत्वाऽथ मथुरां प्राप वसुदेवागमोत्सवम् ॥१॥ महामना उदारचित्तः ॥१॥२॥ नियुते द्वे लक्षे। सप्ततिलपर्वतांश्च प्रादात्। कथंभूतान्। रत्नौघैः रत्नसमूहैः शातकौंभांबरैः सुवर्णरसाक्तैरंबरैश्चावृतान् ॥ ३ ॥ द्रव्याणां गोहिरण्यादीनां मध्ये केषांचिद्दानैरेव शुद्धिर्यथा तथाऽन्नदानादियुक्तजातकर्मादिसंस्कारैरेव गर्भाणां शुद्धिरिति दर्शयितुं प्रतिनियतानि शोधकानि दृष्टांतत्वेनोदाहरति। कालेनेति। कालेन भूम्यादि। स्नानेन देहादि। शौचेनामेध्यलिप्तादि। संस्कारैर्गर्भादि। तपसा इंद्रियादि। इज्यया ब्राह्मणादि। दानैर्द्रव्याणि। संतुष्ट्या मनः। आत्मा आत्मविद्यया इति ॥४॥ सौमंगल्यगिरः स्वस्तिवाचका विप्रादयो बभूवुः। तत्र–सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः॥ वंदिनस्त्वमलप्रज्ञा प्रस्तावसदृशोक्तयः ॥ ५ ॥ संमृष्टानि संसिक्तानि च द्वाराण्यजिराण्यंगणानि गृहांतराणि गृहमध्यानि च यस्मिन्स तथा। चित्रध्वजेषु

पूर्वार्धे चतुर्थोऽध्यायः ॥४॥ श्रीशुक उवाच ॥ नंदस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः ॥ आहूय विप्रान्वेदज्ञान्स्नातः शुचिरलंकृतः ॥१॥ वाचयित्वा स्वस्त्ययनं जातकर्मात्मजस्य वै ॥ कारयामास विधिवत्पितृदेवार्चनं तथा ॥ २ ॥ धेनूनां नियुते प्रादाद्विप्रेभ्यः समलंकृते ॥ तिलाद्रीन्सप्तरत्नौघशातकौंभांबरावृतान् ॥ ३ ॥ कालेन स्नानशौचाभ्यां संस्कारैस्तपसेज्यया ॥ शुद्ध्यन्ति दानैः संतुष्ट्या द्रव्याण्यात्मात्मविद्यया ॥ ४ ॥ सौमंगल्यगिरो विप्राः सूतमागधवंदिनः ॥ गायकाश्च जगुर्नेदुर्भेर्यो दुंदुभयो मुहुः ॥५॥ व्रजः संमृष्टसंसिक्तद्वाराजिरगृहांतरः ॥ चित्रध्वजपताकास्रक्चैलपल्लवतोरणैः ॥६॥ गावो वृषा वत्सतरा हरिद्रातैलरूषिताः ॥ विचित्रधातुबर्हस्रग्वस्त्रकांचनमालिनः ॥७॥ महार्हवस्त्राभरणकंचुकोष्णीषभूषिताः ॥ गोपाः समाययू राजन्नानोपायनपाणयः ॥ ८ ॥ गोप्यश्चाकर्ण्य मुदिता यशोदायाः सुतोद्भवम् ॥ आत्मानं भूषयांचक्रुर्वस्त्राकल्पांजनादिभिः ॥ ९ ॥ नवकुंकुमकिंजल्कमुखपंकजभूतयः ॥ बलिभिस्त्वरितं जग्मुः पृथुश्रोण्यश्चलत्कुचः ॥ १० ॥ गोप्यः सुमृष्टमणिकुंडलनिष्ककंठ्यश्चित्रांबराः पथि शिखाच्युतमाल्यवर्षाः ॥ नंदालयं सवलया व्रजतीर्विरेजुर्व्यालोलकुण्डलपयोधरहारशोभाः ॥११॥ ता आशिषः प्रयुंजानाश्चिरं पाहीति बालके ॥ हरिद्राचूर्णतैलाद्भिः सिंचंत्यो जनमुज्जगुः॥ १२ ॥ अवाद्यन्त विचित्राणि वादित्राणि महोत्सवे ॥ कृष्णे विश्वेश्वरेऽनन्ते नंदस्य व्रजमागते ॥१३॥ गोपाः परस्परं हृष्टा दधिक्षीरघृतांबुभिः ॥ आसिंचंतो विलिंपंतो नवनीतैश्च चिक्षिपुः ॥१४॥ नंदो महामनास्तेभ्यो वासोऽलंकारगोधनम् ॥ सूतमागधवंदिभ्यो येऽन्ये विद्योपजीविनः ॥१५॥ तैस्तैः कामैरदीनात्मा यथोचितमपूजयत् ॥ विष्णोराराधनार्थाय स्वपुत्रस्योदयाय च ॥ १६ ॥ रोहिणी च

पताकानां स्रजश्च चैलपल्लवतोरणानि च तैर्भृतः ॥ ६ ॥ हरिद्रातैलै रूषिता लिप्ताः। विचित्रधातवश्च बर्हस्रजश्च वस्त्राणि च कांचनमालाश्चालंकारतया विद्यंते येषां ते तथाभूता गवादयो बभूवुरित्यर्थः ॥७॥८॥ आकल्पा अलंकाराः ॥९॥ नवकुंकुमकिंजल्कैर्मुखपंकजेषु भूतिः श्रीर्यासां ताः ॥१०॥ सुमृष्टान्युज्ज्वलितानि मणिमयानि कुंडलानि यासां ताः। निष्कानि पदकानि कंठेषु यासां ताश्च। शिखाभ्यश्च्युतानि माल्यवर्षाणि यासां ताः। नंदालयं व्रजतीर्व्रजंत्यः पथि विरेजुः। सवलयाः कंकणभूषिताः। व्यालोलैः कुंडलादिभिः शोभा यासां ताः ॥११॥ जनं सिंचंत्यः अजनमुज्जगुरिति वा ॥ १२ ॥ १३ ॥ १४ ॥ तेभ्यः प्रादात् ॥ १५ ॥ यथोचितमन्यानप्यपूजयत् ॥ १६ ॥ हरेर्निवासेन ये आत्मनि गुणाः सर्वप्रियत्वादयस्तै रमाया आक्रीडं विहारस्थानम्

॥१७॥१८॥ वार्षिक्यं प्रतिवर्षं देयम् ॥ १९ ॥ भ्रातरं सखायम् । तदवमोचनं तस्य नंदस्य वसतिस्थानम् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ पुनर्भवः पुनर्जात इव । तत्र हेतुगर्भं विशेषणं संसारचक्रे वर्तमान इति ॥२४॥ दुर्लभत्वमेवाह । नैकत्रेति । प्रियश्चासौ संवासश्च प्रियसंवासः । हे प्रियेति वा । स्रोतस ओघेन नीयमानानां प्लवंतीति प्लवास्तृणकाष्ठादयस्तेषां यथैकत्र स्थितिर्नास्ति तद्वत् ॥२५॥ कच्चिदिति । पशव्यादिरूपे तस्मिन्वने निर्दोषगोपयोदध्यादिप्रभृतगोपिकास्तन्यादिना पुत्रक्षेमविवक्षया पृच्छति । प्रसक्तधीः स्वात्मजयोरित्युक्तत्वात् ॥२६॥ भवद्भ्यामुपलालितः सन्कच्चिद्वर्तत इति शेषः ॥२७॥ पुत्रादर्शनक्लेशानाह । पुंस इति । सुहृदो बंधून्प्रत्यनुभावितः संपादितो यस्त्रिवर्गः स हि पुंसो विहितो युक्तः शास्त्रेण वा प्रोक्तो न स्वमात्रपर्यवसितः । अतस्तेषु क्लिश्य-

महाभागा नंदगोपाभिनंदिता ॥ व्यचरद्दिव्यवासःस्रक्कंठाभरणभूषिता ॥१७॥ तत आरभ्य नंदस्य व्रजः सर्वसमृद्धिमान् ॥ हरेर्निवासात्मगुणै रमाक्रीडमभून्नृप ॥ १८ ॥ गोपान्गोकुलरक्षायां निरूप्य मथुरां गतः ॥ नंदः कंसस्य वार्षिक्यं करं दातुं कुरूद्वह ॥ १९ ॥ वसुदेव उपश्रुत्य भ्रातरं नंदमागतम् ॥ ज्ञात्वा दत्तकरं राज्ञे ययौ तदवमोचनम् ॥ २० ॥ तं दृष्ट्वा सहसोत्थाय देहः प्राणमिवागतम् ॥ प्रीतः प्रियतमं दोर्भ्यां सस्वजे प्रेमविह्वलः ॥२१॥ पूजितः सुखमासीनः पृष्ट्वाऽनामयमादृतः ॥ प्रसक्तधीः स्वात्मजयोरिदमाह विशांपते ॥ २२ ॥ दिष्ट्या भ्रातः प्रवयस इदानीमप्रजस्य ते ॥ प्रजाशाया निवृत्तस्य प्रजा यत्समपद्यत ॥ २३ ॥ दिष्ट्या संसारचक्रेऽस्मिन्वर्तमानः पुनर्भवः ॥ उपलब्धो भवानद्य दुर्लभं प्रियदर्शनम् ॥ २४ ॥ नैकत्र प्रियसंवासः सुहृदां चित्रकर्मणाम् ॥ ओघेन व्यूह्यमानानां प्लवानां स्रोतसो यथा ॥२५॥ कच्चित्पशव्यं निरुजं भूर्यम्बुतृणवीरुधम् ॥ बृहद्वनं तदधुना यत्रास्से त्वं सुहृद्वृतः ॥२६॥ भ्रातर्मम सुतः कच्चिन्मात्रा सह भवद्व्रजे ॥ तातं भवंतं मन्वानो भवद्भ्यामुपलालितः ॥२७॥ पुंसस्त्रिवर्गो विहितः सुहृदो ह्यनुभावितः ॥ न तेषु क्लिश्यमानेषु त्रिवर्गोऽर्थाय कल्पते ॥२८॥ नंद उवाच ॥ अहो ते देवकीपुत्राः कंसेन बहवो हताः ॥ एकाऽवशिष्टाऽवरजा कन्या साऽपि दिवं गता ॥२९॥ नूनं ह्यदृष्टनिष्ठोऽयमदृष्टपरमो जनः ॥ अदृष्टमात्मनस्तत्त्वं यो वेद न स मुह्यति ॥३०॥ वसुदेव उवाच ॥ करो वै वार्षिको दत्तो राज्ञे दृष्टा वयं च वः ॥ नेह स्थेयं बहुतिथं संत्युत्पाताश्च गोकुले ॥ ३१ ॥ श्रीशुक उवाच ॥ इति नंदादयो गोपाः प्रोक्तास्ते शौरिणा ययुः ॥ अनोभिरनडुद्युक्तैस्तमनुज्ञाप्य गोकुलम् ॥३२॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे नंदवसुदेवसंगमो नाम पंचमोऽध्यायः ॥ ५ ॥ श्रीशुक उवाच ॥ नंदः पथि वचः शौरेर्न मृषेति विचिंतयन् ॥ हरिं जगाम शरणमुत्पातागमशंकितः ॥ १ ॥ कंसेन

मानेषु सुखाय न भवतीत्यर्थः ॥२८॥ नंदो वसुदेवं सांत्वयन्नाह । अहो इति ॥ २९ ॥ अदृष्टे एव निष्ठा समाप्तिर्यस्य सः । यदैव पुत्रादिसुखप्रदमदृष्टं हीयते तदैव ते पुत्रादयो न भवंतीत्यर्थः । अदृष्टपरमः तथा अदृष्टमेव परमं यस्य सः । यद्यपि पुत्रादयो वियुक्तास्तथापि तानदृष्टमेव पुनः संगमयतीत्यर्थः । एवमदृष्टमात्मनस्तत्त्वमव्यभिचारिकारणं सुखदुःखयोर्यो वेद स न मुह्यति । तस्मादिदानीं त्वया न दुःखं भावनीयं मृतानामपि वियुक्तानामपि च कालांतरे दर्शनयोगयोः संभवात् । अस्मदादिभिरपि कालांतरे तद्वियोगे सत्यपीति नंदस्य दैवी वागेषा भाविसूचिका ॥३०॥ तां बुद्ध्वा वसुदेवो दुःखं त्यक्त्वा नंदमाह । करो वै इति । वो युष्माभिः ॥३१॥३२॥ इति दशमे टीकायां पंचमोऽध्यायः ॥५॥ षष्ठे सख्युर्गिरा नंदो व्रजं गच्छन्मृतां पथि ॥ दृष्ट्वा तु राक्षसीं

तस्या मृत्युं श्रुत्वाऽथ विस्मितः ॥ १ ॥ १ ॥ २ ॥ कृष्णविषये शंकमानं राजानं प्रत्यविषये प्रवृत्ता सैव मरिष्यतीति सूचयन्नाह । न यत्रेति । यत्र श्रीकृष्णस्य श्रवणादीनि न संति तत्रैव तासां शक्तिः । साक्षात्तस्मिन्नेव सति का शंकेति भावः ॥३॥ योषित्वा वेपतो वरां नारीमिवात्मानं विधाय । ननु निर्लज्जा निर्विशंका च सती कथं परसद्मनि प्रविष्टाऽत आह । कामचारिणीति। नहि कामचारिणीष्विदं चित्रमित्यर्थः ॥४॥ तां वनितां पतिं द्रष्टुमागतामतिरूपवतीं श्रियमिव गोप्योऽमंसतेत्युत्तरश्लोकेनान्वयः । श्रीसाम्यार्थानि विशेषणानि । केशबंधव्यतिषक्तमल्लिकां धम्मिल्लसंसक्तमल्लिकाकुसुमाम् । बृहता नितंबेन स्तनाभ्यां चोभयत आक्रांतमिव कृच्छ्रं कृशं मध्यमुदरं यस्यास्ताम् । सुवाससं शोभने रमणीये वाससी यस्यास्ताम् । कंपितयोः कर्णभूषणयोस्त्विषोल्लसद्भिः कुंतलैर्मंडितमाननं यस्यास्ताम् ॥५॥ वल्गुस्मितापांगविसर्गवीक्षितैः वल्गु रम्यं स्मितं येषु ते तथाभूता अपांगविसर्गा येषु तैर्वीक्षितैर्व्रजौकसां मनो हरंतीम् । अतो गोपा हृतमनस्त्वेन तां न निवारितवंत इत्युक्तं भवति । गोप्यश्च श्रियमिव मत्वा तूष्णीमासन् । अतः केनाप्यनिवारिता सती प्रविवेशेति भावः ॥६॥ बालग्रहः पूतना असदंतकं बालं ददर्श । असतामंतकं दृष्ट्वा कथं न बिभेति

प्रहिता घोरा पूतना बालघातिनी ॥ शिशूंश्चचार निघ्नंती पुरग्रामव्रजादिषु ॥ २ ॥ न यत्र श्रवणादीनि रक्षोघ्नानि स्वकर्मसु ॥ कुर्वंति सात्वतां भर्तुर्यातुधान्यश्च तत्र हि ॥ ३ ॥ सा खेचर्येकदोपेत्य पूतना नंदगोकुलम् ॥ योषित्वा माययाऽऽत्मानं प्राविशत्कामचारिणी ॥ ४॥ तां केशबंधव्यतिषक्तमल्लिकां बृहन्नितंबस्तनकृच्छ्रमध्यमाम् ॥ सुवाससं कंपितकर्णभूषणत्विषोल्लसत्कुन्तलमंडिताननाम् ॥ ५ ॥ वल्गुस्मितापांगविसर्गवीक्षितैर्मनो हरंतीं वनितां व्रजौकसाम् ॥ अमंसतांभोजकरेण रूपिणीं गोप्यः श्रियं द्रष्टुमिवागतां पतिम् ॥ ६ ॥ बालग्रहस्तत्र विचिन्वती शिशून्यदृच्छया नंदगृहेऽसदंतकम् ॥ बालं प्रतिच्छन्ननिजोरुतेजसं ददर्श तल्पेऽग्निमिवाहितं भसि॥७॥ विबुध्य तां बालकमारिकाग्रहं चराचरात्मा स निमीलितेक्षणः ॥ अनंतमारोपयदंकमंतकं यथोरगं सुप्तमबुद्धिरज्जुधीः ॥ ८ ॥ तां तीक्ष्णचित्तामतिवामचेष्टितां वीक्ष्यांतरा कोशपरिच्छदासिवत् ॥ वरस्त्रियं तत्प्रभया च धर्षिते निरीक्षमाणे जननी ह्यतिष्ठताम् ॥ ९ ॥ तस्मिन्स्तनं दुर्जरवीर्यमुल्बणं घोरांकमादाय शिशोर्ददावथ ॥ गाढं कराभ्यां भगवान्प्रपीड्य तत्प्राणैः समं रोषसमन्वितोऽपिबत् ॥ १० ॥ सा मुंचमुं चालमिति प्रभाषिणी निष्पीड्यमानाऽखिलजीवमर्मणि ॥ विवृत्य नेत्रे चरणौ भुजौ मुहुः प्रस्विन्नगात्रा क्षिपती रुरोद ह ॥ ११ ॥ तस्याः स्वनेनातिगभीररंहसा साद्रिर्मही द्यौश्च चचाल सग्रहा ॥ रसा दिशश्च प्रतिनेदिरे जनाः पेतुः क्षितौ वज्रनिपात-

तत्राह । प्रतिच्छन्ननिजोरुतेजसं बालनाट्येन प्रतिच्छन्नं तिरोहितं निजमुरु तेजो येन तम् । कमिव । भसि भस्मन्याहितमग्निमिवेति ॥ ७ ॥ चराचरात्मत्वादेव तां विबुध्य निमीलितेक्षण आस । स्वयमनंतं दुष्टानामंतकं बालं मत्वा साऽङ्कमारोपयत् । यथोरगं सुप्तमबुद्धिश्चासौ रज्जुधीश्च सोऽज्ञानतो रज्जुबुद्ध्या गृह्णाति तद्वत् ॥८॥ ननु यशोदारोहिण्यौ तां कथं न न्यवारयेतां तत्राह । तामिति । वामं वल्गु जनन्या इव चेष्टितं यस्यास्तां वरस्त्रियं च सहसैवांतरा गृहमध्ये वीक्ष्य । अंतस्तैक्ष्ण्ये बहिर्मार्दवे च दृष्टांतः । कोशपरिच्छदासिवत् । मृदुचित्रचर्ममयः कोशः परिच्छद आवरणं यस्यासेः खड्गस्य तद्वत् । तत्प्रभया च धर्षितेऽभिभूते। अहमस्य जननीयं वेति मोहिते च सत्यौ जननी जनन्यौ निरीक्षमाणे एव केवलमतिष्ठतां न तु निवारितवत्यौ ॥ ९ ॥ तस्मिन्स्थाने दुर्जरं वीर्यं विषं यस्मिंस्तं स्तनं श्रीकृष्णमंकमादाय तस्मै शिशवे ददौ । अथानंतरमेव प्रपीड्य केवलं विषमपथ्यमिति मत्वेव तस्याः प्राणैः सहापिबत् ॥१०॥ चरणौ भुजौ च मुहुर्मुहुः क्षिपंती । प्रस्वि-

न्नानि स्वेदयुक्तानि गात्राणि यस्याः सा ॥ ११ ॥ रसाः रसातलानि च ॥१२॥ व्यादाय मुखं विवृत्य । निजरूपमास्थिता । मरणसमये कपटमयुक्तमिति भावः । वृत्रो वज्राहत इव ॥१३॥ पतन्नपि तस्या देहः षट्क्रोशमध्यवर्तिनो द्रुमांश्चूर्णीचकार ॥१४॥ ईषामात्रोग्रदंष्ट्रास्यं ईषा लांगलदंडस्तत्प्रमाणोग्रा दंष्ट्रा यस्मिंस्तत्तथाभूतमास्यं यस्मिंस्तत्तस्याः कलेवरं वीक्ष्य गोपा गोप्यश्च संतत्रसुः । संत्रासहेतुत्वेन पुनरष्टभिः पदैर्विशिनष्टि । गिरिकंदरवन्नासिके यस्मिंस्तत् । गिरेश्च्युतौ स्थूलोपलौ ताविव स्तनौ यस्मिंस्तत् । रौद्रं घोरम् । प्रकीर्णा अरुणा मूर्द्धजा यस्मिंस्तत् ॥१५॥ अंधकूपाविव गभीरे अक्षिणी यस्मिंस्तत् । पुलिनवदारोहौ जघने ताभ्यां भीषणम् । बद्धाः सेतव इव भुजौ ऊरू अंघ्री च यस्मिंस्तत् । शून्यतोयह्रद इवोदरं यस्मिंस्तत् ॥१६॥ पूर्वमेव यस्याः शब्देन भीताः पुनर्दर्शनेनातितत्रसुरित्याह । पूर्वं त्विति । तस्या निःस्वनितं शब्दस्तेन निर्भिन्नानि हृत्कर्णमस्तकानि येषां ते ॥१७॥१८॥१९॥ द्वादशांगेषु ललाटादिषु केशवादिद्वादशनामभिः

शंकया ॥ १२ ॥ निशाचरीत्थं व्यथितस्तना व्यसुर्व्यादाय कोशांश्चरणौ भुजावपि ॥ प्रसार्य गोष्ठे निजरूपमास्थिता वज्राहतो वृत्र इवापतन्नृप ॥ १३ ॥ पतमानोऽपि तद्देहस्त्रिगव्यूत्यंतरद्रुमान् ॥ चूर्णयामास राजेंद्र महदासीत्तदद्भुतम् ॥ १४ ॥ ईषामात्रोग्रदंष्ट्रास्यं गिरिकंदरनासिकम् ॥ गंडशैलस्तनं रौद्रं प्रकीर्णारुणमूर्धजम् ॥ १५ ॥ अंधकूपगभीराक्षं पुलिनारोहभीषणम् ॥ बद्धसेतुभुजोर्वंघ्रि शून्यतोयह्रदोदरम् ॥ १६ ॥ संतत्रसुः स्म तद्वीक्ष्य गोपा गोप्यः कलेवरम् ॥ पूर्वं तु तन्निःस्वनितभिन्नहृत्कर्णमस्तकाः ॥ १७ ॥ बालं च तस्या उरसि क्रीडंतमकुतोभयम् ॥ गोप्यस्तूर्णं समभ्येत्य जगृहुर्जातसंभ्रमाः ॥१८॥ यशोदारोहिणीभ्यां ताः समं बालस्य सर्वतः ॥ रक्षां विदधिरे सम्यग्गोपुच्छभ्रमणादिभिः ॥१९॥ गोमूत्रेण स्नापयित्वा पुनर्गोरजसाऽर्भकम् ॥ रक्षां चक्रुश्च शकृता द्वादशांगेषु नामभिः ॥२०॥ गोप्यः संस्पृष्टसलिला अंगेषु करयोः पृथक् ॥ न्यस्यात्मन्यथ बालस्य बीजन्यासमकुर्वत ॥ २१ ॥ अव्यादजोऽङ्घ्रि मणिमांस्तव जान्वथोरू यज्ञोऽच्युतः कटितटं जठरे हयास्यः ॥ हृत्केशवस्त्वदुर ईश इनस्तु कंठं विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कम् ॥२२॥ चक्र्यग्रतः सहगदो हरिरस्तु पश्चात्त्वत्पार्श्वयोर्धनुरसी मधुहाऽजनश्च ॥ कोणेषु शंख उरुगाय उपर्युपेंद्रस्तार्क्ष्यः क्षितौ हलधरः पुरुषः समंतात् ॥२३॥ इन्द्रियाणि हृषीकेशः प्राणान्नारायणोऽवतु ॥ श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु ॥२४॥ पृश्निगर्भस्तु ते बुद्धिमात्मानं भगवान्परः ॥ क्रीडंतं पातु गोविंदः शयानं पातु माधवः ॥ २५ ॥ व्रजंतमव्याद्वैकुंठ आसीनं त्वां श्रियः पतिः ॥ भुंजानं

॥२०॥ अनाचांता एव प्रथममतिसंभ्रमेणैवं रक्षां कृत्वा किंचिल्लब्धश्वासाः पुनस्तात्पर्येण बीजन्यासमकुर्वतेत्याह । गोप्य इति । संस्पृष्टसलिला आचांताः आत्मनि प्रथममंगेषु करयोश्च पृथक् अजाद्येकादशबीजानां मध्ये करशुद्धौ त्रीणि करयोः संधिषु चत्वारि तथा अंघ्र्यादावेकैकस्मिन्नंगे अजाद्येकैकं बीजं न्यस्य बालस्याप्यंगेषु तथैवाकुर्वत ॥ २१ ॥ अंघ्रि अंघ्री । जानु जानुनी । भुजं भुजौ । कं शिरः ॥२२॥ तथा दिक्षु रक्षामकुर्वन्नित्यादि । चक्र्यग्रत इति । चक्रसहितो हरिस्तवाग्रतोऽवतु । सहगदो गदासहितो हरिस्तव पश्चादवतु । त्वत्पार्श्वयोर्धनुर्धरो मधुहाऽसिधरोऽजनश्चैतावास्ताम् । शंखधर उरुगायश्चतुष्कोणेषु । क्षितावधस्तात् ॥ २३ ॥ एवं बही रक्षां कृत्वाऽन्तरंगमकुर्वन्नित्याह । इंद्रियाणीति ॥ २४ ॥ आत्मानमहंकारम् ॥ २५ ॥ वैकुंठो विष्णुः

॥२६॥२७॥ सन्न्यवेशयत् शाययामास ॥२८॥२९॥३०॥३१॥ विस्मयांतरमाह । नूनमिति। बत विस्मये। सांप्रतं स ऋषिस्तपःप्रभाववान् योगेशो ज्ञानी वा समपद्यत। यतः स एव दृष्ट इति ॥३२॥३३॥ विस्मयांतरमाह। दह्यमानस्येति । कृष्णेन निर्भुक्तोऽत एव सपद्याहतः पाप्मा यस्य ॥३४॥ प्रसंगात्कैमुत्यन्यायेन भक्तिवैभवमाह । पूतनेति ॥३५॥ श्रद्धया आस्तिक्येन । भक्त्या प्रेम्णा । रक्ताः स्निग्धाः । तन्मातर इति वत्साहरणलीलाभिप्रायेण बहुवचनम् । गोगोपिकास्तदा मातरोऽभवन्निति ॥३६॥३७॥३८॥३९॥४०॥४१॥४२॥४३॥ एतदार्भकमर्भकचरितम् । किं

यज्ञभुक्पातु सर्वग्रहभयंकरः ॥२६॥ डाकिन्यो यातुधान्यश्च कूष्मांडा येऽर्भकग्रहाः ॥ भूतप्रेतपिशाचाश्च यक्षरक्षोविनायकाः ॥२७॥ कोटरा रेवती ज्येष्ठा पूतना मातृकादयः ॥ उन्मादा ये ह्यपस्मारा देहप्राणेंद्रियद्रुहः ॥ २८ ॥ स्वप्नदृष्टा महोत्पाता वृद्धबालग्रहाश्च ये ॥ सर्वे नश्यंतु ते विष्णोर्नामग्रहणभीरवः ॥ २९ ॥ श्रीशुक उवाच ॥ इति प्रणयबद्धाभिर्गोपीभिः कृतरक्षणम् ॥ पाययित्वा स्तनं माता संन्यवेशयदात्मजम् ॥ ३० ॥ तावन्नंदादयो गोपा मथुराया व्रजं गताः ॥ विलोक्य पूतनादेहं बभूवुरतिविस्मिताः ॥ ३१ ॥ नूनं बतर्षिः संजातो योगेशो वा समास सः ॥ स एव दृष्टो ह्युत्पातो यदाहानकदुंदुभिः ॥ ३२ ॥ कलेवरं परशुभिश्छित्वा तत्ते व्रजौकसः ॥ दूरे क्षिप्त्वाऽवयवशो न्यदहन्काष्ठवेष्टितम् ॥३३॥ दह्यमानस्य देहस्य धूमश्चागुरुसौरभः ॥ उत्थितः कृष्णनिर्भुक्तसपद्याहतपाप्मनः ॥ ३४ ॥ पूतना लोकबालघ्नी राक्षसी रुधिराशना ॥ जिघांसयाऽपि हरये स्तनं दत्त्वाऽऽप सद्गतिम् ॥ ३५ ॥ किं पुनः श्रद्धया भक्त्या कृष्णाय परमात्मने ॥ यच्छन्प्रियतमं किं नु रक्तास्तन्मातरो यथा ॥ ३६ ॥ पद्भ्यां भक्तहृदिस्थाभ्यां वंद्याभ्यां लोकवंदितैः ॥ अंगं यस्याः समाक्रम्य भगवानपिबत्स्तनम् ॥३७॥ यातुधान्यपि सा स्वर्गमवाप जननी गतिम् ॥ कृष्णभुक्तस्तनक्षीरा किमु गावोऽनुमातरः ॥३८॥ पयांसि यासामपिबत्पुत्रस्नेहस्नुतान्यलम् ॥ भगवान्देवकीपुत्रः कैवल्याद्यखिलप्रदः ॥ ३९ ॥ तासामविरतं कृष्णे कुर्वंतीनां सुतेक्षणम् ॥ न पुनः कल्पते राजन्संसारोऽज्ञानसंभवः ॥४०॥ कटधूमस्य सौरभ्यमवघ्राय व्रजौकसः ॥ किमिदं कुत एवेति वदंतो व्रजमाययुः ॥ ४१ ॥ ते तत्र वर्णितं गोपैः पूतनागमनादिकम् ॥ श्रुत्वा तन्निधनं स्वस्ति शिशोश्चासन्सुविस्मिताः ॥ ४२ ॥ नंदः स्वपुत्रमादाय प्रेत्यागतमुदारधीः ॥ मूर्ध्न्युपाघ्राय परमां मु लेभेदं कुरूद्वह ॥४३॥ य एतत्पूतनामोक्षं कृष्णस्यार्भकमद्भुतम् ॥ शृणुयाच्छ्रद्धया मर्त्यो गोविन्दे लभते रतिम् ॥ ४४ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे षष्ठोऽध्यायः ॥६॥ राजोवाच ॥ येन येनावतारेण भगवान्हरिरीश्वरः ॥ करोति कर्णरम्याणि मनोज्ञानि च नः प्रभो ॥ १ ॥ यच्छृण्वतोऽपैत्यरतिर्वितृष्णा सत्त्वं च शुद्ध्यत्यचिरेण पुंसः ॥ भक्तिर्हरौ तत्पुरुषे च सख्यं तदेव हारं

तत् । पूतनामोक्षमिति ॥४४॥ अत्तुं दैत्यकुलानीशः पूतनायाः शिशुच्छलात् ॥ स्तन्यापानशनतः प्राणैः प्राणाहुतिमकल्पयत् ॥ इति श्रीमद्भागवते दशमे पूर्वार्धे टीकायां षष्ठोऽध्यायः ॥ ६ ॥ उत्क्षिपन् शकटं व्योम्नि तृणावर्तमधः क्षिपन् ॥ दर्शयन्विश्वमास्ये च कृष्णः क्रीडति सप्तमे ॥१॥ कृष्णार्भकसुधासिंधुसंप्लवानंदनिर्भरः ॥ भूयस्तदेव संप्रष्टुं राजाऽन्यदभिनंदति ॥२॥ येन येनेति ।

येन येन मत्स्याद्यवतारेणापि यानि यानि कर्माणि करोति तानि नः कर्णसुखावहानि मनःप्रीतिकराणि च भवंत्येव ॥१॥ तथापि तच्छृण्वतः पुंसः पुरुषमात्रस्यारतिर्मनोग्लानिस्तन्मूलभूता त्रिविधा तृष्णा चापगच्छति । तथा सत्त्वशुद्धिर्हरिभक्तिर्हरिदाससख्यानि च भवंति । तदेव हारं हरेश्चरितं मनोहरं वा वद। मन्यसे चेत् अनुग्रहं यदि करोषीति ॥२॥ अत्यौत्सुक्येन पुनर्विशिनष्टि। अथेति। अनुरुंधतोऽनुकुर्वतः ॥३॥ उत्थानं शिशोरङ्गपरिवर्तनं तत्र करणीये कौतुकाप्लवे उत्सवाभिषेके तथा तस्मिन्नेव दिने जन्मर्क्षस्यापि योगेऽतिमहोत्सवे समवेतयोषितां मिलितपुरंध्रीणां मध्ये वादित्रादिभिः शोभितमभिषेचनं सती यशोदा चकार ॥४॥ अन्नादिभिः सुपूजितैर्विप्रैः कृतमङ्गलम् । सञ्जातनिद्रे अक्षिणी यस्य तमशीशयच्छायितवती । शकटस्याधस्तात्प्रेंखे ॥५॥ उदक्षिपदूर्ध्वं चालितवान् ॥६॥ तदधःशयानस्य शिशोरल्पकश्चासौ प्रबालवन्मृदुश्च योंऽघ्रिस्तेन हतमनः शकटं व्यवर्तत विपरीतमपतत्। कथम्। विध्वस्तानि नानारसवंति कुप्यभाजनानि स्वर्णरजतातिरिक्तकांस्या-

वद मन्यसे चेत् ॥२॥ अथान्यदपि कृष्णस्य तोकाचरितमद्भुतम् ॥ मानुषं लोकमासाद्य तज्जातिमनुरुन्धतः ॥३॥ श्रीशुक उवाच ॥ कदाचिदौत्थानिककौतुकाप्लवे जन्मर्क्षयोगे समवेतयोषिताम् ॥ वादित्रगीतद्विजमन्त्रवाचकैश्चकार सूनोरभिषेचनं सती ॥४॥ नन्दस्य पत्नी कृतमज्जनादिकं विप्रैः कृतस्वस्त्ययनं सुपूजितैः ॥ अन्नाद्यवासःस्रगभीष्टधेनुभिः सञ्जातनिद्राक्षमशीशयच्छनैः ॥५॥ औत्थानिकौत्सुक्यमना मनस्विनी समागतान्पूजयती व्रजौकसः ॥ नैवाशृणोद्वै रुदितं सुतस्य सा रुदन्स्तनार्थी चरणावुदक्षिपत् ॥६॥ अधःशयानस्य शिशोरनोऽल्पकप्रवालमृद्वंघ्रिहतं व्यवर्तत ॥ विध्वस्तनानारसकुप्यभाजनं व्यत्यस्तचक्राक्षविभिन्नकूबरम् ॥ ७ ॥ दृष्ट्वा यशोदाप्रमुखा व्रजस्त्रिय औत्थानिके कर्मणि याः समागताः ॥ नन्दादयश्चाद्भुतदर्शनाकुलाः कथं स्वयं वै शकटं विपर्यगात् ॥८॥ "इति ब्रुवंतोऽतिविवादमोहिता जनाः समंतात्परिवव्रुरार्तवत् ॥" ऊचुरव्यवसितमतीन्गोपान्गोपीश्च बालकाः ॥ रुदताऽनेन पादेन क्षिप्तमेतन्न संशयः ॥९॥ न ते श्रद्दधिरे गोपा बालभाषितमित्युत ॥ अप्रमेयं बलं तस्य बालकस्य न ते विदुः ॥१०॥ रुदन्तं सुतमादाय यशोदा ग्रहशङ्किता ॥ कृतस्वस्त्ययनं विप्रैः सूक्तैः स्तनमपाययत् ॥११॥ पूर्ववत्स्थापितं गोपैर्बलिभिः सपरिच्छदम् ॥ विप्रा हुत्वाऽर्चयांचक्रुर्दध्यक्षतकुशांबुभिः ॥१२॥ येऽसूयानृतदम्भेर्ष्याहिंसामानविवर्जिताः ॥ न तेषां सत्यशीलानामाशिषो विफलाः कृताः ॥१३॥ इति बालकमादाय सामर्ग्यजुरुपाकृतैः ॥ जलैः पवित्रौषधिभिरभिषिच्य द्विजोत्तमैः ॥१४॥ वाचयित्वा स्वस्त्ययनं नन्दगोपः समाहितः ॥ हुत्वा चाग्निं द्विजातिभ्यः

दिमयानि यथा भवंति तथा चक्रे च अक्षश्च चक्राक्षाः व्यत्यस्ताश्चक्राक्षा यस्मिन् विभिन्नः कूबरो युगंधरो यस्य तच्च यथा भवति तथा व्यवर्ततेति ॥ ७ ॥ अद्भुतदर्शनेनाकुला बभूवुः । तदेवाह । कथमिति । विपर्यगाद्विपरीतमपतदिति ॥८॥९॥ न श्रद्दधिरे विश्वासं न जग्मुः । उत अपि । बालस्यैतन्न संभवति । एते च बालाः किं जानंतीति ॥१०॥ रक्षोघ्नैः सूक्तैः कृत्वा ॥११॥ भगवत्प्रभावानभिज्ञविप्रचेष्टितं विडंबयन्नाह । पूर्ववदित्यादिना । बलिभिः शक्तैः । यद्वा अष्टदिक्षु बलिभिः सहितं सपरिकरं यथापूर्वं स्थापितम्। विप्रा दध्यादिभिरर्चयामासुः। हुत्वा ग्रहादिहोमं विधाय ॥१२॥ असूया गुणे दोषाविष्करणम् । ईर्ष्या अक्षांतिः । तेषामाशिषः । कृतास्तैः प्रयुक्ताः ॥ १३ ॥ इत्येवमभिप्रेत्य सामर्ग्यजुर्भिरुपाकृतैः संस्कृतैः । पवित्रा औषधयो येषु तैः कृत्वा

द्विजोत्तमैः कर्तृभिरभिषिच्याभिषेकं कारयित्वा ॥१४॥ हुत्वा हावयित्वा ॥१५॥ गावो गाश्च प्रादात् । अन्वयुञ्जत आशिषो युयुजुः ॥१६॥ तास्तथैव बभूवुरित्यर्थः ॥१७॥ उन्क्षिप्य मृद्पादेन शकटं व्योम्नि लीलया ॥ तृणावर्तं पदाऽऽपीड्य भुव्यपातयदर्भकः ॥ आरोहमुत्सङ्गम् ॥ १८ ॥ तृणावर्तात्स्वमृत्युपरिहाराय कृष्णेनैवात्मन उत्सङ्गादुत्तार्य कृतं भारमजानत्युत्पातशंकया महापुरुषमादध्यौ । श्रीकृष्णोदरवर्तिनां भारेण पीडिता विस्मिता च सती । यद्वा । जगतां मध्ये कर्मसु आस बभूव । न तु जगदुदरं तं वेदेत्यर्थः ॥१९॥२०॥ ईरयन्निनादयन्नित्यर्थः ॥२१॥ यतो यत्र न्यस्तवती तस्मिन्स्थाने नापश्यत् ॥२२॥२३॥ खरपवनचक्रात्पांसुवर्षे सति ॥ २४ ॥ उपारतः पांसुवर्षस्य वेगो यस्मिंस्तथाभूते पवने सति तत्र तस्या रुदितमनु निशम्य गोप्यो

प्रादादन्नं महागुणम् ॥ १५ ॥ गावः सर्वगुणोपेता वासःस्रग्रुक्ममालिनीः ॥ आत्मजाभ्युदयार्थाय प्रादात्ते चान्वयुञ्जत ॥ १६ ॥ विप्रा मन्त्रविदो युक्तास्तैर्याः प्रोक्तास्तथाऽऽशिषः ॥ ता निष्फला भविष्यन्ति न कदाचिदपि स्फुटम् ॥१७॥ एकदाऽऽरोहमारूढं लालयन्ती सुतं सती ॥ गरिमाणं शिशोर्वोढुं न सेहे गिरिकूटवत् ॥१८॥ भूमौ निधाय तं गोपी विस्मिता भारपीडिता ॥ महापुरुषमादध्यौ जगतामास कर्मसु॥१९॥दैत्यो नाम्ना तृणावर्तः कंसभृत्यः प्रणोदितः ॥ चक्रवातस्वरूपेण जहारासीनमर्भकम् ॥२०॥ गोकुलं सर्वमावृण्वन्मुष्णंश्चक्षूंषि रेणुभिः ॥ ईरयन्सुमहाघोरशब्देन प्रदिशो दिशः ॥ २१ ॥ मुहूर्त्तमभवद्गोष्ठं रजसा तमसाऽऽवृतम् ॥ सुतं यशोदा नापश्यत्तस्मिन्न्यस्तवती यतः ॥ २२ ॥ नापश्यत्कश्चनात्मानं परं चापि विमोहितः ॥ तृणावर्तनिसृष्टाभिः शर्कराभिरुपद्रुतः ॥ २३ ॥ इति खरपवनचक्रपांसुवर्षे सुतपदवीमबला विलक्ष्य माता ॥ अतिकरुणमनुस्मरंत्यशोचद्भुवि पतिता मृतवत्सका यथा गौः ॥ २४ ॥ रुदितमनु निशम्य तत्र गोप्यो भृशमनुतप्तधियोऽश्रुपूर्णमुख्यः ॥ रुरुदुरनुपलभ्य नन्दसूनुं पवन उपारतपांसुवर्षवेगे ॥ २५ ॥ तृणावर्तः शांतरयो वात्यारूपधरो हरन् ॥ कृष्णं नभोगतो गन्तुं नाशक्नोद्भूरिभारभृत् ॥ २६ ॥ तमश्मानं मन्यमान आत्मनो गुरुमत्तया ॥ गले गृहीत उत्स्रष्टुं नाशक्नोदद्भुतार्भकम् ॥ २७ ॥ गलग्रहणनिश्चेष्टो दैत्यो निर्गतलोचनः ॥ अव्यक्तरावो न्यपतत्सहबालो व्यसुर्व्रजे ॥२८॥ तमन्तरिक्षतात्पतितं शिलायां विशीर्णसर्वावयवं करालम् ॥ पुरं यथा रुद्रशरेण विद्धं स्त्रियो रुदत्यो ददृशुः समेताः॥२९॥ प्रादाय मात्रे प्रतिहृत्य विस्मिताः कृष्णं च तस्योरसि लम्बमानम् ॥ तं स्वस्तिमन्तं पुरुषादनीतं विहायसा मृत्युमुखात्प्रमुक्तम् ॥ गोप्यश्च गोपाः किल नन्दमुख्या लब्ध्वा पुनः प्रापुरतीव मोदम् ॥ ३० ॥ अहो बतात्यद्भुतमेष रक्षसा बालो निवृत्तिं गमितोऽभ्यगात्पुनः ॥ हिंस्रः स्वपापेन विहिंसितः खलः

रुरुदुः ॥२५॥ वात्या चक्रवातस्तद्रूपधरः कृष्णं हरन् शांतरयः कथंचिन्नभोगतस्ततः परं गंतु नाशक्नोदित्यर्थः ॥ २६ ॥ गुरुमत्तयाऽतिगौरवेण तं तथा अश्मानमश्मवंतं पर्वतप्रायं मन्यमानस्तेनैवात्मनो गले गृहीतत्वात्तं त्यक्तुमिच्छन्नपि नाशक्नोदित्यर्थः ॥२७–२९॥ तस्योरसि लंबमानं कृष्णमादाय मात्रे प्रतिहृत्य समर्प्य विस्मिताश्च बभूवुरिति विहायसा गगनमार्गेण पुरुषादेन नीतं तथापि मृत्युमुखात्प्रमुक्तं पुनर्लब्ध्वा मोदं प्रापुरिति ॥३०॥ परस्परं हर्षकथामाहुः । अहो बतेति । निवृत्तिं गमितो मृत्युं प्रापितः । कोऽत्र विस्मयो युज्यत एवैतदिति तेष्वेव केचिदाहुः । हिंस्र

इति ॥ ३१ ॥ नोऽस्माभिः चीर्णं कृतम् । पूर्तं वापीकूपादिनिर्माणम् । इष्टं पंचयज्ञाग्निहोत्रादि । दत्तं दानम् । यद्यस्मात्तपआदेः प्रणयन्हर्षयन् ॥३२॥३३॥३४॥ तृणावर्तागमे दृष्टगौरवाशंकिनीं प्रसूम् ॥ बोधयन् दर्शयामास जृम्भमाणो मुखे जगत्॥ १ ॥ पीतप्रायस्य पीतः प्रायः स्तनो येन तस्य ॥३५॥ नगान्गिरींस्तद्दुहितृर्नदीः ॥३६॥३७॥ इति दशमे टीकायां सप्तमोऽध्यायः॥ ७ ॥ अष्टमे नामकर्मास्य बालक्रीडाकुतूहले॥ मृद्भक्षणाभियोगे च विश्वरूपं निरूप्यते ॥१॥ विश्वरूपादिबालस्य निशम्याशंकिनः पितुः॥ नामकृद्गर्गवाक्येन निजं तत्त्वमसूसुचत्॥२॥ ॥ १ ॥ २ ॥ ३ ॥ पूर्णश्चेत्कथं धनिनां गृहमागतस्तत्राह । महद्विचलनमिति। महतां स्वाश्रमादन्यत्र विचलनं न स्वार्थं किंतु गृहिणां मंगलाय। ननु तर्हि त एव महद्दर्शनार्थं किमिति नागच्छंति तत्राह । दीनचेतसां कृपणानां क्षणमपि गृहं त्यक्तुमशक्नुवतामित्यर्थः ॥४॥ त्वया बालयोर्नामकरणादि करणीयमिति वक्तुं तस्य ज्ञानातिशयमाह । ज्योतिषामयनमिति यदतींद्रियज्ञानसाधनं

साधुः समत्वेन भयाद्विमुच्यते ॥ ३१ ॥ किं नस्तपश्चीर्णमधोक्षजार्चनं पूर्तेष्टदत्तमुत भूतसौहृदम् ॥ यत्संपरेतः पुनरेव बालको दिष्ट्या स्वबंधून्प्रणयन्नुपस्थितः ॥ ३२ ॥ दृष्ट्वाऽद्भुतानि बहुशो नंदगोपो बृहद्वने ॥ वसुदेववचो भूयो मानयामास विस्मितः ॥३३॥ एकदाऽर्भकमादाय स्वांकमारोप्य भामिनी ॥ प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता ॥ ३४ ॥ पीतप्रायस्य जननी सा तस्य रुचिरस्मितम् ॥ मुखं लालयती राजन् जृम्भतो ददृशे इदम् ॥३५॥ खं रोदसी ज्योतिरनीकमाशाः सूर्येन्दुवह्निश्वसनांबुधींश्च ॥ द्वीपान्नगांस्तद्दुहितृर्वनानि भूतानि यानि स्थिरजंगमानि ॥ ३६ ॥ सा वीक्ष्य विश्वं सहसा राजन्संजातवेपथुः ॥ संमील्य मृगशावाक्षी नेत्रे आसीत्सुविस्मिता ॥ ३७ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे तृणावर्तमोक्षो नाम सप्तमोऽध्यायः ॥ ७ ॥ श्रीशुक उवाच ॥ गर्गः पुरोहितो राजन्यदूनां सुमहातपाः ॥ व्रजं जगाम नंदस्य वसुदेवप्रचोदितः ॥१॥ तं दृष्ट्वा परमप्रीतः प्रत्युत्थाय कृतांजलिः ॥ आनर्चाधोक्षजधिया प्रणिपातपुरःसरम् ॥२॥ सूपविष्टं कृतातिथ्यं गिरा सूनृतया मुनिम्॥ नन्दयित्वाऽब्रवीद्ब्रह्मन्पूर्णस्य करवाम किम् ॥ ३ ॥ महद्विचलनं नृणां गृहिणां दीनचेतसाम् ॥ निःश्रेयसाय भगवन्कल्पते नान्यथा क्वचित् ॥४॥ ज्योतिषामयनं साक्षाद्यत्तज्ज्ञानमतीन्द्रियम् ॥ प्रणीतं भवता येन पुमान्वेद परावरम् ॥ ५ ॥ त्वं हि ब्रह्मविदां श्रेष्ठः संस्कारान्कर्तुमर्हसि ॥ बालयोरनयोर्नृणां जन्मना ब्राह्मणो गुरुः ॥ ६ ॥ गर्ग उवाच ॥ यदूनामहमाचार्यः ख्यातश्च भुवि सर्वदा ॥ सुतं मया संस्कृतं ते मन्यते देवकीसुतम् ॥ ७ ॥ कंसः

ज्योतिषामयनं तत्प्रतिपादकं ज्योतिःशास्त्रमित्यर्थः । तत्साक्षाद्भगवता प्रणीतं येनान्योऽपि पुमान्परावरं परं कारणं पूर्वजन्मकृतं कर्म अवरं कार्यं तस्मिन् जन्मनि भावि फलं तद्वेद । उक्तं च जातके । यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः प्राप्तिम् । व्यंजयति शास्त्रमेतत्तमसि द्रव्याणि दीप इवेति ॥५॥ विवक्षितमाह । त्वं हीति । दैवज्ञो मंत्रविच्च त्वमतो नामकरणादिसंस्कारान्कर्तुमर्हसीत्यर्थः। नन्वेतद्गुरुणा करणीयमिति चेत्तत्राह नृणामिति॥६॥ अत्युत्साहिनं नंदं प्रति गुप्तमेतत्कार्यमित्यभिप्रायेण प्रत्याचक्षाण इवाह । यदूनामिति। भवतु तथापि त्वमत्रागत इति को विद्यादिति चेदत आह । ख्यातश्चेति । ततः किमत आह । सुतमिति। कंसो मन्यते मन्येत कल्पयेदित्यर्थः ॥७॥ ननु यदुकुमार इति कथंचिज्जानातु तत्र वसुदेवस्य सुतस्तत्रापि देवक्यां जात इति कुतो

जानीयात्तत्राह । पापमतिरित्यादि ॥८॥ किं मया हतया मंदेत्यादि देवकीकन्यावचः श्रुत्वा देवक्या अष्टमो गर्भो न स्त्री भवितुमर्हतीति नित्यं संचिंतयन्सामान्येन क्वचिदस्तीति ज्ञात्वा युवयोश्च सख्यं संचिंतयंस्त्वद्गृहे भवेदिति संभाव्य मत्संस्कारलिंगेन चागताशंकः आगता आशंका यस्य सः । अपि यदि हंता हनिष्यति तर्हि तत्तदा नो महाननयः स्यादिति ॥९॥ द्विजातिसंस्कारं द्विजातीनामवश्यं कर्तव्यं संस्कारमात्रं केवलं स्वस्तिवाचनपूर्वकं कुर्विति ॥१०॥११॥ यदूनामपृथग्भावात्कुतश्चिद्धेतोर्विप्रतिपद्यमानानां यदूनामपृथग्भावात्। भावो भावनं तस्मात्। अन्योन्यशिक्षया सर्वैकमत्यकरणादित्यर्थः । सम्यक्कर्षत्येकीकरोति संकर्षणमप्युशंति मन्यंते वक्ष्यंतीत्यर्थः । गर्भसंकर्षणं तु न प्रकाशयति ॥१२॥ अस्य तव पुत्रस्य । अतः कृष्ण इत्येकं नाम भविष्यति ॥१३॥ प्रागयमिति सामान्योक्त्या ऋषिरयं जन्मांतरगतं नाम कथयतीति नंदो मन्यते स्म । अत एनं वासुदेव इति संप्रचक्षत इति ॥१४॥ गुणानुरूपाणि ईश्वरः सर्वज्ञ इत्यादीनि । कर्मानुरूपाणि गोप-

पापमतिः सख्यं तव चानकदुन्दुभेः ॥ देवक्या अष्टमो गर्भो न स्त्री भवितुमर्हति ॥ ८ ॥ इति सञ्चिन्तयन् श्रुत्वा देवक्या दारिकावचः ॥ अपि हंताऽऽगताऽऽशंकस्तर्हि तन्नोऽनयो भवेत् ॥ ९ ॥ नन्द उवाच ॥ अलक्षितोऽस्मिन्नहसि मामकैरपि गोव्रजे ॥ कुरु द्विजातिसंस्कारं स्वस्तिवाचनपूर्वकम् ॥ १० ॥ श्रीशुक उवाच ॥ एवं संप्रार्थितो विप्रः स्वचिकीर्षितमेव तत् ॥ चकार नामकरणं गूढो रहसि बालयोः ॥ ११ ॥ गर्ग उवाच ॥ अयं हि रोहिणीपुत्रो रमयन्सुहृदो गुणैः ॥ आख्यास्यते राम इति बलाधिक्याद्बलं विदुः ॥ यदूनामपृथग्भावात्संकर्षणमुशंत्युत ॥ १२ ॥ आसन्वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुगं तनूः ॥ शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥ १३ ॥ प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः ॥ वासुदेव इति श्रीमानभिज्ञाः संप्रचक्षते ॥ १४ ॥ बहूनि सन्ति नामानि रूपाणि च सुतस्य ते ॥ गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः ॥१५॥ एष वः श्रेय आधास्यद्गोपगोकुलनन्दनः ॥ अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ ॥ १६ ॥ पुराऽनेन व्रजपते साधवो दस्युपीडिताः ॥ अराजके रक्ष्यमाणा जिग्युर्दस्यून्समेधिताः ॥ १७ ॥ य एतस्मिन्महाभागाः प्रीतिं कुर्वंति मानवाः ॥ नारयोऽभिभवंत्येतान्विष्णुपक्षानिवासुराः ॥१८॥ तस्मान्नन्दात्मजोऽयं ते नारायणसमो गुणैः ॥ श्रिया कीर्त्याऽनुभावेन गोपायस्व समाहितः ॥१९॥ इत्यात्मानं समादिश्य गर्गे च स्वगृहं गते ॥ नन्दः प्रमुदितो मेने आत्मानं पूर्णमाशिषाम् ॥ २० ॥ कालेन व्रजताऽल्पेन गोकुले रामकेशवौ ॥ जानुभ्यां सह पाणिभ्यां रिंगमाणौ विजह्रतुः ॥ २१ ॥ तावंघ्रियुग्ममनुकृष्य सरीसृपन्तौ घोषप्रघोषरुचिरं व्रजकर्दमेषु ॥ तन्नादहृष्टमनसावनुसृत्य लोकं मुग्धप्रभीतवदुपेयतुरंति मात्रोः ॥ २२ ॥ तन्मातरौ निजसुतौ घृणया

तिर्गोवर्धनोद्धरण इत्यादीनि । तानि सर्वाण्यहमपि नो वेद जना अपि नो विदुरिति ॥ १५ ॥ जातकफलमाह । एष इति । आधास्यदाधास्यति ॥१६॥ अनेन रक्ष्यमाणाः समेधिताश्च दस्यून्विजिग्युरिति ॥ १७ ॥१८॥१९॥ इति चात्मानं प्रति समादिश्य । आत्मानं कृष्णं वा । आशिषामाशीर्भिः ॥ २० ॥ बालक्रीडाचमत्कारैः कृष्णो रामेण संयुतः ॥ परमानंदमाधत्त व्रजे नंदयशोदयोः ॥ १ ॥ पूर्णत्वमेव दर्शयन्नाह । कालेनेति ॥ २१ ॥ अनुकृष्य पुनःपुनराकृष्य । सरीसृपंतावतिशयेन चलंतौ । कथम् । घोषाः कटिपादभूषणाः किंकिण्यस्तेषां रुचिरं यथा तथा तेषां घोषाणां नादेन हृष्टं मनो ययोस्तौ । लोकमितस्ततो गच्छंतं जनमनुसृत्य त्रिचतुराणि पदान्यनुगम्य मुग्धवत्प्रभीतवन्मात्रोरन्ति समीपे उपेयतुरुपजग्मतुः ॥२२॥ तदा च तन्मातरौ निजसुतौ

दोर्भ्यामुपगुह्य प्रमोदं ययतुः । कथंभूते । घृणया कृपया स्नुवंत्यौ पयःपूर्णपयोधरे सत्यौ । पंकेनांगरागेण च रुचिरौ । कथंभूतं मुखं निरीक्ष्य । मुग्धं मंदं स्मितं यस्मिन् अल्पा दशनाश्च यस्मिं-स्तच्च ॥२३॥ यर्ह्यंगनानां दर्शनीया कुमारलीला ययोस्तथाभूतौ जातौ तदांतर्व्रजे व्रजस्य मध्ये तदबला व्रजांगनास्तौ प्रेक्षमाणा विस्मृतगृहकृत्या हसंत्यो जहृषुर्हृष्टा बभूवुः। कथंभूतौ । ताभ्यां प्रगृहीतानि पुच्छानि येषां तैर्वत्सैरितस्ततोऽनुकृष्यमाणौ ॥२४॥ अतिचपलौ तौ शृंग्यादिभ्यो निषेद्धुं गृहोचितानि कर्माणि च कर्तुं यत्र यदा तज्जनन्यौ न शेकाते तदाऽलं मनसोऽनवस्थामापतु-रिति गृह्यसौख्यस्य पराकाष्ठा दर्शिता ॥२५॥२६॥२७॥२८॥ कृष्णचापलचौर्याणि सहैवाखिलसन्नतः ॥ प्रजल्पन्त्यः समागत्य गोप्यो गोप्यै मुदं ददुः ॥ असमयेऽदोहकाले । क्रोशे संजात-हासः । स्तेयं चौर्यार्जितं न तु दत्तं तत्रापि स्वादु नेतरत् दधि च पयश्चात्ति। किंच भोक्ष्यन्मर्कान्मर्कटान्प्रति विभज्य ददाति। तेषां मध्ये तृप्तत्वेन कोऽपि नात्ति चेत्तर्हि भांडं भिनत्ति। क्वचिद्द्रव्य-

स्नुवंत्यौ पंकांगरागरुचिरावुपगुह्य दोर्भ्याम् ॥ दत्त्वा स्तनं प्रपिबतोः स्म मुखं निरीक्ष्य मुग्धस्मिताल्पदशनं ययतुः प्रमोदम् ॥ २३ ॥ यर्ह्यंगनादर्श-नीयकुमारलीलावंतर्व्रजे तदबलाः प्रगृहीतपुच्छैः ॥ वत्सैरितस्तत उभावनुकृष्यमाणौ प्रेक्षंत्य उज्झितगृहा जहृषुर्हसंत्यः ॥ २४ ॥ शृंग्यग्निदंष्ट्र्यसिजल-द्विजकंटकेभ्यः क्रीडापरावतिचलौ स्वसुतौ निषेद्धुम् ॥ गृह्याणि कर्तुमपि यत्र न तज्जनन्यौ शेकात आपतुरलं मनसोऽनवस्थाम् ॥ २५॥ कालेना-ल्पेन राजर्षे रामः कृष्णश्च गोकुले ॥ अधृष्टजानुभिः पद्भिर्विचक्रमतुरंजसा ॥ २६ ॥ ततस्तु भगवान्कृष्णो वयस्यैर्व्रजबालकैः ॥ सहरामो व्रजस्त्रीणां चिक्रीडे जनयन्मुदम् ॥ २७ ॥ कृष्णस्य गोप्यो रुचिरं वीक्ष्य कौमारचापलम् ॥ शृण्वत्याः किल तन्मातुरिति होचुः समागताः ॥ २८ ॥ वत्सा-न्मुंचन्क्वचिदसमये क्रोशसंजातहासः स्तेयं स्वाद्वत्त्यथ दधिपयः कल्पितैः स्तेययोगैः ॥ मर्कान्भोक्ष्यन्विभजति स चेन्नात्ति भांडं भिनत्ति द्रव्यालाभे स गृहकुपितो यात्युपक्रोश्य तोकान् ॥ २९ ॥ हस्ताग्राह्ये रचयति विधिं पीठकोलूखलाद्यैश्छिद्रं ह्यन्तर्निहितवयुनः शिक्यभांडेषु तद्वित् ॥ ध्वांतागारे धृतमणिगणं स्वांगमर्थप्रदीपं काले गोप्यो यर्हि गृहकृत्येषु सुव्यग्रचित्ताः ॥३०॥ एवं धाष्ट्र्यान्युशति कुरुते मेहनादीनि वास्तौ स्तेयोपायैर्विरचितकृतिः सुप्रतीको यथास्ते ॥ इत्थं स्त्रीभिः सभयनयनश्रीमुखालोकिनीभिर्व्याख्यातार्था प्रहसितमुखी न ह्युपालब्धुमैच्छत् ॥३१॥ एकदा क्रीडमानास्ते रामाद्या गोपदारकाः ॥ कृष्णो मृदं भक्षितवानिति मात्रे न्यवेदयन् ॥ ३२॥ सा गृहीत्वा करे कृष्णमुपालभ्य हितैषिणी ॥ यशोदा भयसंभ्रांतप्रेक्षणाक्षमभाषत

स्यालाभे सति स गृहान् धक्ष्यामीति कुपितो याति । यद्वा सगृहा गृहिणस्तेभ्यः कुपितस्तेषां तोकान्पर्यंकादिषु सुप्तानुपक्रोश्य रोदयित्वा यातीति ॥२९॥ कल्पितैः स्तेययोगैरित्युक्तं तत्प्रपंचयति । हस्ताग्राह्य इति । तुङ्गशिक्यस्थभांडेष्वंतर्निहिते दध्यादौ वयुनं ज्ञानं यस्य स छिद्रं रचयति । तद्विच्छिद्ररचनादिवित् । ध्वांतयुक्ते गृहे स्वांगमेवार्थप्रदीपं रचयति विशेषतो धृतमणिगणम् । यर्हि यस्मिन्काले ॥३०॥ रेरे चोरेत्याक्षिप्तः सन्नुशति जल्पति त्वमेव चोरोऽहं गृहस्वामीत्यादीनि धाष्ट्र्यानि प्रागल्भ्यानि। अथवा उशति हे कमनीये यशोदे। यद्वा उशति वास्तौ स्वर्चिते गृहे मेहना-दीनि पुरीषोत्सर्गादीनि कुरुते। एवं स्तेयोपायैर्विरचिता कृतिः कर्म येन सः त्वत्समीपे सुप्रतीकः साधुरिवास्ते। सभये नयने यस्मिंस्तच्च तच्छ्रीयुक्तं मुखं च तदालोकिनीभिर्व्याख्यातार्था प्रख्यापितजन्म-फला तत्तत्कर्मफला वा उपालब्धुमाक्षेप्तुं नैच्छत् ॥३१॥ कदाचिदपराधांतरे उपालभत तदा तु महदाश्चर्यमभूदिति कथयन्नाह । एकदेति ॥ ३२॥ उपालभ्य निर्भर्त्स्य । भयेन संभ्रांतप्रेक्षणे चप-

लनिरीक्षणे अक्षिणी यस्य तम् ॥३३॥ अदांतात्मन् चपलगात्र । रह एकांते ॥३४॥ नाहं भक्षितवानिति । नहि बाह्यं किंचिन्मया भक्ष्यते । मत्कुक्षावादावेव सर्वमस्तीति भावः । समक्षं प्रत्यक्षम् ॥३५॥ व्यादेहि मुखं प्रसारयेति । व्यादत्त प्रसारितवान् ॥३६॥ तत्र तस्मिन्मुखे विश्वं ददृशे ददर्श । तत्प्रपंचयति । जगज्जंगमं स्थास्नु स्थावरं खमंतरिक्षलोकं साद्रिद्वीपाब्धिगोलं पर्वतद्वीपसमुद्रसहितं भूगोलं भूर्लोकं वायुः प्रवाहः अग्निर्वैद्युतः इंदुश्च तारकाश्च तत्सहितम् ॥३७॥ ज्योतिश्चक्रं स्वर्लोकं वैकारिकाणि देवाः मन इति वैकारिकशब्देन गृहीतमपि देववैलक्षण्यात्पुनरुक्तम् । इन्द्रियाणि च तैजसानि मात्रास्तामसाः शब्दादयः ॥३८॥ एवमेतद्विचित्रं विश्वं सहैकदैव वीक्ष्य विचित्रतामाह । जीवश्च गुणक्षोभकः कालश्च परिणामहेतुः स्वभावश्च जन्महेतुः कर्म च तत्संस्कार आशयश्च एतैर्लिंगानां चराचरशरीराणां भेदो यस्मिंस्तत् । तत्र व्रजं च सहात्मानं स्वसहितं क्वचिद्वीक्ष्य सूनोस्तनावल्पे विदारिते आस्ये शंकामवाप ॥३९॥ तमेवाह । किं स्वप्न इति । परितो विलोक्याह । नायं स्वप्नः । तर्हि किं देवस्य हरेर्माया । तथा चेदन्ये किं न पश्यन्ति । तर्हि किंवा मदीय एव कश्चिद् बुद्धिमोहो विपर्यासो दर्पणे मुखवत् । एवं तर्ह्ययं कृष्णोऽपि कथमंतः प्रतीयते अंतर्बहिश्चैकरूपेण च कथं जगत्प्रतीयते । तथा सति बिंबप्रतिबिंबयोरिव परस्परं वैपरीत्येन प्रतीतिः स्यादित्याशंक्यान्यथा वितर्कयति । अथो इति । अथवा ममामुष्यार्भकस्यापि सतो यः कश्चनाचिंत्य आत्मयोगः स्वीयमैश्वर्यम् । औत्पत्तिकः स्वाभाविकः ॥ ४० ॥ चरमं पक्षमाश्रित्यायमीश्वर इति निश्चित्याह । अथो इति । चेतश्चित्तम् । चित्तादिभिर्न वितर्कगोचरम् । जगद्यदाश्रयं यदधिष्ठानम् । येन करणाधिष्ठात्रा । यतो बुद्धिवृत्त्यभिव्यक्तात् । नन्विदमवितर्क्यं भवतु तत्पदं कीदृगत आह । सुदुर्विभाव्यमिति । इदमत्यंतमचिंत्यमित्यर्थः ॥४१॥ एवं प्रपंचप्रतीत्योन्नीतं तत्त्वं पुनर्जीवसंसृतिहेतुमायाश्रयत्वेनोन्नयंत्याह । अहमिति । यशोदा नामाऽहमसौ मम पतिः । अमुष्य व्रजेश्वरस्याखिलवित्ताधिष्ठात्र्यहं सती जाया । एष कृष्णो मे सुतः । गोप्यादयश्च मदीया इतीत्थं कुमतिर्यन्मायया स एष मे शरणमिति ॥४२॥ वैष्णवीं स्वीयाम् ॥४३॥ प्रवृद्धेन स्नेहेन कलिलं व्याप्तं हृदयं यस्याः सा पुरेवासीत् ॥४४॥ मायाबलोद्रेकमाह । त्रय्येति । त्रय्या कर्मकांडरूपया इंद्रादि-

॥३३॥ कस्मान्मृदमदांतात्मन्भवान्भक्षितवान्रहः ॥ वदंति तावका ह्येते कुमारास्तेऽग्रजोऽप्ययम् ॥३४॥ नाहं भक्षितवानंब सर्वे मिथ्याभिशंसिनः ॥ यदि सत्यगिरस्तर्हि समक्षं पश्य मे मुखम् ॥३५॥ यद्येवं तर्हि व्यादेहीत्युक्तः स भगवान्हरिः ॥ व्यादत्ताव्याहतैश्वर्यः क्रीडामनुजबालकः ॥ ३६ ॥ सा तत्र ददृशे विश्वं जगत्स्थास्नु च खं दिशः ॥ साद्रिद्वीपाब्धिभूगोलं सवाय्वग्नींदुतारकम् ॥३७॥ ज्योतिश्चक्रं जलं तेजो नभस्वान्वियदेव च ॥ वैकारिकाणींद्रियाणि मनोमात्रा गुणास्त्रयः ॥ ३८ ॥ एतद्विचित्रं सहजीवकालस्वभावकर्माशयलिंगभेदम् ॥ सूनोस्तनौ वीक्ष्य विदारितास्ये व्रजं सहात्मानमवाप शंकाम् ॥३९॥ किं स्वप्न एतदुत देवमाया किंवा मदीयो बत बुद्धिमोहः ॥ अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः ॥४०॥ अथो यथावन्न वितर्कगोचरं चेतो मनः कर्मवचोभिरंजसा ॥ यदाश्रयं येन यतः प्रतीयते सुदुर्विभाव्यं प्रणताऽस्मि तत्पदम् ॥४१॥ अहं ममासौ पतिरेष मे सुतो व्रजेश्वरस्याखिलवित्तपा सती ॥ गोप्यश्च गोपाः सह गोधनाश्च मे यन्माययेत्थं कुमतिः स मे गतिः ॥ ४२ ॥ इत्थं विदिततत्त्वायां गोपिकायां स ईश्वरः ॥ वैष्णवीं व्यतनोन्मायां पुत्रस्नेहमयीं विभुः ॥४३॥ सद्यो नष्टस्मृतिर्गोपी साऽऽरोप्यारोहमात्मजम् ॥ प्रवृद्धस्नेहकलिलहृदयाऽऽसीद्यथा पुरा ॥ ४४ ॥ त्रय्या चोपनिषद्भिश्च सांख्ययोगैश्च सात्त्वतैः ॥ उपगीयमानमाहात्म्यं हरिं साऽमन्यतात्मजम् ॥ ४५ ॥

रूपेण । उपनिषद्भिर्ब्रह्मेति । सांख्यैः पुरुष इति । योगैः परमात्मेति सात्वतैर्भगवानित्युपगीयमानं माहात्म्यं यस्य तम् ॥ ४५ ॥ अतिविस्मयेन पृच्छति । नंद इति । महोदयं महानुदय उद्भवो यस्य तत् ॥४६॥ ययोः प्रसन्नोऽवतीर्णस्तौ पितरावपि यं नान्वविंदेतां न प्राप्नुताम् । कृष्णस्योदारं महदर्भकेहितं बाललीलाम् । यच्च कवयो गायंति तद्योऽविंदत्स किं श्रेयोऽकरोदिति ॥४७॥ ब्रह्मण आदेशान्गोपालनादिलक्षणान् ॥४८॥४९॥ स एवेह द्रोणो जज्ञे। स च नंद इति ख्यातः। सा च धरा यशोदाऽभवत् ॥५०॥ गोपगोपीनामपि वस्तुस्वभावादस्त्येव भक्तिस्तयोः पुनर्नितरा- मिति ॥५१॥ स्वलीलया पुत्रभावानुकारिण्या ॥५२॥ इति दशमे पूर्वार्धे टीकायामष्टमोऽध्यायः ॥८॥ नवमे पय उत्सिक्ते मत्वा गोप्यथ तत्कृतम् ॥ विलोक्य भांडभंगादि कृष्णं दाम्ना बबंध

राजोवाच ॥ नंदः किमकरोद्ब्रह्मन् श्रेय एवं महोदयम् ॥ यशोदा च महाभागा पपौ यस्याः स्तनं हरिः ॥ ४६ ॥ पितरौ नान्वविंदेतां कृष्णोदारार्भ- केहितम् ॥ गायंत्यद्यापि कवयो यल्लोकशमलापहम् ॥४७॥ श्रीशुक उवाच ॥ द्रोणो वसूनां प्रवरो धरया सह भार्यया॥ करिष्यमाण आदेशान्ब्रह्म- णस्तमुवाच ह ॥ ४८ ॥ जातयोर्नौ महादेवे भुवि विश्वेश्वरे हरौ ॥ भक्तिः स्यात्परमा लोके ययाऽञ्जो दुर्गतिं तरेत् ॥ ४९ ॥ अस्त्वित्युक्तः स भगवान्व्रजे द्रोणो महायशाः ॥ जज्ञे नंद इति ख्यातो यशोदा सा धराऽभवत् ॥५०॥ ततो भक्तिर्भगवति पुत्रीभूते जनार्दने ॥ दंपत्योर्नितरामासी- द्गोपगोपीषु भारत ॥ ५१ ॥ कृष्णो ब्रह्मण आदेशं सत्यं कर्तुं व्रजे विभुः ॥ सहरामो वसंश्चक्रे तेषां प्रीतिं स्वलीलया ॥ ५२ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे विश्वरूपदर्शनेऽष्टमोऽध्यायः ॥ ८ ॥ श्रीशुक उवाच ॥ एकदा गृहदासीषु यशोदा नंदगेहिनी ॥ कर्मांतरनियुक्तासु निर्ममंथ स्वयं दधि ॥ १ ॥ यानि यानीह गीतानि तद्बालचरितानि च ॥ दधिनिर्मंथने काले स्मरंती तान्यगायत ॥२॥ क्षौमं वासः पृथुकटितटे बिभ्रती सूत्रनद्धं पुत्रस्नेहस्नुतकुचयुगं जातकम्पं च सुभ्रूः॥ रज्ज्वाकर्षश्रमभुजचलत्कंकणौ कुंडले च स्विन्नं वक्त्रं कबरविगलन्मालती निर्ममंथ ॥ ३ ॥ तां स्तन्यकाम आसाद्य मथ्नंतीं जननीं हरिः ॥ गृहीत्वा दधिमंथानं न्यषेधत्प्रीतिमावहन् ॥ ४ ॥ तमंकमारूढमपाययत्स्तनं स्नेहस्नुतं सस्मितमी- क्षती मुखम् ॥ अतृप्तमुत्सृज्य जवेन सा यायावुत्सिच्यमाने पयसि त्वधिश्रिते ॥ ५ ॥ संजातकोपः स्फुरितारुणाधरं संदश्य दद्भिर्दधिमंथभाजनम् ॥ भित्त्वा मृषाश्रुर्दृषदश्मना रहो जघास हैयंगवमंतरं गतः ॥ ६ ॥ उत्तार्य गोपी सुशृतं पयः पुनः प्रविश्य संदृश्य च दध्यमत्रकम् ॥ भग्नं विलोक्य स्वसुतस्य कर्म तज्जहास तं चापि न तत्र पश्यती ॥ ७ ॥ उलूखलांघ्रेरुपरि व्यवस्थितं मर्काय कामं ददतं शिचि स्थितम् ॥ हैयंगवं चौर्यविशंकिते-

तम् ॥ १ ॥ तनूदराश्रितं विश्वं दृष्ट्वा विस्मितचेतसः ॥ बंधनद्व्यंगुलापूर्त्या पूर्णतामन्वदर्शयत् ॥२॥ स्वयं दधि निर्ममंथ ॥१॥ तदा चागायतेति चकारान्वयः ॥ २ ॥ सूत्रनद्धं कांचीबद्धम् । रज्ज्वोराकर्षेण श्रमो ययोस्तयोर्भुजयोश्चलंतौ कंकणौ च । कबराद्विगलंत्यो मालत्यो यस्याः सा ॥ ३ ॥ ४ ॥ अधिश्रिते चुल्लीमारोपिते उत्सिच्यमाने अतितापेनोद्रिच्यमाने ॥५॥ दृषदश्मना शिलापुत्रेण । अंतरं गृहमध्यं गतः रह एकांते नवनीतमभक्षयत् ॥६॥ सुशृतं सुतप्तम् । दधिमंथनस्थानं प्रविश्य भिन्नं संदृश्य दृष्ट्वा ॥७॥ उलूखलांघ्रेः परिवर्तितस्योलूखलस्योपरि। शिचि शिक्ये।

चौर्येण विशंकितं चंचलमीक्षणं यस्य ते सुतम् ॥८॥ तपसा ऐकाग्र्येणेरितं तदाकारतां नीतमत एव क्षमं योग्यं प्रवेष्टुं योगीनां मनोऽपि यं नाप तम् । अथवा अन्वधावत्केवलं न त्वाप । यतो योगिनां मनोऽपि यं प्रवेष्टुं न क्षममिति ॥९॥ अन्वंचमाना एवं कृष्णमनुगच्छंती । बृहत्योश्चलंत्योः श्रोण्योर्भारेणाक्रांता स्तब्धा गतिर्यस्याः सा । विस्रंसितात्केशबंधाच्च्युतैः प्रसूनैरनुगतिरनुगमनं यस्याः सा । यद्वा । जवेन कंपितात्केशबंधात्पुरः पतितानि प्रसूनान्यनु पश्चाद्गतिर्यस्याः सा । परामृशद्धृतवती ॥ १० ॥ अंजन्मषिणी अंजंती सर्वतः प्रसरंती मषी ययोस्ते अक्षिणी स्वपाणिना कषंतं संमर्दयंतम् । भिषयंती ह्रस्वश्छांदसः । भीषयंती भयमुत्पादयंती अवागुरदभर्त्सयत् ॥ ११ ॥ इयेष ऐच्छत् । अतद्वीर्यकोविदा तत्प्रभावानभिज्ञा ॥ १२ ॥ अकोविदत्वमाह । न चांतरिति पंचभिः । बंधनं हि बहिःपरिवृतेन दाम्ना अंतरावृतस्य भवति । तथा च पूर्वापरविभागवतो वस्तुतः पूर्वतो दाम धृत्वा परितः परिवेष्टनेन भवति । नत्वेतदस्तीत्याह । न चांतरिति । किंच ।

क्षणं निरीक्ष्य पश्चात्सुतमागमच्छनैः ॥८॥ तामात्तयष्टिं प्रसमीक्ष्य सत्वरस्ततोऽवरुह्यापससार भीतवत् ॥ गोप्यन्वधावन्न यमाप योगिनां क्षमं प्रवेष्टुं तपसेरितं मनः ॥९॥ अन्वंचमाना जननी बृहच्चलच्छ्रोणीभराक्रांतगतिः सुमध्यमा ॥ जवेन विस्रंसितकेशबंधनच्युतप्रसूनानुगतिः परामृशत् ॥१०॥ कृतागसं तं प्ररुदंतमक्षिणी कषंतमंजन्मषिणी स्वपाणिना ॥ उद्वीक्षमानं भयविह्वलेक्षणं हस्ते गृहीत्वा भिषयंत्यवागुरत् ॥ ११ ॥ त्यक्त्वा यष्टिं सुतं भीतं विज्ञायार्भकवत्सला ॥ इयेष किल तं बद्धुं दाम्नाऽतद्वीर्यकोविदा ॥१२॥ न चांतर्न बहिर्यस्य न पूर्वं नापि चापरम् ॥ पूर्वापरं बहिश्चांतर्जगतो यो जगच्च यः ॥१३॥ तं मत्वाऽऽत्मजमव्यक्तं मर्त्यलिंगमधोक्षजम् ॥ गोपिकोलूखले दाम्ना बबंध प्राकृतं यथा ॥ १४ ॥ तद्दामबद्ध्यमानस्य स्वार्भकस्य कृतागसः ॥ द्व्यंगुलोनमभूत्तेन संदधेऽन्यच्च गोपिका ॥१५॥ यदासीत्तदपि न्यूनं तेनान्यदपि संदधे ॥ तदपि द्व्यंगुलं न्यूनं यद्यदादत्त बन्धनम् ॥ १६ ॥ एवं स्वगेहदामानि यशोदा संदधत्यपि ॥ गोपीनां सुस्मयंतीनां स्मयंती विस्मिताऽभवत् ॥१७॥ स्वमातुः स्विन्नगात्राया विस्रस्तकबरस्रजः ॥ दृष्ट्वा परिश्रमं कृष्णः कृपयाऽऽसीत्स्वबंधने ॥ १८ ॥ एवं संदर्शिता ह्यंग हरिणा भृत्यवश्यता ॥ स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे ॥ १९ ॥ नेमं विरिंचो न भवो न श्रीरप्यंगसंश्रया ॥ प्रसादं लेभिरे गोपी यत्तत्प्राप विमुक्तिदात् ॥ २० ॥ नायं सुखापो भगवान्देहिनां गोपिकासुतः ॥ ज्ञानिनां चात्मभूतानां तथा भक्तिमतामिह ॥२१॥ कृष्णस्तु गृहकृत्येषु व्यग्रायां मातरि प्रभुः॥ अद्राक्षीदर्जुनौ पूर्वं गुह्यकौ धन-

व्यापकेन व्याप्यस्य बंधो भवति तच्च विपरीतमित्याह । पूर्वापरमिति । किंच तद्व्यतिरिक्तस्य चाभावान्न बंध इत्याह । जगच्च य इति ॥ १३ ॥ तं मर्त्यलिंगमधोक्षजमात्मजं मत्वा बबंधेति ॥ १४ ॥ द्व्यङ्गुलोनं द्वाभ्यामंगुलाभ्यामूनमपूर्णम् ॥ १५ ॥ १६ ॥ स्मितं कुर्वंतीनां मध्ये स्वयमपि हसंती विस्मयमाप ॥ १७ ॥ १८ ॥ न चैवं स्वातंत्र्यभंग इत्याह । एवं संदर्शितेति । सेश्वरमिदं विश्वं यस्य वशे यदधीनमित्यर्थः ॥ १९ ॥ भगवत्प्रसादमन्येऽपि भक्ता लभंते इदं त्वतिचित्रमिति सरोमांचितमाह । नेममिति । विरिंचः पुत्रोऽपि । भवः स्वात्माऽपि । श्रीर्जायाऽपि ॥ २० ॥ फलितमाह । नायमिति । देहिनां देहाभिमानिनां तापसादीनां ज्ञानिनां निवृत्ताभिमानानामपि ॥ २१ ॥ भक्तैर्बद्धस्याप्यन्यमोचकत्वमाह । कृष्णस्त्विति

॥ २२ ॥ २३ ॥ इति श्रीमद्भागवते दशमस्कंधे टीकायां नवमोऽध्यायः ॥ ९ ॥ दशमेऽपातयद्रिंगन्नंतरा यमलार्जुनौ ॥ तत्रत्याभ्यां च देवाभ्यां कृष्णः स्तुत इतीर्यते ॥ १ ॥ यद्वि-
गर्हितं कर्म येन वा देवर्षेर्भगवतोत्तमस्यापि तमः क्रोधस्तदेतत्कथ्यतामिति ॥ १ ॥ २ ॥ ३ ॥ गंगायामंतर्मध्ये । कथंभूते । अंभोजानां वनानि तेषां राजयस्ता विद्यंते यस्मिंस्तस्मिन् ॥ ४ ॥
अपश्यत् दृष्टा च क्षीवाणौ मत्तौ समबुद्ध्यत ॥ ५ ॥ कुत इत्यत आह । तं दृष्ट्वेति ॥ ६ ॥ अनुग्रहार्थाय अनुग्रहश्च मदनाशोऽर्थश्च श्रीकृष्णदर्शनं तदर्थ इदं वक्ष्यमाणं न ह्यन्य इत्यादि ॥ ७ ॥
जोष्यान्विषयान् जुषतः सेवमानस्य पुंसः श्रीमदादन्य आभिजात्यादिः सत्कुलविद्यादिजनितो मदः । अन्यो वा रजोगुणो रजः कार्यहास्यदर्पादिरूपो नहि तथा बुद्धिभ्रंशो बुद्धिं भ्रंशयतीति
तथा किंतु श्रीमद एवेति । तदाह । यत्रेत्यादि चतुर्भिः । यत्र श्रीमदे ॥८॥ इमं नश्वरं देहमजरामृत्यु अजरश्च अमृतश्च यथा तथा मन्यमानैः ॥९॥ नरदेवभूदेवसंज्ञितमपि श्वादिभिर्भक्षितं विट्-

दात्मजौ ॥२२॥ पुरा नारदशापेन वृक्षतां प्रापितौ मदात् ॥ नलकूबरमणिग्रीवाविति ख्यातौ श्रियान्वितौ ॥ २३ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे गोपीप्रसादो नाम नवमोऽध्यायः ॥ ९ ॥ राजोवाच ॥ कथ्यतां भगवन्नेतत्तयोः शापस्य कारणम् ॥ यत्तद्विगर्हितं कर्म येन वा देवर्षेस्तमः ॥ १ ॥ श्रीशुक उवाच ॥ रुद्रस्यानुचरौ भूत्वा सुदृप्तौ धनदात्मजौ ॥ कैलासोपवने रम्ये मंदाकिन्यां मदोत्कटौ ॥ २ ॥ वारुणीं मदिरां पीत्वा मदाघूर्णितलोचनौ ॥ स्त्रीजनैरनुगायद्भिश्चेरतुः पुष्पिते वने ॥ ३ ॥ अंतः प्रविश्य गंगायामंभोजवनराजिनि ॥ चिक्रीडतुर्युवतिभिर्गजाविव करेणुभिः ॥ ४ ॥ यदृच्छया च देवर्षिर्भगवांस्तत्र कौरव ॥ अपश्यन्नारदो देवो क्षीबाणौ समबुद्ध्यत ॥ ५ ॥ तं दृष्ट्वा व्रीडिता देव्यो विवस्त्राः शापशंकिताः ॥ वासांसि पर्यधुः शीघ्रं विवस्त्रौ नैव गुह्यकौ ॥६॥ तौ दृष्ट्वा मदिरामत्तौ श्रीमदांधौ सुरात्मजौ ॥ तयोरनुग्रहार्थाय शापं दास्यन्निदं जगौ ॥ ७ ॥ नारद उवाच ॥ न ह्यन्यो जुषतो जोष्यान्बुद्धिभ्रंशो रजोगुणः ॥ श्रीमदादाभिजात्यादिर्यत्र स्त्रीद्यूतमासवः ॥८॥ हन्यंते पशवो यत्र निर्दयैरजितात्मभिः ॥ मन्यमानैरिमं देहमजरामृत्युनश्वरम् ॥ ९ ॥ देवसंज्ञितमप्यंते कृमिविड्भस्मसंज्ञितम् ॥ भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥ १० ॥ देहः किमन्नदातुः स्वं निषेक्तुर्मातुरेव च ॥ मातुः पितुर्वा बलिनः क्रेतुरग्नेः शुनोऽपि वा ॥ ११ ॥ एवं साधारणं देहमव्यक्तप्रभवाप्ययम् ॥ को विद्वानात्मसात्कृत्वा हंति जंतूनृतेऽसतः ॥ १२ ॥ असतः श्रीमदांधस्य दारिद्र्यंपरमंजनम् ॥ आत्मौपम्येन भूतानि दरिद्रः परमीक्षते ॥ १३ ॥ यथा कंटकविद्धांगो जंतोर्नेच्छति तां व्यथाम् ॥ जीवसाम्यं गतो लिंगैर्न तथाऽविद्धकंटकः ॥ १४ ॥ दरिद्रो निरहंस्तंभो मुक्तः सर्वमदे-

संज्ञितं दग्धं भस्मसंज्ञितमन्यदा कृमिसंज्ञितं तत्कृते तदर्थं यो भूतध्रुक् भूतद्रोग्धा । यतो भूतद्रोहान्निरयो भवति स किं स्वार्थं वेद नैव वेदेत्यर्थः ॥१०॥ इदानीं देहेऽहंभावोऽपि न घटत इत्याह । देह इति । निषेक्तुः पितुः मातुः पितुर्वा मातामहस्य पुत्रिकाकरणे ॥ ११ ॥ अव्यक्तप्रभवाप्ययमव्यक्तात्प्रभवस्तस्मिन्नेवाप्ययो यस्य तमात्मसात्कृत्वा आत्मेति मत्वा । असतो मूढादृते ॥१२॥ एवं श्रीमदविचेष्टितमुक्त्वा तत्प्रतीकारं निश्चिनोति । असत इति । परं श्रेष्ठं दारिद्र्यमेव । केवलमिति वा । कुत इत्यत आह । आत्मौपम्येनेति । ततो न द्रुह्यतीति भावः ॥१३॥ सदृष्टांतमाह। यथेति । मुखम्लानादिलिंगैः सर्वेषां जीवानां सुखदुःखे समे इति ज्ञातवानित्यर्थः ॥१४॥ किंच दारिद्र्यं मोक्षमपि साधयतीत्याह । दरिद्र इति श्लोकचतुष्टयेन । निरहंस्तंभो निर्गतोऽहंकाररूपः

स्तंभो यस्मात्सः ॥ १५ ॥ १६ ॥ युज्यंते स्वत एव संगच्छंते । तर्षं तृष्णाम् ॥ १७ ॥ ननु साधूनामपि धनिकः प्रिय स्यान्न दरिद्र इति तत्राह । साधूनामिति । धनेन स्तंभो गर्वो येषां तैः ॥ १८ ॥ तमोमदमज्ञानकृतमदम् ॥१९॥ तमःप्लुतौ तमोव्याप्तौ ॥ २० ॥ शपति अतोऽर्हत इति । अनुगृह्णाति स्यातां नेवमित्यादिना । मत्प्रसादेन स्मृतिः स्यात् ॥२१॥ स्वर्लोकतां देवत्वं पुनर्लब्ध्वा मदनुग्रहाल्लब्धभक्ती भविष्यत इति ॥२२॥२३॥ प्रस्तुतमाह । ऋषेरिति ॥ २४ ॥ किमिति सत्यं कर्तव्यं तत्राह । देवर्षिरिति । यद्यतः तत्ततः ॥ २५ ॥ यमयोर्यमलयोः सहजातयोः । आत्मनः कृष्णस्य तन्मध्यप्रवेशमात्रेण ॥२६॥ अनु अंचतीत्यन्वक् । तत्र हेतुः । दामोदरेणेति । उत्कलित उत्पाटितोंऽघ्रिबंधो मूलबंधो ययोस्तौ । परमस्य श्रीकृष्णस्य विक्रमितं विक्रम-

रिह ॥ कृच्छ्रं यदृच्छयाऽऽप्नोति तद्धि तस्य परं तपः ॥१५॥ नित्यं क्षुत्क्षामदेहस्य दरिद्रस्यान्नकांक्षिणः ॥ इन्द्रियाण्यनुशुष्यंति हिंसाऽपि विनिवर्तते ॥ १६ ॥ दरिद्रस्यैव युज्यंते साधवः समदर्शिनः ॥ सद्भिः क्षिणोति तं तर्षं तत आराद्विशुद्ध्यति ॥१७॥ साधूनां समचित्तानां मुकुंदचरणैषिणाम् ॥ उपेक्ष्यैः किं धनस्तंभैरसद्भिरसदाश्रयैः ॥ १८ ॥ तदहं मत्तयोर्माध्व्या वारुण्या श्रीमदांधयोः ॥ तमोमदं हरिष्यामि स्त्रैणयोरजितात्मनोः ॥ १९ ॥ यदिमौ लोकपालस्य पुत्रौ भूत्वा तमःप्लुतौ ॥ न विवाससमात्मानं विजानीतः सुदुर्मदौ ॥ २० ॥ अतोऽर्हतः स्थावरतां स्यातां नैवं यथा पुनः ॥ स्मृतिः स्यान्मत्प्रसादेन तत्रापि मदनुग्रहात् ॥ २१ ॥ वासुदेवस्य सान्निध्यं लब्ध्वा दिव्यशरच्छते ॥ वृत्ते स्वर्लोकतां भूयो लब्धभक्ती भविष्यतः ॥ २२ ॥ श्रीशुक उवाच ॥ एवमुक्त्वा स देवर्षिर्गतो नारायणाश्रमम् ॥ नलकूबरमणिग्रीवावासतुर्यमलार्जुनौ ॥ २३ ॥ ऋषेर्भागवतमुख्यस्य सत्यं कर्तुं वचो हरिः ॥ जगाम शनकैस्तत्र यत्रास्तां यमलार्जुनौ ॥ २४ ॥ देवर्षिर्मे प्रियतमो यदिमौ धनदात्मजौ ॥ तत्तथा साधयिष्यामि यद्गीतं तन्महात्मना ॥ २५ ॥ इत्यंतरेणार्जुनयोः कृष्णस्तु यमयोर्ययौ ॥ आत्मनिर्वेशमात्रेण तिर्यग्गतमुलूखलम् ॥२६॥ बालेन निष्कर्षयताऽन्वगुलूखलं तद्दामोदरेण तरसोत्कलितांघ्रिबंधौ ॥ निष्पेततुः परमविक्रमितातिवेपस्कन्धप्रवालविटपौ कृतचंडशब्दौ ॥२७॥ तत्र श्रिया परमया ककुभः स्फुरंतौ सिद्धावुपेत्य कुजयोरिव जातवेदाः ॥ कृष्णं प्रणम्य शिरसाऽखिललोकनाथं बद्धांजली विरजसावदमूचतुः स्म ॥ २८ ॥ कृष्ण कृष्ण महायोगिंस्त्वमाद्यः पुरुषः परः ॥ व्यक्ताव्यक्तमिदं विश्वं रूपं ते ब्राह्मणा विदुः ॥ २९ ॥ त्वमेकः सर्वभूतानां देहास्वात्मेंद्रियेश्वरः ॥ त्वमेव कालो भगवान्विष्णुरव्यय

स्तेनातिवेपः कंपो येषु ते स्कंधप्रवालविटपा ययोस्तौ ॥२७॥ ककुभः प्रति सर्वतः स्फुरंतावित्यर्थः। यद्वा दिशः प्रकाशयंताविति कुजयोर्वृक्षयोः स्थितोऽग्निर्यथा मूर्तिमानुपैति तथोपेत्य । विरजसौ निर्मदौ निरहंकारिणौ नष्टगर्वाविति यावत् ॥२८॥ गोपालं मां युवां देवौ किमिति प्रणताविति चेत्तत्राहतुः । हे कृष्ण कृष्ण महायोगिन्नचिंत्यप्रभावस्त्वं न गोपालः किंतु परः पुरुषः। यतः आद्यः कारणभूतः । तत्रापि न निमित्तमात्रं किंतूपादानमपि त्वमेवेत्याशयेन तुष्टुवतुः । व्यक्ताव्यक्तमिति स्थूलसूक्ष्ममिदं रूपं ते तव ब्राह्मणा ब्रह्मविदो विदुरिति ॥२९॥ नियंतापि त्वमेवेत्यूचतुः । त्वमेक इति देहः असवः प्राणाः आत्माऽहंकारः इंद्रियाणि च तेषामीश्वरः । नन्वस्य कालो निमित्तं प्रकृतिरुपादानं प्रकृतेर्जातो महान्विश्वात्मतया परिणमते पुरुषः कर्ता नियंता च किमत्राहमत आहतुः ।

तालदुंदुभिनिर्घोषं वा ॥१॥ अम्बष्ठो हस्तिपस्तेन चोदितम् ॥२॥ परिकरं युद्धोचितपरिधानं कृत्वा । समुह्य निबध्य ॥ ३ ॥ ४ ॥ अन्तको मृत्युः कालस्तन्निमित्तं यमस्तन्नियंता तैरुपमा यस्य तम् ॥५॥ विगलितो विच्युतः । मुष्टिना निहत्यालीयतादृश्यो बभूव ॥६॥ अचक्षाणोऽपश्यन् । घ्राणमवघ्राणं तेन दृष्टिर्दर्शनं यस्य सः । लोचनागोचरमपि हि पशवो घ्राणेन जानंतीति प्रसिद्धम् । परामृशद्धृतवान् । पुष्करेण शुण्डाग्रेण । स कृष्णः प्रसह्य बलेन ॥ ७ ॥ धनुषो धनुषां पञ्चविंशतिर्यावत्तावंतं देशं विचकर्ष आकृष्य नीतवान् । कं क इव विचकर्ष यथा नागं सर्पवद्वर्तमानं गजं सुपर्णवत्स्वयमिति । आविरासीद्यथा प्राच्यां दिशींदुरिव पुष्कल इतिवत् ॥८॥ स पर्यावर्तमानेनेति । पुच्छग्राहिणं श्रीकृष्णं गृहीतुं यदि दक्षिणतः परिवर्तते गजस्तर्हि सव्यतो भ्रामयति । यदा सव्यतः परिवर्तते तदा दक्षिणतो भ्रामयंस्तेन सह बभ्राम । गोवत्सेन भ्राम्यमाणेन बालकः स एव कृष्णो यथाऽन्यो वा बालक इवेति ॥९॥ वारणं गजं प्राद्रवन्प्रकर्षेणासमन्ततो धावन्पातया-

न्नागमवस्थितम् ॥ अपश्यत्कुवलयापीडं कृष्णोऽम्बष्ठप्रचोदितम् ॥२॥ बद्ध्वा परिकरं शौरिः समुह्य कुटिलालकान् ॥ उवाच हस्तिपं वाचा मेघनादगभीरया ॥३॥ अंबष्ठांबष्ठ मार्गं नौ देह्यपक्रम मा चिरम् ॥ नोचेत्सकुंजरं त्वाऽद्य नयामि यमसादनम् ॥४॥ एवं निर्भर्त्सितोऽम्बष्ठः कुपितः कोपितं गजम् ॥ चोदयामास कृष्णाय कालांतकयमोपमम् ॥५॥ करींद्रस्तमभिद्रुत्य करेण तरसाऽग्रहीत् ॥ कराद्विगलितः सोऽमुं निहत्यांघ्रिष्वलीयत ॥६॥ संक्रुद्धस्तमचक्षाणो घ्राणदृष्टिः स केशवम् ॥ परामृशत्पुष्करेण स प्रसह्य विनिर्गतः ॥ ७ ॥ पुच्छे प्रगृह्यातिबलं धनुषः पंचविंशतिम् ॥ विचकर्ष यथा नागं सुपर्ण इव लीलया ॥८॥ स पर्यावर्तमानेन सव्यदक्षिणतोऽच्युतः ॥ बभ्राम भ्राम्यमाणेन गोवत्सेनेव बालकः ॥९॥ ततोऽभिमुखमभ्येत्य पाणिनाऽऽहत्य वारणम् ॥ प्राद्रवन्पातयामास स्पृश्यमानः पदे पदे ॥ १० ॥ स धावन्क्रीडया भूमौ पतित्वा सहसोत्थितः ॥ तं मत्वा पतितं क्रुद्धो दंताभ्यां सोऽहनत्क्षितिम् ॥११॥ स्वविक्रमे प्रतिहते कुंजरेंद्रोऽत्यमर्षितः ॥ चोद्यमानो महामात्रैः कृष्णमभ्यद्रवद्रुषा ॥१२॥ तमापतंतमासाद्य भगवान्मधुसूदनः ॥ निगृह्य पाणिना हस्तं पातयामास भूतले ॥ १३ ॥ पतितस्य पदाक्रम्य मृगेंद्र इव लीलया ॥ दन्तमुत्पाट्य तेनेभं हस्तिपांश्चाहनद्धरिः ॥ १४ ॥ मृतकं द्विपमुत्सृज्य दंतपाणिः समाविशत् ॥ अंसन्यस्तविषाणोऽसृङ्मदबिंदुभिरंकितः ॥ विरूढस्वेदकणिकावदनांबुरुहो बभौ ॥ १५ ॥ वृतौ गोपैः कतिपयैर्बलदेवजनार्दनौ ॥ रंगं विविशतू राजन्गजदंतवरायुधौ ॥ १६ ॥ मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान्गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः ॥ मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनां वृष्णीनां परदेवतेति विदितो रंगं गतः

मास । यथा पतति तथा तं वञ्चयन्प्राद्रवदित्यर्थः ॥ १० ॥ किंच स धावन्निति अहनदहन् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ रंगं समाविशत्तदा वीरश्रिया बभौ । कथंभूतः । अंसे न्यस्तं विषाणं गजदंतो येन सः असृजो रक्तस्य मदस्य च बिंदुभिः परितोऽङ्कितः । विरूढा उद्गताः स्वेदकणिकास्ताभिरुपलक्षितं वदनांबुरुहं यस्य सः ॥१५॥ न केवलं स एकः समाविशत्किंतु वृतो गोपैरिति ॥१६॥ तत्र शृङ्गारादिसर्वरसकदम्बमूर्तिर्भगवांस्तत्तदभिप्रायानुसारेण बभौ । साकल्येन सर्वेषामित्याह । मल्लानामिति । मल्लादीनामज्ञानां द्रष्टृणामशन्यादिरूपेण दशधा विदितः सन्साग्रजो रंगं गत इत्यन्वयः । मल्लादिष्वभिव्यक्ता रसाः क्रमेण श्लोकेन निबध्यंते । रौद्रोऽद्भुतश्च शृङ्गारो हास्यं वीरो दया तथा ॥ भयानकश्च बीभत्सः शांतः सप्रेमभक्तिकः ॥ अविदुषां विराट् विकलः

अपर्याप्तो राजत इति तथा । अनेन बीभत्सरस उक्तः । विकलत्वं च क्व वज्रसारसर्वाङ्गावित्यादिना वक्ष्यते ॥ १७ ॥ उद्विविजे भीतो बभूव ॥१८॥ तथा नटाविति निर्भयत्वं दर्शितम् ॥१९॥ प्रहर्षवेगेनोत्कलितान्युज्जृंभितानीक्षणान्याननानि च येषाम् । तयोराननं पपुः परं न तृप्ताः । निराकांक्षा न बभूवुरित्यर्थः ॥२०॥ तदेवाह । पिबंत इवेति । श्लिष्यंतः परिष्वंगं कुर्वंत इव लक्षिता इत्यर्थः ॥२१॥ यथादृष्टं धनुर्भङ्गादि यथाश्रुतं गोवर्धनोद्धरणादि तत्तदनतिक्रम्य तदनुरूपमित्यर्थः । प्रत्यक्षं च तयो रूपं गजदंतादियुक्तं गुणाः शौर्यादयो माधुर्यं हसितालापादि प्रागल्भ्यं धार्ष्ट्यं





साग्रजः ॥ १७ ॥ हतं कुवलयापीडं दृष्ट्वा तावपि दुर्जयौ ॥ कंसो मनस्व्यपि तदा भृशमुद्विविजे नृप ॥ १८ ॥ तौ रेजतू रङ्गगतौ महाभुजौ विचित्रवेषाभरणस्रगंबरौ ॥ यथा नटावुत्तमवेषधारिणौ मनः क्षिपंतौ प्रभया निरीक्षताम् ॥ १९ ॥ निरीक्ष्य तावुत्तमपूरुषौ जना मञ्चस्थिता नागरराष्ट्रका नृप ॥ प्रहर्षवेगोत्कलितेक्षणानना: पपुर्न तृप्ता नयनैस्तदाननम् ॥२०॥ पिबंत इव चक्षुर्भ्यां लिहंत इव जिह्वया ॥ जिघ्रन्त इव नासाभ्यां श्लिष्यन्त इव बाहुभिः ॥२१॥ ऊचुः परस्परं ते वै यथादृष्टं यथाश्रुतम् ॥ तद्रूपगुणमाधुर्यप्रागल्भ्यस्मारिता इव ॥ २२ ॥ एतौ भगवतः साक्षाद्धरेर्नारायणस्य हि ॥ अवतीर्णाविहांशेन वसुदेवस्य वेश्मनि ॥ २३ ॥ एष वै किल देवक्यां जातो नीतश्च गोकुलम् ॥ कालमेतं वसन्गूढो ववृधे नंदवेश्मनि ॥ २४ ॥ पूतनाऽनेन नीताऽन्तं चक्रवातश्च दानवः ॥ अर्जुनौ गुह्यकः केशी धेनुकोऽन्ये च तद्विधाः ॥ २५ ॥ गावः सपाला एतेन दावाग्नेः परिमोचिताः ॥ कालियो दमितः सर्प इंद्रश्च विमदः कृतः ॥२६॥ सप्ताहमेकहस्तेन धृतोऽद्रिप्रवरोऽमुना ॥ वर्षवाताशनिभ्यश्च परित्रातं च गोकुलम् ॥ २७ ॥ गोप्योऽस्य नित्यमुदितहसितप्रेक्षणं मुखम् ॥ पश्यंत्यो विविधांस्तापांस्तरंति स्माश्रमं मुदा ॥ २८ ॥ वदंत्यनेन वंशोऽयं यदोः सुबहुविश्रुतः ॥ श्रियं यशो महत्त्वं च लप्स्यते परिरक्षितः ॥ २९ ॥ अयं चास्याग्रजः श्रीमान् रामः कमललोचनः ॥ प्रलंबो निहतो येन वत्सको ये बकादयः ॥ ३० ॥ जनेष्वेवं ब्रुवाणेषु तूर्येषु निनदत्सु च ॥ कृष्णरामौ समाभाष्य चाणूरो वाक्यमब्रवीत् ॥३१॥ हे नंदसूनो हे राम भवन्तौ वीरसंमतौ ॥ नियुद्धकुशलौ श्रुत्वा राज्ञाऽऽहूतौ दिदृक्षुणा ॥ ३२ ॥ प्रियं राज्ञः प्रकुर्वन्त्यः श्रेयो विंदंति वै प्रजाः ॥ मनसा कर्मणा वाचा विपरीतमतोऽन्यथा ॥ ३३ ॥ नित्यं प्रमुदिता गोपा वत्सपाला यथा स्फुटम् ॥ वनेषु मल्लयुद्धेन क्रीडंतश्चारयंति गाः ॥ ३४ ॥ तस्माद्राज्ञः प्रियं यूयं वयं च करवामहे ॥ भूतानि नः प्रसीदंति सर्वभूतमयो नृपः ॥३५॥ तन्निशम्याब्रवीत्कृष्णो देशकालोचितं वचः ॥ नियुद्धमात्मनोऽभीष्टं मन्यमा-

तैः स्मारिता इव स्मरणं प्रापिता इव ॥२२॥ विस्मितानां वाक्यान्याह । अर्धांभरेतावित्यादिभिः ॥ २३ ॥ किलेति सर्वत्रान्वयः ॥ २४ ॥ गुह्यकः शंखचूडः अन्ये चाघासुरादयः ॥२५॥ ॥२६॥२७॥ आश्रममीषच्छ्रमयुक्तं सुखम् । अश्रमं सुखमिति वा । यद्वा । अश्रमं यथा भवति तथा तरंति स्मेति ॥ २८ ॥ अनेन परिरक्षितो यदोर्वंशः सुबहुविश्रुतः सन् श्रयादि लप्स्यत इति वदंतीति ॥ २९ ॥ धेनुकबकवत्सासुरेषु विपर्ययोक्तिर्जनवादेष्वनिश्चयात् ॥३०॥ जनेष्वेवं ब्रुवाणेषु सत्सु तदसहमानश्चाणूरोऽब्रवीदिति ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ हे कृष्ण ! प्रियं करवा-

मेति । राज्ञि प्रीते भूतानि च प्रसीदेयुः ॥३५॥३६॥३७॥ यथोचितं नियुद्धं बाहुयुद्धं भवेत्। मल्लसभासदो मल्लसभाधिकृतान् जनानधर्मो मा स्पृशेन्न स्पृशेदित्यर्थः । हे मल्लेति वा ॥३८॥ सहस्रद्विपानां सत्त्वं बलं बिभर्तीति तथा ॥३९॥ बलिभिर्मादृशैः सह अनयोऽधर्मः । विक्रमं पराक्रमं कुरु । मुष्टिको विक्रमतादित्यनुषंगः ॥४०॥ इति श्रीमद्भागवते दशमस्कंधे पूर्वार्धे टीकायां त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ चतुश्चत्वारिंशके तु मल्लकंसादिमर्दनम् ॥ कंसयोषित्समाश्वासस्ताभ्यां पित्रोश्च दर्शनम् ॥ १ ॥ चर्चितो निश्चित एव संकल्पो यस्य सः ॥ १ ॥ २ ॥ बाहुमध्यात्कनिष्ठांगुलिव्यतिरेकेण कृतमुष्टिर्हस्तोऽरत्निः ॥३॥ परिभ्रामणं हस्तादिषु गृहीत्वा परितश्चालनं विक्षेपो नोदनं परिरंभो बाहुभ्यां निष्पीडनं अवपातनमधःक्षेपः उत्सर्पणमुत्सृज्य पुरतो गमनं अपसर्पणं पृष्ठतो गमनं एतैः प्रत्यरुंधतां प्रत्यावृतवंतौ ॥४॥ उत्थापनं जानुनी पादौ च पिंडीकृत्य पतितस्योच्चाटनम्। उन्नयनं हस्ताभ्यामुद्धृत्य नयनम् । चालनं कंठादिलग्नस्य निःसा-

नोऽभिनंद्य च ॥ ३६ ॥ प्रजा भोजपतेरस्य वयं चापि वनेचराः ॥ करवाम प्रियं नित्यं तन्नः परमनुग्रहः ॥ ३७ ॥ बाला वयं तुल्यबलैः क्रीडिष्यामो यथोचितम् ॥ भवेन्नियुद्धं माऽधर्मः स्पृशेन्मल्लसभासदः ॥३८॥ चाणूर उवाच ॥ न बालो न किशोरस्त्वं बलश्च बलिनां वरः ॥ लीलयेभो हतो येन सहस्रद्विपसत्त्वभृत् ॥३९॥ तस्माद्भवद्भ्यां बलिभिर्योद्धव्यं नानयोऽत्र वै ॥ मयि विक्रम वार्ष्णेय बलेन सह मुष्टिकः ॥ ४० ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे कुबलयापीडवधो नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ श्रीशुक उवाच ॥ एवं चर्चितसंकल्पो भगवान्मधुसूदनः ॥ आससादाथ चाणूरं मुष्टिकं रोहिणीसुतः ॥ १ ॥ हस्ताभ्यां हस्तयोर्बद्ध्वा पद्भ्यामेव च पादयोः ॥ विचकर्षतुरन्योन्यं प्रसह्य विजिगीषया ॥२॥ अरत्नी द्वे अरत्निभ्यां जानुभ्यां चैव जानुनी ॥ शिरःशीर्ष्णोरसोरस्तावन्योन्यमभिजघ्नतुः ॥ ३ ॥ परिभ्रमणविक्षेपपरिरंभावपातनैः ॥ उत्सर्पणापसर्पणैश्चान्योन्यं प्रत्यरुंधताम् ॥ ४ ॥ उत्थापनैरुन्नयनैश्चालनैः स्थापनैरपि ॥ परस्परं जिगीषंतावपचक्रतुरात्मनः ॥ ५ ॥ तद्बलाबलवद्युद्धं समेताः सर्वयोषितः ॥ ऊचुः परस्परं राजन्सानुकंपा वरूथशः ॥६॥ महानयं बताधर्म एषां राजसभासदाम् ॥ ये बलाबलवद्युद्धं राज्ञोऽन्विच्छंति पश्यतः ॥७॥ क्व वज्रसारसर्वांगौ मल्लौ शैलेंद्रसन्निभौ ॥ क्व चातिसुकुमारांगौ किशोरौ नाप्तयौवनौ ॥ ८ ॥ धर्मव्यतिक्रमो ह्यस्य समाजस्य ध्रुवं भवेत् ॥ यत्राधर्मः समुत्तिष्ठेन्न स्थेयं तत्र कर्हिचित् ॥९॥ न सभां प्रविशेत्प्राज्ञः सभ्यदोषाननुस्मरन् ॥ अब्रुवन्विब्रुवन्नज्ञो नरः किल्बिषमश्नुते ॥१०॥ वल्गतः शत्रुमभितः कृष्णस्य वदनांबुजम् ॥ वीक्ष्यतां श्रमवार्युप्तं पद्मकोशमिवांबुभिः ॥११॥ किं न पश्यत रामस्य मुखमाताम्रलोचनम् ॥

रणम् । स्थापनं पादादिपिंडीकरणम् । एवं परस्परमात्मनो देहस्यापचक्रतुरपकारं कृतवंतौ ॥ ५ ॥ तद्युद्धं बलाबलवदेकतो बलमन्यतोऽबलम् । तद्युद्धं विषममित्यूचुरित्यर्थः ॥ ६ ॥ तदेव दर्शयति । महानिति । यद्वा । बलाबलवयोर्युद्धं दृष्ट्वा महानयमधर्म इत्यूचुरित्यन्वयः। बालयोर्बलवतोश्च युद्धं राजा चेत्पश्येत्स्वयं वारणीयः। एते तु राज्ञः पश्यतः स्वयमन्विच्छंत्यनुमन्यंत इति महानधर्म इत्यर्थः ॥ ७ ॥ बलाबलवद्युद्धतां प्रपंचयति पञ्चभिः । क्वेति । वज्रसाराणि वज्रवत्कठिनानि सर्वाण्यंगानि ययोस्तौ ॥ ८ ॥ समाजस्य सभायाः ॥ ९ ॥ अपरा ऊचुः । न सभामिति । अब्रुवन् ज्ञात्वाऽपि तूष्णीं तिष्ठन् । विब्रुवन्विपरीतं ब्रुवन् । अज्ञो न जानामीति ब्रुवन् । अतः प्राज्ञो न सभां प्रविशेदिति ॥ १० ॥ वल्गतः शत्रुमभित इति । शत्रोः सर्वतो धावतः कृष्णस्य

श्रमवारिणा उप्तं व्याप्तं मुखांबुजं दृश्यताम् ॥११॥ अन्या ऊचुः । किं न पश्यतेति । सामर्षं सक्रोधम् । हासेन संरम्भ आवेशस्तेन शोभितम् ॥१२॥ अन्या ऊचुः । पुण्या बतेति । नृलिंगेन मनुष्यदेहेन गूढः । वनस्थानि चित्राणि यस्य सः । गिरित्रः शिवो रमा च ताभ्यामर्चितावंघ्री यस्य सः । अयं भावः । त्रिगिमां सभां यस्यामयं पराभूयते । तास्तु व्रजभुवो धन्याः यथा स्वयं कृष्णो विविधक्रीडयांचति गच्छतीति ॥ १३ ॥ अहो कष्टमल्पपुण्या वयं यतोऽस्माभिरनवसरे दृष्टोऽयम् । गोप्यस्तु बहुपुण्या इत्याहुस्त्रिभिः । गोप्य इति । अमुष्य श्रीकृष्णस्य रूपमंगं लावण्येन सारं श्रेष्ठम् । किंच असमोर्ध्वं न विद्यते सममूर्ध्वमधिकं च यस्य तत्। यदपि नान्येनाभरणादिना सिद्धं किंतु स्वत एव ऐश्वरस्यैश्वर्यस्य चैकांतधामाव्यभिचारिस्थानम् । पाठांतरे अमुष्य ईश्वरस्येरयःवयः । एवंभूतं नित्यं नवीनं रूपं या नेत्रैः पश्यंतीति ॥१४॥ किंच या दोहनादिष्वेनं गायन्ति ता व्रजस्त्रियो धन्याः। प्रेंखेंखनं दोलांदोलनम् । उक्षणं सेचनम् । कथंभूताः । उरुक्रमे

मुष्टिकं प्रति सामर्षं हाससंरंभशोभितम् ॥१२॥ पुण्या बत व्रजभुवो यदयं नृलिंगगूढः पुराणपुरुषो वनचित्रमाल्यः ॥ गाः पालयन्सहबलः क्वणयंश्च वेणुं विक्रीडयांचति गिरित्ररमार्चितांघ्रिः ॥ १३ ॥ गोप्यस्तपः किमचरन्यदमुष्य रूपं लावण्यसारमसमोर्ध्वमनन्यसिद्धम् ॥ दृग्भिः पिबन्त्यनुसवाभिनवं दुरापमेकांतधाम यशसः श्रिय ऐश्वरस्य ॥१४॥ या दोहनेऽवहनने मथनोपलेपप्रेंखेंखनार्भरुदितोक्षणमार्जनादौ॥ गायन्ति चैनमनुरक्तधियोऽश्रुकण्ठ्यो धन्या व्रजस्त्रिय उरुक्रमचित्तयानाः ॥१५॥ प्रातर्व्रजाद्व्रजत आविशतश्च सायं गोभिः समं क्वणयतोऽस्य निशम्य वेणुम् ॥ निर्गम्य तूर्णमबलाः पथि भूरिपुण्याः पश्यन्ति सस्मितमुखं सदयावलोकम्॥१६॥ एवं प्रभाषमाणासु स्त्रीषु योगेश्वरो हरिः ॥ शत्रुं हन्तुं मनश्चक्रे भगवान्भरतर्षभ ॥१७॥ सभयाः स्त्रीगिरः श्रुत्वा पुत्रस्नेहशुचातुरौ ॥ पितरावन्वतप्येतां पुत्रयोरबुधौ बलम् ॥ १८ ॥ तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ ॥ युयुधाते यथाऽन्योन्यं तथैव बलमुष्टिकौ ॥ १९ ॥ भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरैः ॥ चाणूरो भज्यमानांगो मुहुर्ग्लानिमवाप ह ॥ २० ॥ स श्येनवेग उत्पत्य मुष्टीकृत्य करावुभौ ॥ भगवन्तं वासुदेवं क्रुद्धो वक्षस्यबाधत ॥२१॥ नाचलत्तत्प्रहारेण मालाहत इव द्विपः ॥ बाह्वोर्निगृह्य चाणूरं बहुशो भ्रामयन्हरिः ॥२२॥ भूपृष्ठे पोथयामास तरसा क्षीणजीवितम् ॥ विस्रस्ताकल्पकेशस्रगिंद्रध्वज इवापतत् ॥ २३ ॥ तथैव मुष्टिकः पूर्वं स्वमुष्ट्याऽभिहतेन वै ॥ बलभद्रेण बलिना तलेनाभिहतो भृशम् ॥२४॥ प्रवेपितः स रुधिरमुद्वमन्मुखतोऽर्दितः ॥ व्यसुः पपातोर्व्युपस्थे वाताहत इवां-

चित्तमुरुक्रमचित्तं तेनैव यानं सर्वविषयप्राप्तिर्यासां ताः । पाठांतरे उरुक्रमं चिंतयन्त्य इत्यर्थः । कुतः । अनुरक्तधियः । तत्र लिंगमश्रुकंठ्यः ॥१५॥ प्रातरिति । या अबला अस्य वेणुं निशम्य गृहात्तूर्णं निर्गम्य पथि सस्मितमुखं पश्यंति ता भूरिपुण्या इति ॥१६॥ एवं सभयं ब्रुवाणासु स्त्रीषु तासां भयनिवृत्तये कृष्णः शत्रुं हन्तुं मनश्चक्रे ॥ १७ ॥ सभयाः स्त्रीणां गिरः श्रुत्वा पुत्रयोः स्नेहेन या शुक् तया आतुरौ विह्वलौ पुत्रयोर्बलमजानन्तौ पितरावनुतापं प्राप्ताविति ॥१८॥१९॥ तदा भगवतो गात्राणामरत्निजान्वादीनां निष्पातैः प्रहारैर्वज्रस्य निष्पेषस्तीव्रप्रपातस्तद्वन्निष्ठुरैः। भज्यमानांगः श्लथद्गात्रः ॥२०॥ श्येनस्येव वेगो यस्य स चाणूरः अबाधताताडयत् ॥२१॥२२॥ भूपृष्ठे भुव उपरि । पोथयामासास्फालयत् । इन्द्रध्वजो वज्रम् । यद्वा । इंद्रध्वजो गौडेषु

प्रसिद्धः कस्मिंश्चिदुत्सवे महान्स्तंभो ध्वजपताकाद्यलंकृतः पुरुषाकृतिरुच्छ्रीयते स यथा पतति तद्वदपतदिति ॥२३॥२४॥ अर्दितः पीडितः । ऊर्व्युपस्थे भूतले ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ वल्गंतौ नृत्यादि कुर्वंतौ ॥२९॥ साधु साधु इति वदंतः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ अव्ययोऽश्रमः । लघिम्ना लाघवेन ॥३४॥३५॥ दुर्विषहमविषह्यमुग्रं तेजो यस्य स श्रीकृष्णः ॥३६॥

ग्रिपः ॥ २५ ॥ ततः कूटमनुप्राप्तं रामः प्रहरतां वरः ॥ अवधील्लीलया राजन्सावज्ञं वाममुष्टिना ॥२६॥ तर्ह्येव हि शलः कृष्णपदाऽपहतशीर्षकः ॥ द्विधा विदीर्णस्तोशलक उभावपि निपेततुः ॥ २७ ॥ चाणूरे मुष्टिके कूटे शले तोशलके हते ॥ शेषाः प्रदुद्रुवुर्मल्लाः सर्वे प्राणपरीप्सवः ॥ २८ ॥ गोपान्वयस्यानाकृष्य तैः संसृज्य विजह्रतुः ॥ वाद्यमानेषु तूर्येषु वल्गंतौ रुतनूपुरौ ॥२९॥ जनाः प्रजहृषुः सर्वे कर्मणा रामकृष्णयोः ॥ ऋते कंसं विप्रमुख्याः साधवः साधु साध्विति ॥ ३० ॥ हतेषु मल्लवर्येषु विद्रुतेषु च भोजराट् ॥ न्यवारयत्स्वतूर्याणि वाक्यं चेदमुवाच ह ॥३१॥ निःसारयत दुर्वृत्तौ वसुदेवात्मजौ पुरात् ॥ धनं हरत गोपानां नन्दं बध्नीत दुर्मतिम् ॥ ३२ ॥ वसुदेवस्तु दुर्मेधा हन्यतामाश्वसत्तमः ॥ उग्रसेनः पिता चापि सानुगः परपक्षगः ॥ ३३ ॥ एवं विकत्थमाने वै कंसे प्रकुपितोऽव्ययः ॥ लघिम्नोत्पत्य तरसा मञ्चमुत्तुङ्गमारुहत् ॥३४॥ तमाविशंतमालोक्य मृत्युमात्मन आसनात् ॥ मनस्वी सहसोत्थाय जगृहे सोऽसिचर्मणी ॥ ३५ ॥ तं खड्गपाणिं विचरंतमाशु श्येनं यथा दक्षिणसव्यमम्बरे ॥ समग्रहीद्दुर्विषहोग्रतेजा यथोरगं तार्क्ष्यसुतः प्रसह्य ॥३६॥ प्रगृह्य केशेषु चलत्किरीटं निपात्य रङ्गोपरि तुङ्गमञ्चात् ॥ तस्योपरिष्टात्स्वयमब्जनाभः पपात विश्वाश्रय आत्मतन्त्रः ॥३७ ॥ तं सम्परेतं विचकर्ष भूमौ हरिर्यथेभं जगतो विपश्यतः ॥ हाहेति शब्दः सुमहांस्तदाऽभूदुदीरितः सर्वजनैर्नरेंद्र ॥३८॥ स नित्यदोद्विग्नधिया तमीश्वरं पिबन्वदन्वा विचरन्स्वपन् श्वसन् ॥ ददर्श चक्रायुधमग्रतो यतस्तदेव रूपं दुरवापमाप ॥ ३९ ॥ तस्यानुजा भ्रातरोऽष्टौ कङ्कन्यग्रोधकादयः ॥ अभ्यधावन्नभिक्रुद्धा भ्रातुर्निर्वेशकारिणः ॥४०॥ तथातिरभसांस्तांस्तु संयत्तान् रोहिणीसुतः ॥ अहन्परिघमुद्यम्य पशूनिव मृगाधिपः ॥ ४१ ॥ नेदुर्दुंदुभयो व्योम्नि ब्रह्मेशाद्या विभूतयः ॥ पुष्पैः किरंतस्तं प्रीताः शशंसुर्ननृतुः स्त्रियः ॥४२॥ तेषां स्त्रियो महाराज सुहृन्मरणदुःखिताः ॥ तत्राभीयुर्विनिघ्नन्त्यः शीर्षाण्यश्रुविलोचनाः ॥ ४३ ॥ शयानान्वीरशय्यायां पीतानालिंग्य शोचतीः ॥ विलेपुः सुस्वरं नार्यो विसृजन्त्यो मुहुः शुचः ॥ ४४ ॥ हा नाथ प्रिय धर्मज्ञ करुणानाथ वत्सल ॥ त्वया हतेन निहता वयं ते सगृहप्रजाः ॥४५॥ त्वया विरहिता पत्या

गरिष्ठत्वाय विश्वाश्रयत्वमुक्तम् । तत्र हेतुः । अब्जनाभः कुतस्तस्योपर्येव पपात । यत आत्मतंत्रः स्वतंत्रः ॥ ३७ ॥ ३८ ॥ ३९ ॥ निर्वेशो निष्कृतिरानृण्यमित्यर्थः । तत्कारिणः संतस्तेऽभ्यधावन् ॥४०॥ तथा तादृगतिरभसो वेगो येषां तान् । संयत्तानुद्युक्तान् ॥ ४१ ॥ ४२ ॥ ४३ ॥ शोचंत्यो विलापांश्चक्रुः । शुचः अश्रूणि ॥४४॥ धर्मज्ञ इत्यादीनि विलापे प्रेमसम्बोधनानि ।

ते त्वदीया वयम् ॥ ४५ ॥ त्वया पत्या विरहिता पुरीयं न शोभत इति स्वदृष्ट्याभिधानम् ॥४६॥ अनागसामिति तु परमार्थाभिधानम् ॥४७॥ एष कृष्णः प्रभवंत्यस्मादिति प्रभवः अपियंत्यस्मिन्नित्यप्ययः स च स च । तदवध्यानं तदवज्ञा तत्कर्तृ शीलं यस्य सः ॥४८॥४९॥ आस्पृश्य ईषत्स्पृष्ट्वा ॥ ५० ॥ पुत्रभ्रांतिं विहाय जगदीश्वराविति ज्ञात्वा शंकितौ न सस्वजाते नालिंगितवंतौ । किंतु बद्धांजली तस्थतुरित्यर्थः ॥ ५१ ॥ प्रसह्य हत्वा हस्तींद्रं मल्लेंद्रान्मल्ललीलया ॥ वीभत्सचरितं कंसं स वीभत्समवारयत् ॥ १ ॥ इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे टीकायां चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ पञ्चचत्वारिंशकेऽथ पितृनन्दादिसांत्वनम् ॥ उग्रसेनाभिषेकश्च गुरौ वासात्पुरागमः ॥ १ ॥ उपलब्धार्थौ विदित्वेति । अयमर्थः । उप समीपे आवयोः पुत्रबुद्ध्या सांसारिकपरमसुखभोगात्पूर्वमेव लब्धार्थावावामीश्वराविति लब्धः प्राप्तः परमज्ञानरूपोऽर्थो याभ्यां तौ तथाभूतौ ज्ञात्वा मयि प्रसन्ने सत्यनयोर्ज्ञानं नाम किं दुर्लभं स्यात् । दुर्लभं तु मयि पुत्र-

पुरीयं पुरुषर्षभ ॥ न शोभते वयमिव निवृत्तोत्सवमङ्गला ॥४६॥ अनागसां त्वं भूतानां कृतवान्द्रोहमुल्बणम् ॥ तेनेमां भो दशां नीतो भूतध्रुक्को लभेत शम् ॥ ४७ ॥ सर्वेषामिह भूतानामेष हि प्रभवाप्ययः ॥ गोप्ता च तदवध्यायी न क्वचित्सुखमेधते ॥ ४८ ॥ श्रीशुक उवाच ॥ राजयोषित आश्वास्य भगवाँल्लोकभावनः ॥ यामाहुर्लौकिकीं संस्थां हतानां समकारयत् ॥ ४९ ॥ मातरं पितरं चैव मोचयित्वाऽथ बंधनात् ॥ कृष्णरामौ ववंदाते शिरसा स्पृश्य पादयोः ॥ ५० ॥ देवकी वसुदेवश्च विज्ञाय जगदीश्वरौ ॥ कृतसंवंदनौ पुत्रौ सस्वजाते न शंकितौ ॥५१॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे कंसवधो नाम चतुश्चत्वारिंशोऽध्यायः ॥४४॥ श्रीशुक उवाच ॥ पितरावुपलब्धार्थौ विदित्वा पुरुषोत्तमः ॥ माऽभूदिति निजां मायां ततान जनमोहिनीम् ॥१॥ उवाच पितरावेत्य साग्रजः सात्वतर्षभः ॥ प्रश्रयावनतः प्रीणन्नंब तातेति सादरम् ॥२॥ नास्मत्तो युवयोस्तात नित्योत्कंठितयोरपि ॥ बाल्यपौगंडकैशोराः पुत्राभ्यामभवन् क्वचित् ॥ ३ ॥ न लब्धो दैवहतयोर्वासो नौ भवदंतिके ॥ यां बाला पितृगेहस्था विंदंते लालिता मुदम् ॥ ४ ॥ सर्वार्थसंभवो देहो जनितः पोषितो यतः ॥ तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा ॥ ५ ॥ यस्तयोरात्मजः कल्प आत्मना च धनेन च ॥ वृत्तिं न दद्यात्तं प्रेत्य स्वमांसं खादयंति हि ॥ ६ ॥ मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुम् ॥

तया प्रेम अत इदानीमेव तज्ज्ञानं नाभूदिति । निजां स्वाधीनां मायां तयोः प्रसारितवानिति ॥ १ ॥ तदेव दर्शयति । उवाचेत्यादिभिरष्टभिः । प्रीणन्प्रीणयन्सादरं ब्रुवन् ॥२॥ अस्मत्तोऽस्मन्निमित्तं नित्यमुत्कण्ठितयोरपि युवयोः पुत्राभ्यामावाभ्यां कृत्वा बाल्यपौगंडकैशोरास्तत्तदवस्थानुभवसुखानीत्यर्थः । नाभवन्निति अस्मत्तः पुत्राभ्यामिति सामानाधिकरण्यं वा ॥३॥ किंच । आवामेव दैवहीनावित्याह । न लब्ध इति । पितृगेहस्था बाला यां मुदं विंदन्ते सा च न लब्धेति ॥४॥ तावच्छ्लोकद्वयेन युवयोरावयोश्च कामहानिर्जातेत्युक्तमावयोः पुनर्युष्मत्परिचर्यालोपेन धर्महानिरपि जातेत्याह । सर्वार्थसम्भव इति । सर्वेषां धर्माद्यर्थानां सम्भवो यस्मिन्स देहो यतो याभ्यां जनितः पोषितश्च तयोः पित्रोर्निर्वेशं निष्कृतिमानृण्यं मर्त्यः शतसंवत्सरमात्रेणायुषा न प्राप्नोति ॥५॥ तन्मध्येऽपि तु यः पुत्रः कल्पः समर्थः सन्नपि देहेन धनेन च पित्रोर्वृत्तिं जीविकां न सम्पादयेत्तं प्रेत्य लोकांतरे यमदूताः स्वस्यैव मांसं खादयन्तीति ॥ ६ ॥ किंच मात्रादि-

शुश्रूषामकुर्वन्विफलजीवितश्च भवतीत्याह । मातरमिति । अविभ्रदपुष्णन् श्वसन्नपि मृततुल्य एवेति ॥ ७ ॥ तत्तस्मान्नौ आवयोः । मोघं व्यर्थम् । अनर्चतोरपूजयतोः ॥ ८ ॥ दुर्हृदा कंसेन कृत्वा ॥ ९ ॥ १० ॥ ११ ॥ आश्वास्य सांत्वयित्वा ॥१२॥ त्वमेवाज्ञापयेति मा वदेत्याह । ययातिशापादिति । तव तु यादवत्वेऽपि मदाज्ञया न दोष इति भावः ॥ १३ ॥ मम तादृशी शक्तिर्नास्तीति चेत्तत्राह । मयीति । मत्प्रसादेन सर्वं भविष्यतीत्यर्थः ॥१४॥ स्वान्ज्ञातीन्संबंधाश्च दिग्भ्य आनाय्येति ॥१५॥१६॥ सिद्धाः पूर्णाः । कृष्णरामाभ्यां गतो निवृत्तो ज्वरस्तापो

गुरुं विप्रं प्रपन्नं च कल्पोऽबिभ्रच्छ्वसवन्मृतः ॥ ७ ॥ तन्नावकल्पयोः कंसान्नित्यमुद्विग्नचेतसोः ॥ मोघमेते व्यतिक्रांता दिवसा वामनर्चतोः ॥ ८ ॥ तत्क्षन्तुमर्हथस्तात मातर्नौ परतन्त्रयोः ॥ अकुर्वतोर्वां शुश्रूषां क्लिष्टयोर्दुर्हृदा भृशम् ॥ ९ ॥ श्रीशुक उवाच ॥ इति मायामनुष्यस्य हरेर्विश्वात्मनो गिरा ॥ मोहितावङ्कमारोप्य परिष्वज्यापतुर्मुदम् ॥ १० ॥ सिञ्चन्तावश्रुधाराभिः स्नेहपाशेन चावृतौ ॥ न किंचिदूचतू राजन्बाष्पकण्ठौ विमोहितौ ॥ ११ ॥ एवमाश्वास्य पितरौ भगवान्देवकीसुतः ॥ मातामहं तूग्रसेनं यदूनामकरोन्नृपम् ॥ १२ ॥ आह चास्मान्महाराज प्रजाश्चाज्ञप्तुमर्हसि ॥ ययातिशापाद्यदुभिर्नासितव्यं नृपासने ॥ १३ ॥ मयि भृत्य उपासीने भवतो विबुधादयः ॥ बलिं हरन्त्यवनताः किमुतान्ये नराधिपाः ॥ १४ ॥ सर्वान्स्वान्ज्ञातिसम्बन्धान्दिग्भ्यः कंसभयाकुलान् ॥ यदुवृष्ण्यन्धकमधुदाशार्हकुकुरादिकान् ॥१५॥ सभाजितान्समाश्वास्य विदेशावासकर्शितान् ॥ न्यवासयत्स्वगेहेषु वित्तैः संतर्प्य विश्वकृत् ॥ १६ ॥ कृष्णसङ्कर्षणभुजैर्गुप्ता लब्धमनोरथाः ॥ गृहेषु रेमिरे सिद्धाः कृष्णरामगतज्वराः ॥ १७ ॥ वीक्षन्तोऽहरहः प्रीता मुकुन्दवदनांबुजम् ॥ नित्यं प्रमुदितं श्रीमत्सदयस्मितवीक्षणम् ॥१८॥ तत्र प्रवयसोऽप्यासन्युवानोऽतिबलौजसः ॥ पिबन्तोऽक्षैर्मुकुन्दस्य मुखांबुजसुधां मुहुः ॥१९॥ अथ नन्दं समासाद्य भगवान्देवकीसुतः ॥ सङ्कर्षणश्च राजेंद्र परिष्वज्येदमूचतुः ॥२०॥ पितर्युवाभ्यां स्निग्धाभ्यां पोषितौ लालितौ भृशम् ॥ पित्रोरभ्यधिका प्रीतिरात्मजेष्वात्मनोऽपि हि ॥२१॥ स पिता सा च जननी यौ पुष्णीतां स्वपुत्रवत् ॥ शिशून्बन्धुभिरुत्सृष्टानकल्पैः पोषरक्षणे ॥ २२ ॥ यात यूयं व्रजं तात वयं च स्नेहदुःखितान् ॥ ज्ञातीन्वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम् ॥२३॥ एवं सांत्वय्य भगवान्नन्दं सव्रजमच्युतः ॥ वासोऽलङ्कारकुप्याद्यैरर्हयामास सादरम् ॥ २४ ॥ इत्युक्तस्तौ परिष्वज्य नन्दः प्रणयविह्वलः ॥ पूरयन्नश्रुभिर्नेत्रे सह गोपैर्व्रजं ययौ ॥ २५ ॥ अथ शूरसुतो राजन्पुत्रयोः समकारयत् ॥ पुरोधसा ब्राह्मणैश्च यथावद्द्विजसंस्कृतम् ॥२६॥ तेभ्योऽदाद्दक्षिणा गावो

येषां ते ॥१७॥ सदयस्मितं वीक्षणं यस्मिंस्तत् ॥१८॥ प्रवयसो वृद्धा अप्यतिशयितं बलमोजश्च येषां ते ॥ १९ ॥ २० ॥ भृशमात्मनोऽप्याधिक्येन पोषितौ न चाश्चर्यमेतदित्याह । पित्रोरिति । आत्मनो देहादप्यात्मजेष्वभ्यधिका हि प्रीतिरिति ॥२१॥ देवकीवसुदेवयोः पुत्रौ युवां नास्मत्पुत्रावित्यपि न वाच्यमित्याह । स पितेति ॥२२॥२३॥ सव्रजं व्रजवासिभिः सहितम् । कुप्यानि स्वर्णरजतादिव्यतिरिक्तकांस्यपात्रादीनि तत्प्रभृतिभिः ॥२४॥२५॥ पुरोधसा गर्गाचार्येण द्विजसंस्कृतिमुपनयनम् ॥२६॥ गावो गाः रुक्मस्य माला विद्यंते यासां ताः । क्षौमवस्त्रमा-

लावतीः ॥२७॥ याः पूर्वं मनोदत्ता आसंस्ता एवाददात् । ननु ताः कंसेनापहृताः। सत्यम् । राजगोष्ठादाच्छिद्य दत्ता इत्याह। कंसेनाधर्मत इति॥२८॥ गायत्रं व्रतं ब्रह्मचर्यम् ॥२९॥ प्रकर्षेण भवंत्याभ्यामिति प्रभवौ । अतएव सर्वज्ञौ स्वतःसिद्धममलं ज्ञानं प्रच्छादयंतौ नरचेष्टितैः ॥३०॥३१॥ यथा यथावत्। उपसाद्य प्राप्य गुरौ वृत्तिमन्यान् ग्राहयंतौ शिक्षयंतौ । गुरुमुपेतावुपगतौ । सेवितवंतावित्यर्थः ॥३२॥ शुद्धो भावो यासु ताभिरनुवृत्तिभिः । सांगोपनिषदः अंगानि षडंगानि शिक्षादीनि तैरुपनिषद्भिश्च सहितान् ॥ ३३ ॥ सरहस्यं मंत्रदेवताज्ञानसहितम् । धर्मान्मन्वादिधर्मशास्त्राणि। न्यायपथान्मीमांसादीन्। आन्वीक्षिकीं तर्कविद्याम् । षड्विधां–संधिश्च विग्रहो यानमासनं द्वैधमाश्रयः॥ इत्येवं षड्विधां राजनीतिम् ॥३४॥ सकृन्निगदमात्रेणैकवारं गुरोरुच्चारणमात्रेण ॥३५॥ तावतीश्चतुःषष्टिकलाः ताश्च शैवतंत्रोक्ता लिख्यंते यथा–गीतम् १ । वाद्यम् २ । नृत्यम् ३ । नाट्यम् ४ । आलेख्यम् ५ । विशेषकच्छेद्यम् ६ । तंडुलकुसुमबलिविकाराः ७ । पुष्पास्तरणम् ८ । दशनवसनाङ्गरागाः ९ । मणिभूमिकाकर्म १० । शयनरचनम् ११ । उदकवाद्यमुदकघातः १२ । चित्रयोगाः १३ । माल्यग्रथनविकल्पाः १४ । शेखरापीडयोजनम् १५ ।

रुक्ममालाः स्वलंकृताः ॥ स्वलंकृतेभ्यः संपूज्य सवत्साः क्षौममालिनीः ॥ २७ ॥ या कृष्णरामजन्मर्क्षे मनोदत्ता महामतिः ॥ ताश्चाददादनुस्मृत्य कंसेनाधर्मतो हृताः ॥ २८ ॥ ततश्च लब्धसंस्कारौ द्विजत्वं प्राप्य सुव्रतौ ॥ गर्गाद्यदुकुलाचार्याद्गायत्रं व्रतमास्थितौ ॥ २९ ॥ प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ ॥ नान्यसिद्धामलज्ञानं गूहमानौ नरेहितैः ॥३०॥ अथो गुरुकुले वासमिच्छन्तावुपजग्मतुः ॥ काश्यं सांदीपनिं नाम ह्यवन्तिपुरवासिनम् ॥ ३१ ॥ यथोपसाद्य तौ दांतौ गुरौ वृत्तिमनिंदिताम् ॥ ग्राहयन्तावुपेतौ स्म भक्त्या देवमिवादृतौ ॥ ३२ ॥ तयोर्द्विजवरस्तुष्टः शुद्धभावानुवृत्तिभिः ॥ प्रोवाच वेदानखिलान्सांगोपनिषदो गुरुः ॥३३॥ सरहस्यं धनुर्वेदं धर्मान्न्यायपथांस्तथा ॥ तथा चान्वीक्षिकीं विद्यां राजनीतिं च षड्विधाम् ॥ ३४ ॥ सर्वं नरवरश्रेष्ठौ सर्वविद्याप्रवर्तकौ ॥ सकृन्निगदमात्रेण तौ सञ्जगृहतुर्नृप ॥ ३५ ॥ अहोरात्रैश्चतुःषष्ट्या संयत्तौ तावतीः कलाः ॥ गुरुदक्षिणयाऽऽचार्यं छन्दयामासतुर्नृप ॥३६॥ द्विजस्तयोस्तं महिमानमद्भुतं संलक्ष्य राजन्नतिमानुषीं मतिम्॥सम्मन्त्र्य पत्न्या स महार्णवे

नेपथ्ययोगाः १६ । कर्णपत्रभङ्गाः १७ । सुगंधयुक्तिः १८ । भूषणयोजनम् १९। ऐन्द्रजालम् २०। कौतुमारयोगाः २१। हस्तलाघवम् २२ । चित्रशाकापूपभक्ष्यविकारक्रियाः २३ । पानकरसरागासवयोजनम् २४। सूचीवायकर्म २५ । सूत्रक्रीडा २६ । वीणाडमरुकवाद्यानि २७ । प्रहेलिका २८ । प्रतिमाला २९ । दुर्वचकयोगाः ३०। पुस्तकवाचनम् ३१। नाटकाख्यायिकादर्शनम् ३२ । काव्यसमस्यापूरणम् ३३ । पट्टिकावेत्रबाणविकल्पाः ३४ । तर्ककर्माणि ३५ । तक्षणम् ३६ । वास्तुविद्या ३७ । रूप्यरत्नपरीक्षा ३८ । धातुवादः ३९ । मणिरागज्ञानम् ४० । आकरज्ञानम् ४१ । वृक्षायुर्वेदयोगाः ४२ । मेषकुक्कुटलावयुद्धविधिः ४३ । शुकसारिकप्रलापनम् ४४ । उत्सादनम् ४५ । केशमार्जनकौशलम् ४६ । अक्षरमुष्टिकाकथनम् ४७ । म्लेच्छितकुतर्कविकल्पाः ४८ । देशभाषाज्ञानम् ४९ । पुष्पशकटिकानिर्मितिज्ञानम् ५० । यंत्रमातृकाधारणमातृका ५१ । संवाच्यम् ५२। मानसी काव्यक्रिया ५३। अभिधानकोशः ५४ । छंदोज्ञानम् ५५। क्रियाविकल्पाः ५६ । छलितकयोगाः ५७ । वस्त्रगोपनानि ५८ । द्यूतविशेषः ५९ । आकर्षक्रीडा ६० । बालक्रीडनकानि ६१ । वैनायिकीनाम् ६२ । वैजयिकीनाम् ६३ । वैतालिकीनां । च

विद्यानां ज्ञानम् ६४ । इति चतुःषष्टिकलाः ॥३५॥ छंदयामासतुरुपलोभितवंतौ ॥३६॥ प्रभासे क्षेत्रे महार्णवे मृतं बालं वरयामास ॥३७॥ ईश्वराविति विदित्वा समुद्रस्तयोरर्हणमाजहार ॥३८॥ ॥ ३९ ॥ पंचजनस्त्वसुरोऽहार्षीत् । स च महान्ममासाध्य इत्यर्थः ॥४०॥४१॥४२॥४३॥ सपर्यां पूजाम् । सर्वेषां भूतानामाशया अंतःकरणानि तान्यालयो निवासो यस्य तम् ॥ ४४ ॥ निजं कर्मैव निबंधनं यस्य तथाभूतमपि मदाज्ञा पुरस्कारेणानयतस्ते न दोष इत्यर्थः ॥ ४५ ॥ ४६ ॥ वत्सेति प्राधान्येनैकस्य संबोधनम् । गुरोर्निष्क्रयो गुरुदक्षिणा । युष्मद्विधयोर्गुरोर्मम कामानां मध्ये को नु कामोऽवशिष्यते न कोऽपीति ॥४७॥ हे वीरौ ॥ ४८ ॥ अनिलवद्रंहो वेगो यस्य तेन। पर्जन्यो मेघस्तद्वन्निनदो यस्य तेन ॥ ४९ ॥ नष्टमदृष्टं तत्पुनर्लब्धं धनं याभिस्ता

मृतं बालं प्रभासे वरयांबभूव ह ॥ ३७ ॥ तथेत्यथारुह्य महारथौ रथं प्रभासमासाद्य दुरंतविक्रमौ ॥ वेलामुपव्रज्य निषीदतुः क्षणं सिंधुर्विदित्वाऽर्हणमाहरत्तयोः ॥ ३८ ॥ तमाह भगवानाशु गुरुपुत्रः प्रदीयताम् ॥ योऽसाविह त्वया ग्रस्तो बालको महतोर्मिणा ॥ ३९ ॥ समुद्र उवाच ॥ नैवाहार्षमहं देव दैत्यः पंचजनो महान् ॥ अंतर्जलचरः कृष्ण शंखरूपधरोऽसुरः ॥ ४० ॥ आस्ते तेनाहृतो नूनं तच्छ्रुत्वा सत्वरं प्रभुः ॥ जलमाविश्य तं हत्वा नापश्यदुदरेऽर्भकम् ॥ ४१ ॥ तदंगप्रभवं शंखमादाय रथमागमत् ॥ ततः संयमनीं नाम यमस्य दयितां पुरीम् ॥ ४२ ॥ गत्वा जनार्दनः शंखं प्रदध्मौ सहलायुधः ॥ शंखनिर्ह्रादमाकर्ण्य प्रजासंयमनो यमः ॥ ४३ ॥ तयोः सपर्यां महतीं चक्रे भक्त्युपबृंहिताम् ॥ उवाचावनतः कृष्णं सर्वभूताशयालयम् ॥ लीलामनुष्य हे विष्णो युवयोः करवाम किम् ॥४४॥ श्रीभगवानुवाच ॥ गुरुपुत्रमिहानीतं निजकर्मनिबन्धनम् ॥ आनयस्व महाराज मच्छासनपुरस्कृतः ॥ ४५ ॥ तथेति तेनोपानीतं गुरुपुत्रं यदूत्तमौ ॥ दत्त्वा स्वगुरवे भूयो वृणीष्वेति समूचतुः ॥४६॥ गुरुरुवाच ॥ सम्यक्संपादितो वत्स भवद्भ्यां गुरुनिष्क्रयः ॥ को नु युष्मद्विधगुरोः कामो नामावशिष्यते ॥४७॥ गच्छतं स्वगृहं वीरौ कीर्तिर्वामस्तु पावनी ॥ छन्दांस्ययातयामानि भवंत्विह परत्र च ॥ ४८ ॥ गुरुणैवमनुज्ञातौ रथेनानिलरंहसा ॥ आयातौ स्वपुरं तात पर्जन्यनिनदेन वै ॥ ४९ ॥ समनन्दन्प्रजाः सर्वा दृष्ट्वा रामजनार्दनौ ॥ अपश्यंत्यो बह्वहानि नष्टलब्धधना इव ॥५०॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे गुरुपुत्रानयनं नाम पंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ श्रीशुक उवाच ॥ वृष्णीनां प्रवरो मन्त्री कृष्णस्य दयितः सखा ॥ शिष्यो बृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः ॥ १ ॥ तमाह भगवान्प्रेष्ठं भक्तमेकांतिनं क्वचित् ॥ गृहीत्वा पाणिना पाणिं प्रपन्नार्तिहरो हरिः ॥२॥ गच्छोद्धव व्रजं सौम्य पित्रोर्नौ प्रीतिमावह ॥ गोपीनां मद्वियोगाधिं मत्संदेशैर्विमोचय ॥ ३ ॥ ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः ॥ ये त्यक्तलोकधर्माश्च मदर्थे तान्बिभर्म्यहम् ॥४॥ मयि ताः

इवेति ॥ ५० ॥ इति दशमस्कंधे पूर्वार्धे टीकायां पञ्चचत्वारिंशोऽध्यायः ॥४५॥ षट्चत्वारिंशके घोषमुद्धवं प्रेष्य तद्गिरा ॥ यशोदानंदयोश्चक्रे कृष्णः शोकापनोदनम् ॥१॥ कामचारं द्विजातिः सन्परित्यज्यातिसंयतः ॥ गुरोर्ज्ञानमनुप्राप्य सख्या गोपीरुपादिशत् ॥ २ ॥ गोपीनां सांत्वनमपि रहस्यं सन्मंत्रिसाध्यमिति तदर्थमुद्धवं विशिनष्टि । वृष्णीनामिति । बुद्धिसत्तमो बुद्ध्याऽतिश्रेष्ठः ॥ १ ॥ २ ॥ ३ ॥ गोपीनां विशेषतः संदेशे कारणमाह । ता इति । मय्येव संकल्पात्मकं मनो यासां ताः । अहमेव प्राणो यासां ताः । मदर्थे त्यक्ता दैहिकाः पतिपुत्रादयो याभिस्ताः ।

ततः किमत आह । ये त्यक्तलोकधर्मा इति । मन्निमित्तं त्यक्तौ लोकधर्माविहामुत्र सुखे तत्साधनानि च यैस्तान् बिभर्मि पोषयामि । संवर्धयामि सुखयामीत्यर्थः ॥ ४ ॥ तासां वियोगार्तिं दर्शयति द्वयेन । मयि ता इति । विरहेणौत्कंठ्यं तेन विह्वलाः परवशाः ॥५॥ गोकुलान्निर्गमनसमये शीघ्रमागमिष्यामीति ये प्रत्यागमनसंदेशास्तैः । मे मदीया बल्लव्यो गोप्यः । मदात्मिका इति तासामात्मा यदि स्वदेहे स्यात्तर्हि विरहतापेन दह्येतैव तस्य मयि वर्तमानत्वात्कथंचिज्जीवंतीति भावः ॥६॥ संदेशं भवतीनां वियोगो मे न हि सर्वात्मना क्वचिदित्यादिकम् ॥७॥ निम्लोचत्यस्तं गच्छति सति । छन्नं यानं यस्येति तदा गोपीभिरज्ञातत्वेन नंदसंगं लब्धवानिति सूचयति ॥८॥ व्रजं वर्णयति पञ्चभिर्वासितार्थ इत्यादिना । वासिताः पुष्पवत्यो गावस्तन्निमित्तमभितो युध्यद्भिः

प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः ॥ स्मरंत्योऽङ्ग विमुह्यंति विरहौत्कंठ्यविह्वलाः ॥ ५ ॥ धारयंत्यतिकृच्छ्रेण प्रायः प्राणान्कथंचन ॥ प्रत्यागमनसंदेशैर्बल्लव्यो मे मदात्मिकाः ॥ ६ ॥ श्रीशुक उवाच ॥ इत्युक्त उद्धवो राजन्संदेशं भर्तुरादृतः ॥ आदाय रथमारुह्य प्रययौ नन्दगोकुलम् ॥ ७ ॥ प्राप्तो नंदव्रजं श्रीमान्निम्लोचति विभावसौ ॥ छन्नयानः प्रविशतां पशूनां खुररेणुभिः ॥ ८ ॥ वासितार्थेऽभियुद्ध्यद्भिर्नादितं शुष्मिभिर्वृषैः ॥ धावंतीभिश्च वास्राभिरूधोभारैः स्ववत्सकान् ॥ ९ ॥ इतस्ततो विलंघद्भिर्गोवत्सैर्मंडितं सितैः ॥ गोदोहशब्दाभिरवं वेणूनां निःस्वनेन च ॥ १० ॥ गायंतीभिश्च कर्माणि शुभानि बलकृष्णयोः ॥ स्वलंकृताभिर्गोपीभिर्गोपैश्च सुविराजितम् ॥११॥ अग्न्यर्कातिथिगोविप्रपितृदेवार्चनान्वितैः ॥ धूपदीपैश्च माल्यैश्च गोपावासैर्मनोरमम् ॥ १२ ॥ सर्वतः पुष्पितवनं द्विजालिकुलनादितम् ॥ हंसकारंडवाकीर्णैः पद्मषंडैश्च मंडितम् ॥ १३ ॥ तमागतं समागम्य कृष्णस्यानुचरं प्रियम् ॥ नंदः प्रीतः परिष्वज्य वासुदेवधियाऽऽर्चयत् ॥ १४ ॥ भोजितं परमान्नेन संविष्टं कशिपौ सुखम् ॥ गतश्रमं पर्यपृच्छत्पादसंवाहनादिभिः ॥ १५ ॥ कच्चिदंग महाभाग सखा नः शूरनन्दनः ॥ आस्ते कुशल्यपत्याद्यैर्युक्तो मुक्तः सुहृद्वृतः ॥१६॥ दिष्ट्या कंसो हतः पापः सानुगः स्वेन पाप्मना ॥ साधूनां धर्मशीलानां यदूनां द्वेष्टि यः सदा ॥ १७ ॥ अपि स्मरति नः कृष्णो मातरं सुहृदः सखीन् ॥ गोपान् व्रजं चात्मनाथं गावो वृंदावनं गिरिम् ॥ १८ ॥ अप्यायास्यति गोविंदः स्वजनान्सकृदीक्षितुम् ॥ तर्हि द्रक्ष्याम तद्वक्त्रं सुनसं सुस्मितेक्षणम् ॥ १९ ॥ दावाग्नेर्वातवर्षाच्च वृषसर्पाच्च रक्षिताः ॥ दुरत्ययेभ्यो मृत्युभ्यः कृष्णेन सुमहात्मना ॥ २० ॥ स्मरतां कृष्णवीर्याणि लीलाऽपांगनिरीक्षितम् ॥ हसितं भाषितं

शुष्मिभिर्मत्तैर्वृषैर्नादितम् । वास्राभिर्धेनुभिः । स्ववत्सकान्प्रति ॥ ९ ॥ विलंघद्भिरुत्पतद्भिः गोदोहशब्दैः सहाभितो रवाः मुंच मा मुंच नय आनय देहि गृहाणेत्यादयो यस्मिंस्तम् । वेणूनां निःस्वनेन च मंडितम् ॥ १० ॥ गायंतीभिर्गोपीभिर्गोपैश्च सुविराजितम् ॥ ११ ॥ अग्न्याद्यर्चनान्वितैर्गोपगृहैर्धूपादिभिश्च मनोरमम् ॥ १२ ॥ षंडैः समूहैः ॥ १३ ॥ आर्चयत्पूजयामास ॥१४॥ कशिपौ शय्यायां संविष्टम् ॥ १५ ॥ १६ ॥ साधूनामिति । कर्मणि षष्ठ्यः ॥ १७ ॥ गावो गाः । गिरिं गोवर्धनम् ॥ १८ ॥ अप्यायास्यत्यागमिष्यति किम् ॥ १९ ॥ श्रीकृष्णोपकारस्मरणादिभिरनुपमानंदेनाभिभूयमान आह । दावाग्नेरित्यादिना । वाताद्वर्षाच्चेति वृषात्सर्पाच्चेति अन्येभ्यश्च दुरतिक्रमेभ्यो मृत्युभ्यः श्रीकृष्णेन रक्षिताः स्म ॥२०॥ किंच स्मरतामिति लीलयाऽपांगेन

निरीक्षितम् । अंग हे उद्धव ॥ २१ ॥ न केवलं शिथिला एव किंतु शनैरुपरमंतीत्याह । सरिच्छैलेति । सरितश्च शैलाश्च वनोद्देशाश्च तान् । आक्रीडान् क्रीडास्थानानि ॥ २२ ॥ सुराणामर्थाय महद्गंभीरं गर्गस्य वचनं यथा ॥ २३ ॥ न केवलं तद्वचनानुसारेणैव व्यवहारसंवादादपीत्याह । कंसमिति ॥२४॥ इभराड्यष्टिमिव तालत्रयप्रमाणं धनुर्बभंज ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ ॥२९॥३०॥ अखिलगुरुत्वमेव जनकत्वेन नियंतृत्वेन चाह । एताविति । रामो मुकुन्दश्चेत्येतौ विश्वस्य बीजयोनी निमित्तोपादाने । ननु पुरुषप्रधानयोर्बीजयोनित्वं प्रसिद्धमत आह । पुरुषः प्रधानमिति । पुरुषोंऽशः प्रधानं शक्तिः अतः प्रधानपुरुषावप्येतावेवेत्यर्थः । एवं जनकत्वमुक्तम् । किंच । अन्वीय भूतेषु भूतेष्वनुप्रविश्य भूतानां तदुपहितस्य विलक्षणस्य नानाभेदस्य ज्ञानस्य जीवस्य चेशाते ईश्वरौ नियंतारौ भवतः । कुतः । पुराणावनादी । अनादित्वात्कारणत्वं ततश्च नियंतृत्वमित्यर्थः ॥३१॥ ननु सृष्ट्यादिकर्मावेशान्मनुष्यादिजन्मदर्शनाच्च तस्यान्येभ्यः को विशेष

चांग सर्वा नः शिथिलाः क्रियाः ॥२१॥ सरिच्छैलवनोद्देशान्मुकुन्दपदभूषितान् ॥ आक्रीडानीक्षमाणानां मनो याति तदात्मताम् ॥२२॥ मन्ये कृष्णं च रामं च प्राप्ताविह सुरोत्तमौ ॥ सुराणां महदर्थाय गर्गस्य वचनं यथा ॥२३॥ कंसं नागायुतप्राणं मल्लौ गजपतिं यथा ॥ अवधिष्टां लीलयैव पशूनिव मृगाधिपः ॥२४॥ तालत्रयं महासारं धनुर्यष्टिमिवभराट् ॥ बभंजैकेन हस्तेन सप्ताहमदधाद्गिरिम् ॥ २५ ॥ प्रलंबो धेनुकोऽरिष्टस्तृणावर्तो बकादयः ॥ दैत्याः सुरासुरजितो हता येनेह लीलया ॥२६॥ श्रीशुक उवाच ॥ इति संस्मृत्य संस्मृत्य नंदः कृष्णानुरक्तधीः ॥ अत्युत्कंठोऽभवत्तूष्णीं प्रेमप्रसरविह्वलः ॥ २७ ॥ यशोदा वर्ण्यमानानि पुत्रस्य चरितानि च ॥ शृण्वंत्यश्रूण्यवास्राक्षीत्स्नेहस्नुतपयोधरा ॥ २८ ॥ तयोरित्थं भगवति कृष्णे नंदयशोदयोः ॥ वीक्ष्यानुरागं परमं नंदमाहोद्धवो मुदा ॥२९॥ उद्धव उवाच ॥ युवां श्लाघ्यतमौ नूनं देहिनामिह मानद ॥ नारायणेऽखिलगुरौ यत्कृता मतिरीदृशी ॥३०॥ एतौ हि विश्वस्य च बीजयोनी रामो मुकुंदः पुरुषः प्रधानम् ॥ अन्वीय भूतेषु विलक्षणस्य ज्ञानस्य चेशात इमौ पुराणौ ॥३१॥ यस्मिन् जनः प्राणवियोगकाले क्षणं समावेश्य मनो विशुद्धम् ॥ निर्हृत्य कर्माशयमाशु याति परां गतिं ब्रह्ममयोऽर्कवर्णः ॥ ३२ ॥ तस्मिन्भवंतावखिलात्महेतौ नारायणे कारणमर्त्यमूर्तौ ॥ भावं विधत्तां नितरां महात्मन्किंवाऽवशिष्टं युवयोः सुकृत्यम् ॥ ३३ ॥ आगमिष्यत्यदीर्घेण कालेन व्रजमच्युतः ॥ प्रियं विधास्यते पित्रोर्भगवान्सात्वतां पतिः ॥ ३४ ॥ हत्वा कंसं रङ्गमध्ये प्रतीपं सर्वसात्वताम् ॥ यदाह वः समागत्य कृष्णः सत्यं करोति तत् ॥ ३५ ॥ मा खिद्यतं महाभागौ द्रक्ष्यथः कृष्णमंतिके ॥ अंतर्हृदि स भूतानामास्ते ज्योतिरिवैधसि ॥३६॥

इत्याशंक्याह । यस्मिन्निति द्वाभ्याम् । कर्माशयं कर्मवासनां निर्हृत्य त्यक्त्वा ब्रह्ममयः स्वरूपज्ञानवानर्कवर्णः शुद्धसत्त्वमूर्तिः सन्परां गतिं तत्पदं याति ॥३२॥ अखिलस्यात्मा य हेतुश्च तस्मिन्। कारणेन मनुष्याकृतौ महात्मन्महात्मनि परिपूर्णे भवंतौ भक्तिं कुरुतः । अतः कृतकृत्यावित्यर्थः ॥३३॥ प्रस्तुतमाह । आगमिष्यतीति । पित्रोर्युवयोः ॥३४॥ यात यूयं व्रजं तात वयं च स्नेहदुःखितान् ॥ ज्ञातीन्वो द्रष्टुमेष्यामो विधाय सुहृदां सुखमिति यदाह कृष्णस्तत्सत्यं करिष्यतीति ॥३५॥ कालविलंबनमसहमानौ प्रत्याह । मा खिद्यतमिति । हे महाभागौ । अंतिके इदानीमेव समीपे वा । कुत इत्यत्र आह। अंतर्हृदीति । तर्हि सर्वैः किमिति न दृश्यते तत्राह । ज्योतिरिवैधसीति । तद्यथा मथनं विना न दृश्यते तथा भक्तिं विना कृष्णोऽपीति भावः ॥३६॥ अहो आस्तामेतत्तस्य

त्विहागमनं स्वस्यातिप्रियान्पित्रादीन्विहाय न संगच्छत इति मन्येत तत्राह । न ह्यस्येति । अस्य प्रियादयो न हि संति । तत्र हेतू । अमानिनः समानस्येति च ॥ ३७ ॥ ३८ ॥ सोऽपि जन्म-कर्मादिरहितः क्रीडाप्रयोजनः सन्स साधूनां परिपालनाय सदसन्मिश्रयोनिषु सात्त्विकराजसतामसयोनिषु यद्वा देवादिमत्स्यादिनृसिंहादियोनिषु कल्पते आविर्भवतीत्यर्थः ॥ ३९ ॥ ननु जन्म-कर्मादिरहितस्य कुत एतदित्यत आह । सत्त्वमिति । क्रीडामतीतोऽपि क्रीडन् तथापि मायागुणैर्घटत इत्यर्थः ॥४०॥ अत्राविद्योपाधेर्जीवस्य कर्तृत्वं दृष्टांतीकुर्वंस्तस्याविद्ययैव कर्तृत्वमिति सदृष्टांत-माह । यथेति । भ्रमरिका परिभ्रमणं तयोपलक्षितया दृष्ट्या भूरपि भ्राम्यतीति तथा प्रतीयते । एवं चित्ते कर्तरि सति तत्र चित्तेऽहंधिया आत्माध्यासेनात्मा कर्ता स्मृतो यथा तद्वदिति ॥४१॥ किंच युवयोरेव नायमात्मजः किंतु सर्वेषामपि तत्रापि नात्मज एव किंतु शत्रुमित्रादिरूपोऽपीति सर्वात्मत्वनिरूपणेन मोहनिवृत्तये संबंधमनैकांतिकीकरोति । युवयोरेवेति द्वाभ्याम् ॥४२॥ अच्यु-

न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियो वाऽस्त्यमानिनः ॥ नोत्तमो नाधमो वाऽपि समानस्यासमोऽपि वा ॥३७॥ न माता न पिता तस्य न भार्या न सुतादयः ॥ नात्मीयो न परश्चापि न देहो जन्म एव च ॥ ३८ ॥ न चास्य कर्म वा लोके सदसन्मिश्रयोनिषु ॥ क्रीडार्थं सोऽपि साधूनां परित्राणाय कल्पते ॥ ३९ ॥ सत्त्वं रजस्तम इति भजते निर्गुणो गुणान् ॥ क्रीडन्नतीतोऽत्र गुणैः सृजत्यवति हंत्यजः ॥४०॥ यथा भ्रमरिकादृष्ट्या भ्राम्यतीव महीयते ॥ चित्ते कर्तरि तत्रात्मा कर्तेवाहंधिया स्मृतः ॥४१॥ युवयोरेव नैवायमात्मजो भगवान्हरिः ॥ सर्वेषामात्मजो ह्यात्मा पिता माता स ईश्वरः ॥ ४२ ॥ दृष्टं श्रुतं भूतभवद्भविष्यत्स्थास्नुश्चरिष्णुर्महदल्पकं च ॥ विनाऽच्युताद्वस्तुतरां न वाच्यं स एव सर्वं परमार्थभूतः ॥ ४३ ॥ एवं निशा सा ब्रुवतोर्व्यतीता नंदस्य कृष्णानुचरस्य राजन् ॥ गोप्यः समुत्थाय निरूप्य दीपान्वास्तून्समभ्यर्च्य दधीन्यमंथन् ॥ ४४ ॥ ता दीप-दीप्तैर्मणिभिर्विरेजू रज्जूर्विकर्षद्भुजकङ्कणस्रजः ॥ चलन्नितंबस्तनहारकुण्डलत्विषत्कपोलारुणकुंकुमाननाः ॥ ४५ ॥ उद्गायतीनामरविंदलोचनं व्रजांगनानां दिवमस्पृशद्ध्वनिः ॥ दध्नश्च निर्मंथनशब्दमिश्रितो निरस्यते येन दिशाममङ्गलम् ॥४६॥ भगवत्युदिते सूर्ये नंदद्वारि व्रजौकसः ॥ दृष्ट्वा रथं शातकौंभं कस्यायमिति चाब्रुवन् ॥ ४७ ॥ अक्रूर आगतः किं वा यः कंसस्यार्थसाधकः ॥ येन नीतो मधुपुरीं कृष्णः कमललोचनः ॥ ४८ ॥ किं साधयिष्यत्यस्माभिर्भर्तुः प्रीतस्य निष्कृतिम् ॥ इति स्त्रीणां वदंतीनामुद्धवोऽगात्कृताह्निकः ॥ ४९ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे

तद्विनातरां नितरां तत्त्वतो वाच्यं निर्वचनार्हं वस्तु नास्तीति ॥४३॥ दीपान्निरूप्य प्रज्वाल्य । वास्तून्देहल्यादीन् ॥ ४४ ॥ मणिभिः कांच्यादिषु स्थितैः रज्जूर्विकर्षत्सु भुजेषु कंकणानां स्रजो यासां ताः । चलंतो नितंबाः स्तना हाराश्च यासां ताः । कुण्डलैस्त्विषंतः स्फुरन्तः कपोला यासां ताः । अरुणानि कुंकुमानि येषु तान्याननानि यासां ताः । एवं ताश्च ताश्च ॥४५॥४६॥ तदा व्रजौकसो गोप्यः ॥ ४७ ॥ सक्रोधमाहुः अक्रूर इति । अर्थं साधितवानित्यर्थसाधकः । तदाहुः । येन नीत इति ॥ ४८ ॥ कंसं घातयित्वा पुनः किमर्थमागत इत्याशंक्य स्वयमेव कारणं संभावयंति । किमिति । तदा साधितेन कार्येण प्रीतस्य तुष्टस्य भर्तुः । पाठांतरे प्रेतस्य मृतस्य कंसस्य निष्कृतिमौर्ध्वदैहिकमस्माभिः कृत्वा साधयिष्यते किम् । अस्मन्मांसैः पिंडान्कृत्वा दास्यतीत्यर्थः । इत्येवं

वदंतीनां स्त्रीणां ततस्तस्मिन्नवसरे कृताह्निकः कृतस्नानादिनियम उद्धव आगत इति ॥४९॥ इति दशमस्कंधे पूर्वार्धे टीकायां षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ सप्तचत्वारिंशकेऽथ कृष्णादेशेन गोपिकाः ॥ बोधयित्वोद्धवस्तत्रमनुज्ञाप्यागमत्पुरीम् ॥१॥१॥ अपीच्यं सुंदरं दर्शनं यस्य सः । अच्युतस्येव वेषो भूषणानि च यस्य सः। कोऽयं कुतो वा कस्य चेति वदंत्यस्तं परिवव्रुः ॥२॥ ॥ ३ ॥ पार्षदं सेवकम् ॥ ४ ॥ पित्रोः प्रियचिकिर्षयत्यत्र हेतुः । स्नेहानुबंध इति ॥५॥ अन्यथा गोव्रजे तस्येत्यत्र हेतुः । अन्येष्विति । अर्थकृता कार्यनिमित्ता । विडंबनमनुकरणमात्रं न तु तात्त्विकी मैत्री । पुंभिरिति दृष्टांतौ ॥ ६ ॥ अस्य वान्यार्थनिदर्शनैः प्रपंचः निःस्वमित्यादिना । दत्ता दक्षिणा येन तं याज्यम् ॥७॥ पक्षिणो विगतफलं वृक्षम् । रतामनरक्तामतृप्तामित्यर्थः ॥८॥ त्यक्तलौकिकास्त्यक्तलोकव्यवहाराः ॥९॥ प्रियस्य कार्याणि गायंत्यस्तथा तस्य बाल्यकैशोरयोर्यानि कर्माणि तानि संस्मृत्य संस्मृत्य गतह्रियः सत्यो रुदत्यश्च तमपृच्छन्निति पूर्वक्रिय-

नन्दशोकापनयनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ श्रीशुक उवाच ॥ तं वीक्ष्य कृष्णानुचरं व्रजस्त्रियः प्रलम्बबाहुं नवकंजलोचनम् ॥ पीतांबरं पुष्करमालिनं लसन्मुखारविंदं मणिमृष्टकुण्डलम् ॥ १ ॥ शुचिस्मिताः कोऽयमपीच्यदर्शनः कुतश्च कस्याच्युतवेषभूषणः ॥ इति स्म सर्वाः परिवव्रुरुत्सुकास्तमुत्तमश्लोकपदांबुजाश्रयम् ॥२॥ तं प्रश्रयेणावनताः सुसत्कृतं सव्रीडहासेक्षणसूनृतादिभिः ॥ रहस्यपृच्छन्नुपविष्टमासने विज्ञाय संदेशहरं रमापतेः ॥ ३ ॥ जानीमस्त्वां यदुपतेः पार्षदं समुपागतम् ॥ भर्त्रेह प्रेषितः पित्रोर्भवान्प्रियचिकीर्षया ॥ ४ ॥ अन्यथा गोव्रजे तस्य स्मरणीयं न चक्ष्महे ॥ स्नेहानुबन्धो बंधूना मुनेरपि सुदुस्त्यजः ॥ ५ ॥ अन्येष्वर्थकृता मैत्री यावदर्थविडम्बनम् ॥ पुंभिः स्त्रीषु कृता यद्वत्सुमनःस्विव षट्पदैः ॥ ६ ॥ निःस्वं त्यजन्ति गणिका अकल्पं नृपतिं प्रजाः ॥ अधीतविद्या आचार्यमृत्विजो दत्तदक्षिणम् ॥ ७ ॥ खगा वीतफलं वृक्षं भुक्त्वा चातिथयो गृहम् ॥ दग्धं मृगास्तथाऽरण्यं जारो भुक्त्वा रतां स्त्रियम् ॥ ८ ॥ इति गोप्यो हि गोविंदे गतवाक्कायमानसाः ॥ कृष्णदूते व्रजं याते उद्धवे त्यक्तलौकिकाः ॥ ९ ॥ गायंत्यः प्रियकर्माणि रुदत्यश्च गतह्रियः ॥ तस्य संस्मृत्य संस्मृत्य यानि कैशोरबाल्ययोः ॥१०॥ काचिन्मधुकरं दृष्ट्वा ध्यायंती कृष्णसंगमम् ॥ प्रियप्रस्थापितं दूतं कल्पयित्वेदमब्रवीत् ॥ ११ ॥ गोप्युवाच ॥ मधुप कितवबन्धो मा स्पृशांघ्रिं सपत्न्याः कुचविलुलितमालाकुंकुमश्मश्रुभिर्नः ॥ वहतु मधुपतिस्तन्मानिनीनां प्रसादं यदुसदसि विडम्ब्यं यस्य दूतस्त्वमीदृक् ॥ १२ ॥ सकृदधरसुधां स्वां मोहिनीं पाययित्वा सुमनस

यैव संबंधः ॥१०॥ प्रियेण श्रीकृष्णेन मां प्रसादयितुं प्रस्थापितोऽयं दूत इति कल्पयित्वाऽब्रवीत् । यद्वा । तस्मिन्नप्युद्धवे प्रियस्थापितं दूतमिति दूतदृष्टिं कृत्वा मधुकरापदेशेनोद्धमेवाब्रवीदित्यर्थः ॥११॥ हे मधुप कितवस्य धूर्तस्य बंधो ! नोऽस्माकमंघ्रिं मा स्पृश । मा मां नमस्कारेण प्रार्थयस्वेत्यर्थः । तत्किमित्यपेक्षायां कृष्णवर्णस्य तस्य श्मश्रूणां लोहितत्वे कारणमुत्प्रेक्षमाणाऽऽह । सपत्न्याः कुचाभ्यां लुलिता संमर्दिता या कृष्णस्य वनमाला अतएव तस्याः कुंकुमं येषु तैः श्मश्रुभिरुपलक्षितः । किंतु तासामेव मानिनीनां प्रसादं मधुपतिर्वहतु किमस्मत्प्रसादनेन तस्य । यदुसदसि विडंब्यमुपहासास्पदम् । कुतः । यस्य दूतस्त्वमीदृगीदृशः ॥१२॥ ननु किमित्येवं तमवजानीथ। किं वस्तेनापकृतमत आह । सकृदिति । भवादृक् त्वादृशो दुर्मनाः सुमनसः कुसुमानि यथा

त्यजति तद्वत् । अहो बताविज्ञस्य तस्य पादपद्मं श्रीः कथं सेवते । विदितं मयेत्याह । अपीति । बतेति खेदे । उत्तमश्लोकस्य जल्पैर्मिथ्याकथाभिः प्रलापैः प्रायो हृतचेताः वयं तु न लक्ष्मीवदविचक्षण इति भावः ॥१३॥ झंकारान्बहुधा कुर्वंतमस्मत्प्रसादलाभाय कृष्णं गायतीति मत्वाऽऽह । किमिहेति । पुराणं पुरातनं बहुशोऽनुभूतम् । विजयसखस्य श्रीकृष्णस्य सांप्रतं याः सख्यस्तासामग्रतस्तत्प्रसंगो गीयताम् । इष्टाः कृष्णस्य प्रियाः तेन पूजिता इति वा तेनालिंगितेन क्षपिता कुचरुग्यासां तास्तवेष्टमपेक्षितं दास्यंतीति ॥ १४ ॥ मा मातर्मैवं वोचस्त्वामनुस्मृत्यानंगविक्लवस्त्वां प्रसादयितुं मामादिष्टवानित्यत आह । दिवीति । रसातले च याः स्त्रियः स्युस्ताः का नाम दुरापा न काश्चन । तदित्यव्ययम् । तस्येत्यर्थः । कपटेन रुचिरेण हासेन भ्रूविजृम्भो यस्य तस्य । हे कपट इति वा । किंच । यस्य चरणरजः श्रीः सेवते तत्र वयं काः । अपि च यद्यप्येवं तथापि कृपणपक्षे कृपणानुकंपिनि पुंस्युत्तमश्लोकशब्दो भवतीति तथा कथनीयं त्वयेति भावः ॥१५॥ पादमूले प्रविशंतं क्षमापयिष्यंतमिव मत्वाऽऽह । विसृजेति । शिरसि न्यस्तं पादं विसृज । तथाऽप्यमुंचंतमाह । वेद्मीति । मुकुंदादभ्येत्य ततः शिक्षित्वेत्यर्थः । दौत्यैर्दूतकर्मभिश्चाटुकारैः प्रियोक्तिरचनाभिरनुनयविदुषः प्रार्थनाचतुरस्य ते तव सर्वमहं वेद्मि । मुकुंदवत्त्वमप्यविश्वसनीय इति भावः । ननु तेन किमपराद्धं तत्राह । स्वकृत इति । स्वकृते तदर्थमेव विसृष्टा अपत्यपत्यन्यलोकाः अपत्यानि

इव सद्यस्तत्यजेऽस्मान्भवादृक् ॥ परिचरति कथं तत्पादपद्मं तु पद्मा ह्यपि बत हृतचेता उत्तमश्लोकजल्पैः ॥ १३ ॥ किमिह बहु षडंघ्रे गायसि त्वं यदूनामधिपतिमगृहाणामग्रतो नः पुराणम् ॥ विजयसखसखीनां गीयतां तत्प्रसंगः क्षपितकुचरुजस्ते कल्पयंतीष्टमिष्टाः ॥१४॥ दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः कपटरुचिरहासभ्रूविजृम्भस्य याः स्युः ॥ चरणरज उपास्ते यस्य भूतिर्वयं का अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः ॥ १५ ॥ विसृज शिरसि पादं वेद्म्यहं चाटुकारैरनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुंदात् ॥ स्वकृत इह विसृष्टापत्यपत्यन्यलोका व्यसृजदकृतचेताः किं नु संधेयमस्मिन् ॥१६॥ मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम् ॥ बलिमपि बलिमत्त्वाऽवेष्टयद्ध्वांक्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथाऽर्थः ॥१७॥ यदनुचरितलीलाकर्णपीयूषविप्रुट्सकृददनविधूतद्वंद्वधर्मा विनष्टाः ॥ सपदि गृहकुटुंबं दीनमुत्सृज्य दीना बहव इति

पतयश्चेतीह लोकोऽन्यलोको धर्मसाध्यश्च याभिस्ताः । नः अकृतचेता असंयतचित्तो यो व्यसृजदस्मिन्किं नु संधातव्यमिति ॥१६॥ किंच कृष्णस्य पूर्वाणि कर्माण्यनुसंदधाना बिभेम्यहमस्मादित्याह । मृगयुरिवेति । मृगयुर्लुब्धक इव यः कपींद्रं वालिनं विव्यधे अविध्यत् । लुब्धधर्मा क्रौर्यवान् । अलुब्धधर्मेति वा । लुब्धको हि तन्मांसमत्तुकामो विध्यत्ययं तु न तथाऽतो वृथा कठिन इत्यर्थः । तथा स्त्रियं शूर्पणखां स्त्रीजितः सीतापरतंत्रः काम एव यानं प्राप्तिसाधनं यस्यास्तां विरूपां छिन्नकर्णनासिकामकरोद्दाशरथिरूपेण । तथा बलिमपि तद्दत्तं बलिमत्वा भक्षयित्वा ध्वांक्षवत्काकवदवेष्टयद्बबंध वामनरूपेण । बलिमत्त्वाऽधोऽक्षिपद्विष्टपाद्य इति पाठे बलिं पूजां गृहीत्वा विष्टपात्स्वर्गादधोऽक्षिपदित्यर्थः । तत्तस्मादसितस्य सख्यैरलम् । एवं चेत्किमिति तं नित्यं गायथ तत्राह । दुस्त्यजस्तु तस्य कथारूपोऽर्थ इति ॥१७॥ अपि च । जानीम एव तत्कथाऽपि त्रिवर्गलतामूलोन्मूलनीति तथापि न त्यक्तुं शक्नुमः । किं कुर्म इत्याह । यदनुचरितेति । यस्यानुचरितमेव लीला तदेव कर्णपीयूषं तस्य विप्रुट् कणिका तस्याः सकृददनं सेवनं तेन विधूता निरस्ता द्वंद्वधर्मा रागादयो येषां तेऽतएव विनष्टा असत्तुल्या दीनं दुःखितं गृहकुटुंबं विहाय दीना भोगहीना विहंगा अपि भिक्षुचर्यां प्राणवृत्तिमात्रं चरंत्यतस्त्याज्यस्तथापि त्यक्तुं न शक्नुम इति निंदापरत्वेऽयं तावच्छ्रौतोऽर्थः । दुस्त्यजत्वेऽपि पारमार्थिकोऽयमर्थः । विधूतद्वन्द्वधर्मा इत्यंतः समासः पूर्ववत् ।

ततस्ते च ते अविनष्टाश्चेति समासः । इतरे पुनर्द्वंद्वधर्माणो विनष्टा एव । सपदि तत्क्षणमेव दीनं तुच्छं गृहसहितकुटुंबं विहाय दीना इवाकिंचनाः । धीरा इति वा पाठः। बहवो विहङ्गा हंसा इव सारासारविवेकचतुरा भिक्षुचर्यां पारमहंस्यं चरंति । तस्मादेवं परमपुरुषा रूपत्वाद्दुस्त्यज एव तत्कथार्थ इति ॥१८॥ ननु किमेवं ब्रूषे पूर्वं त्वयैव साकं रहसि किमेवं नावोचदित्यत आह। वयमिति । हे उपमंत्रिन् दूत । आस्तामियं वार्ता । यतः कुलिकस्य मृगयोः रुतं गीतमज्ञा यथा ऋतं सत्यमिति श्रद्धानाः कृष्णस्य हरिणस्य वध्वो भार्या हरिण्यः शरैः क्षताः सत्यो रुजो ददृशुः। एवं जिह्मस्य कुटिलस्य तस्य व्याहृतममृतमिव श्रद्धानाः स्पृहयंत्यो वयमसकृदेतद्ददृशिम । किं तत् । तस्य नखैः स्पर्शस्तेन तीव्रः स्मरस्तेन रुजः पीडाः तस्मादन्या वार्ता भण्यतां कथ्यतामिति ॥१९॥ परावृत्य गत्वा पुनरागतं प्रत्याह। प्रियसखेति। हे प्रियस्य सखे! प्रेयसा कृष्णेन पुनः प्रेषितः किं त्वमागतोऽसि । अङ्ग हे दूत! मे माननीयः पूज्योऽसि । अतो भवान् किमनुरुंधे प्राप्तुमिच्छतीत्यर्थः।

विहङ्गा भिक्षुचर्यां चरंति ॥ १८ ॥ वयमृतमिव जिह्मव्याहृतं श्रद्धानाः कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः ॥ ददृशुरसकृदेतत्तन्नखस्पर्शतीव्रस्मररुज उपमन्त्रिन्भण्यतामन्यवार्ता ॥१९॥ प्रियसख पुनरागाः प्रेयसा प्रेषितः किं वरय किमनुरुंधे माननीयोऽसि मेऽङ्ग ॥ नयसि कथमिहास्मान्दुस्त्यजद्वंद्वपार्श्वं सततमुरसि सौम्य श्रीर्वधूः साकमास्ते ॥२०॥ अपि बत मधुपुर्यामार्यपुत्रोऽधुनाऽऽस्ते स्मरति स पितृगेहान्सौम्यबंधूँश्च गोपान् ॥ क्वचिदपि स कथा नः किंकरीणां गृणीते भुजमगुरुसुगन्धं मूर्ध्न्यधास्यत्कदा नु ॥२१॥ श्रीशुक उवाच ॥ अथोद्धवो निशम्यैवं कृष्णदर्शनलालसाः ॥ सान्त्वयन्प्रियसंदेशैर्गोपीरिदमभाषत ॥२२॥ उद्धव उवाच ॥ अहो यूयं स्म पूर्णार्था भवत्यो लोकपूजिताः ॥ वासुदेवे भगवति यासामित्यर्पितं मनः ॥२३॥ दानव्रततपोहोमजपस्वाध्यायसंयमैः ॥ श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ॥२४॥ भगवत्युत्तमश्लोके भवतीभिरनुत्तमा ॥ भक्तिः प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभा ॥२५॥ दिष्ट्या पुत्रान्पतीन्देहान्स्वजनान्भवनानि च ॥ हित्वा वृणीत यूयं यत्कृष्णाख्यं पुरुषं परम् ॥२६॥ सर्वात्मभावोऽधिकृतो भवतीनामधोक्षजे ॥ विरहेण महाभागा महान्मेऽनुग्रहः कृतः ॥२७॥ श्रूयतां प्रियसंदेशो भवतीनां सुखावहः ॥ यमादायागतो भद्रा अहं भर्त्तू रहस्करः ॥ २८ ॥ श्रीभगवानुवाच ॥ भवतीनां वियोगो मे नहि सर्वात्मना क्वचित् ॥ यथा भूतानि भूतेषु खं वाय्वग्निर्जलं मही ॥

तद्वरय वृणीष्व । संमानितं प्रत्याह । नयसीति । इह सतीः अस्मान् दुस्त्यजं द्वंद्वं मिथुनीभावो यस्य तस्य पार्श्वं समीपं कथं नयसि नेष्यसि। तथाहि। हे सौम्य ! श्रीर्नाम वधूः साकं सहैव सततमास्ते । तत्राप्युरसि वक्षस्येव ॥२०॥ तेन संमंत्रिता सती ब्रूते। अपि बतेति। बत हर्षे। हे सौम्य! गुरुकुलादागत्यार्यपुत्रः कृष्णोऽधुना किं मधुपुर्यां वर्तते। कदाचिदपि नोऽस्माकं वार्ताः किं ब्रूते। अगुरुवत्सुगंधं भुजं नो मूर्ध्नि कदा नु धास्यतीति ॥२१॥ श्रीकृष्णदर्शनोत्सुका गोपीः प्रियस्य संदेशैः सांत्वयन् प्रथमं तावदिदमभाषत ॥२२॥ तदाह षड्भिः। अहो इति। स्म नूनं यूयं पूर्णार्थाः कृतार्थाः ॥२३॥ श्रेयोभिः श्रेयःसाधनैः॥२४॥ अनुत्तमा अतिश्रेष्ठा ॥२५॥ अवृणीत वृतवत्यः ॥२६॥ सर्वात्मभाव एकांतभक्तिः अधिकृतः प्राप्तः । भगवत्प्रेमसुखप्रदर्शनेन ममैव महाननुग्रहः कृत इति ॥२७॥ भर्तुः कृष्णस्य रहस्करो रहस्यकार्यकर्ता ॥२८॥ भवतीनां मे मया सह वियोगो नास्ति । कुतः । सर्वात्मना सर्वस्योपादानकारणेन। अतएव सर्वेषु मनआदिकार्येष्वहमनुगतत्वेन स्थित

इति सदृष्टांतमाह । यथेति । भूतेषु चराचरेषु महाभूतानि ।वाय्यग्निर्वायुसहितोऽग्निः वायुश्चाग्निश्चेत्यर्थः । यथा तथाऽहं चेति । मनआदीनि कार्याणि गुणाः कारणं तेषामाश्रयत्वेनानुगत इत्यर्थः ॥२९॥ ननु कारणत्वे सर्वानुगतत्वे च कार्यकारणभेदः स्यादत आह । आत्मन्येवेति । ननु नित्यसिद्धस्य कुतः सृष्ट्यादिरूपता अत आह । भूतेंद्रियगुणात्मना । बुद्धींद्रियेति वा पाठः । तद्रूपेणेति । ननु निर्विकारस्य कुतस्तद्रूपतेति तत्राह । आत्ममायानुभावेनेति ॥३०॥ नन्वात्मनो भूतादिरूपत्वे तद्दोषप्रसङ्गः स्यात्तत्राह । आत्मेति। आत्मा तु शुद्धः कुतः अगुणान्वयः न गुणेष्वेतीति तथा । तत्कुतः व्यतिरिक्तः । तदपि कुतः। ज्ञानमयो ज्ञानस्वरूपः । नन्वहं प्रत्यये स्वसंवेद्यमेवात्मनो नानावस्थावत्त्वमिति कुतः शुद्धतेति तत्राह । सुषुप्तीति। मायाकार्यमनोवृत्तिभिर्विश्वतैजसप्राज्ञरूपेण प्रतीयते । न स्वत इत्यर्थः ॥३१॥ कुतः मनोनिरोधे तदभावादिति व्यतिरेकं दर्शयितुं मनोनिरोधं विधत्ते । येनेति । उत्थितः पुमान्यथा मिथ्याभूतमेव स्वप्नं ध्यायत्येवं बाधितानपींद्रियार्थान् शब्दादीन्येन मनसा ध्यायेच्चिंतयेत्। ध्यायंश्च येनेंद्रियाणि प्रत्यपद्यत प्राप । तन्मनो विनिद्रोऽनलसः सन्निरुंध्यान्नियच्छेदिति ॥३२॥ तावता च कृतार्थो भवतीत्याह । एतदंत इति। एष

तथाऽहं च मनःप्राणभूतेंद्रियगुणाश्रयः ॥ २९ ॥ आत्मन्येवात्मनाऽऽत्मानं सृजे हन्म्यनुपालये ॥ आत्ममायाऽनुभावेन भूतेंद्रियगुणात्मना ॥३०॥ आत्मा ज्ञानमयः शुद्धो व्यतिरिक्तोऽगुणान्वयः ॥ सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्तिभिरीयते ॥३१॥ येनेंद्रियार्थान्ध्यायेत मृषा स्वप्नवदुत्थितः ॥ तन्निरुंध्यादिंद्रियाणि विनिद्रः प्रत्यपद्यत ॥ ३२ ॥ एतदंतः समाम्नायो योगः सांख्यं मनीषिणाम् ॥ त्यागस्तपो दमः सत्यं समुद्रांता इवापगाः ॥३३॥ यत्त्वहं भवतीनां वै दूरे वर्ते प्रियो दृशाम् ॥ मनसः सन्निकर्षार्थं मदनुध्यानकाम्यया ॥ ३४ ॥ यथा दूरचरे प्रेष्ठे मन आविश्य वर्तते ॥ स्त्रीणां च न तथा चेतः सन्निकृष्टेऽक्षगोचरे ॥ ३५ ॥ मय्यावेश्य मनः कृत्स्नं विमुक्ताशेषवृत्ति यत् ॥ अनुस्मरंत्यो मां नित्यमचिरान्मामुपैष्यथ ॥ ३६ ॥ या मया क्रीडता रात्र्यां वनेऽस्मिन्व्रज आस्थिताः ॥ अलब्धरासाः कल्याण्यो माऽऽपुर्मद्वीर्यचिंतया ॥ ३७ ॥ श्रीशुक उवाच ॥ एवं प्रियतमादिष्टमाकर्ण्य व्रजयोषितः ॥ ता ऊचुरुद्धवं प्रीतास्तत्संदेशागतस्मृतीः॥३८॥ गोप्य ऊचुः ॥ दिष्ट्याऽहितो हतः कंसो यदूनां सानुगोऽघकृत् ॥ दिष्ट्याऽऽप्तैर्लब्धसर्वार्थैः कुशल्यास्तेऽच्युतोऽधुना ॥ ३९ ॥ कच्चिद्गदाग्रजः सौम्य करोति पुरयोषिताम् ॥ प्रीतिं नः स्निग्धसव्रीडहासोदारेक्षणार्चितः ॥ ४० ॥

मनोनिरोधः अंतः समाप्तिः फलं यस्य सः । समाम्नायो वेदः । स तत्र पर्यवस्यतीत्यर्थः । योगोऽष्टांगः । सांख्यमात्मानात्मविवेकः । त्यागः संन्यासः । तपः स्वधर्मः । दम इंद्रियदमनम् । मार्गभेदेऽप्येकत्र पर्यवसाने दृष्टांतः । समुद्रांता आपगा नद्य इवेति ॥३३॥ ननु किमन्यानिवास्मानात्मविद्यया प्रलोभयसि । वयं तु सर्वसुंदरसकलगुणालंकृतेन त्वया विरहं नैव सहाम इति चेदत आह । यत्त्वहमिति । दृशां दूरे यद्वर्ते तन्मदनुध्यानार्थम् । तच्च ध्यानं मनसः सन्निकर्षार्थमिति ॥ ३४ ॥ एतदुपपादयति त्रयेण । यथा दूरचर इति ॥३५॥३६॥ उपैष्यथेति माधुर्यमात्रमिति चेदत आह । या इति। हे कल्याण्यः! स्वभर्तृभिः प्रतिरुद्धा या वने क्रीडता मया सहालब्धक्रीडास्तास्तदैव मामापुः प्रापुः॥३७॥ तस्य संदेशेनागता स्मृतिर्यासां ताः। प्रथमार्थे द्वितीया ॥३८॥ यदूनामहितः शत्रुः अघकृद्दुःखदः । दिष्ट्यत्यानंदे । आप्तैः प्राप्तैर्हितैर्वा सह ॥३९॥ अन्या ऊचुः। कच्चिदिति । नोऽस्माकं करणीयां प्रीतिं कच्चित्पुरयोषितां करोति। स्निग्धं च तत्सव्रीडहासेनो-

दारमीक्षणं तेनार्चितस्ताभिरस्माभिर्वा ॥ ४० ॥ अन्या ऊचुः । कथमिति। तासां वाक्यैर्विभ्रमैश्चानुभाजितः पूजितः ॥४१॥ पुनरन्या ऊचुः। किमनया चिंतयाऽस्मान् क्वचित्प्रस्तुते प्रसंगे स्मरति किम् । ग्राम्या अविदग्धाः ॥४२॥ अन्या ऊचुः । ताः किमिति ! कुमुदैः कुन्दैः शशांकेन च रम्ये वृन्दावने क्वणंति चरणनूपुराणि यस्यां तस्यां रासगोष्ठ्यामस्माभिः प्रियाभिरीडिता मनोज्ञाः कथा यस्य स तदा यासु निशासु रेमे ताः कदाचित्किं नु स्मरति वा न वेति ॥ ४३ ॥ स्वनिमित्तेन शोकेन तप्ता नोऽस्मान्गात्रैः करस्पर्शादिभिः संजीवयन्किं नु इहैष्यतीति ॥ ४४ ॥ अन्या ऊचुः । कस्मादिति अनन्यगतित्वेन पूर्वमत्रावसत्संप्रति महदैश्वर्यं प्राप्तः कस्मादिहागमिष्यतीति ॥४५॥ अन्यास्तु परमार्थमूचुः। किमस्माभिरिति । वनचरीभिरस्माभिरन्याभिर्वा राजकन्याभिर्महा-

कथं रतिविशेषज्ञः प्रियश्च वरयोषिताम् ॥ नानुबद्ध्येत तद्वाक्यैर्विभ्रमैश्चानुभाजितः ॥ ४१ ॥ अपि स्मरति नः साधो गोविंदः प्रस्तुते क्वचित् ॥ गोष्ठीमध्ये पुरस्त्रीणां ग्राम्याः स्वैरकथांतरे ॥४२॥ ताः किं निशाः स्मरति यासु तदा प्रियाभिर्वृन्दावने कुमुदकुन्दशशांकरम्ये ॥ रेमे क्वणच्चरणनूपुर-रासगोष्ठ्यामस्माभिरीडितमनोज्ञकथः कदाचित् ॥४३॥ अप्येष्यतीह दाशार्हस्तप्ताः स्वकृतया शुचा ॥ संजीवयन्नु नो गात्रैर्यथेन्द्रो वनमंबुदैः ॥४४॥ कस्मात्कृष्ण इहायाति प्राप्तराज्यो हताहितः ॥ नरेंद्रकन्या उद्वाह्य प्रीतः सर्वसुहृद्वृतः ॥४५॥ किमस्माभिर्वनौकोभिरन्याभिर्वा महात्मनः ॥ श्रीपते-राप्तकामस्य क्रियेतार्थः कृतात्मनः ॥ ४६ ॥ परं सौख्यं हि नैराश्यं स्वैरिण्यप्याह पिंगला ॥ तज्जानतीनां नः कृष्णे तथाप्याशा दुरत्यया ॥ ४७ ॥ क उत्सहेत संत्यक्तुमुत्तमश्लोकसंविदम् ॥ अनिच्छतोऽपि यस्य श्रीरंगान्न च्यवते क्वचित् ॥ ४८ ॥ सरिच्छैलवनोद्देशा गावो वेणुरवा इमे ॥ संकर्षणसहायेन कृष्णेनाचरिताः प्रभो ॥ ४९ ॥ पुनः पुनः स्मारयंति नंदगोपसुतं बत ॥ श्रीनिकेतैस्तत्पदकैर्विस्मर्तुं नैव शक्नुमः ॥ ५० ॥ गत्या ललितयोदारहासलीलाऽवलोकनैः ॥ माध्व्या गिरा हृतधियः कथं तं विस्मरामहे ॥ ५१ ॥ हे नाथ हे रमानाथ व्रजनाथार्तिनाशन ॥ मग्न-मुद्धर गोविंद गोकुलं वृजिनार्णवात् ॥ ५२ ॥ श्रीशुक उवाच ॥ ततस्ताः कृष्णसंदेशैर्व्यपेतविरहज्वराः ॥ उद्धवं पूजयांचक्रुर्ज्ञात्वाऽऽत्मानमधोक्षजम् ॥ ५३ ॥ उवास कतिचिन्मासान्गोपीनां विनुदन् शुचः ॥ कृष्णलीलाकथां गायन्रमयामास गोकुलम् ॥ ५४ ॥ यावंत्यहानि नंदस्य व्रजेऽवात्सीत्स उद्धवः ॥ व्रजौकसां क्षणप्रायाण्यासन्कृष्णस्य वार्तया ॥ ५५ ॥ सरिद्वनगिरिद्रोणीर्वीक्षन्कुसुमितान्द्रुमान् ॥ कृष्णं संस्मारयन्रेमे हरिदासो व्रजौ-कसाम् ॥ ५६ ॥ दृष्ट्वैवमादिगोपीनां कृष्णावेशात्मविक्लवम् ॥ उद्धवः परमप्रीतस्ता नमस्यन्निदं जगौ ॥ ५७ ॥ एताः परं तनुभृतो भुवि गोपवध्वो

त्मनो धीरस्य किंच श्रीपतेः । तदपि आस्ताम् । स्वत एवाप्तकामस्यातएव कृतात्मनः पूर्णस्य किं कोऽप्यर्थः क्रियेत न कश्चिदिति ॥ ४६ ॥ यतोऽघटमाना या कृष्णस्य संगतिः सैवास्मान्व्याकुल-यत्यतो नैराश्यमेव परमं सुखं तच्चातिदुष्करमित्याहुः । परं सौख्यमिति । स्वैरिणी कामचारिणी ॥ ४७ ॥ संविदमेकांतवार्ताम् ॥ ४८ ॥ किंच तद्विस्मृतौ न तावद्दुःखमस्ति साऽपि नास्माकं संभवतीत्याहुः । सरिच्छैलेति त्रिभिः । आचरिताः सेविताः ॥४९॥५०॥ हे उद्धव ! तं कथं विस्मरामेति ॥ ५१ ॥ ५२ ॥ श्रीकृष्णमधोक्षजं ज्ञात्वा तं च स्वात्मानं ज्ञात्वा ॥ ५३ ॥ विनुदन्नप-नयन् ॥ ५४ ॥ ५५ ॥ सरिद्वनगिरिदर्यादिषु प्रत्येकं श्रीकृष्णं लीलासंप्रश्नादिभिः संस्मारयन्रेमे ॥ ५६ ॥ कृष्णावेशेनात्मनो मनसो विक्लवं वैक्लव्यम् । ता गोपीर्नमस्यन्नमस्कुर्वन् । उत्तमस्या-

त्मनो गोपस्त्रीनमस्कृतिरन्याख्या न भवतीति दर्शयितुं तासां महत्त्वं पंचभिर्जगौ उवाच ॥५७॥ एता इति । एताः परं केवलं तनुभृतः सफलजन्मानः रूढभावाः परमप्रेमवत्यः । यदिति यं रूढं भावं भवभियो मुमुक्षवो मुनयो मुक्ता अपि वांछंति वयं च भक्ता अपि। अतोऽनंतस्य कथासु रसो रागो यस्य तस्य। ब्रह्म जन्मभिर्विप्रसंबंधिभिः शौक्लसावित्रयाज्ञिकैस्त्रिभिर्जन्मभिः किं कोऽतिशयः । यत्र जातः स एव सर्वोत्तम इत्यर्थः । यद्वा । अनंतकथासु रसो यस्य तस्य ब्रह्मजन्मभिश्चतुर्मुखजन्मभिरपि किमित्यर्थः ॥५८॥ किंच ईश्वरप्रसादो महत्त्वे कारणं तस्य च न जातिराचारो ज्ञानं वा कारणं किंतु केवलं भजनमेवेत्याह । क्वेमा इति । साक्षाद्भजतः पुंसः । ननु अहो उपयुक्तः सेवितः अगदराजोऽमृतं यथेति ॥५९॥ अत्यंतापूर्वश्चायं गोपीषु भगवतः प्रसाद इत्याह । नायमिति। अंगे वक्षसि उ अहो नितांतरतेरेकांतरतिमत्याः श्रियोऽपि नायं प्रसादोऽनुग्रहोऽस्ति । नलिनस्येव गंधो रुक्कांतिश्च यासां तासां स्वर्गांगनानामप्सरसामपि नास्ति । अन्याः पुनर्दूरतो निरस्ताः।

गोविंद एव निखिलात्मनि रूढभावाः ॥ वांछन्ति यद्भवभियो मुनयो वयं च किं ब्रह्मजन्मभिरनन्तकथारसस्य ॥५८॥ क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः कृष्णे क्व चैष परमात्मनि रूढभावः ॥ नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षाच्छ्रेयस्तनोत्यगदराज इवोपयुक्तः ॥५९॥ नायं श्रियोऽङ्ग उ नितांतरतेः प्रसादः स्वर्योषितां नलिनगंधरुचां कुतोऽन्याः॥ रासोत्सवेऽस्य भुजदंडगृहीतकंठलब्धाशिषां य उदगाद्व्रजवल्लवीनाम् ॥६०॥ आसामहो चरणरेणुजुषामहं स्यां वृंदावने किमपि गुल्मलतौषधीनाम् ॥ या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुंदपदवीं श्रुतिभिर्विमृग्याम् ॥ ६१ ॥ या वै श्रियाऽर्चितमजादिभिराप्तकामैर्योगेश्वरैरपि यदात्मनि रासगोष्ठ्याम् ॥ कृष्णस्य तद्भगवतश्चरणारविंदं न्यस्तं स्तनेषु विजहुः परिरभ्य तापम् ॥६२॥ वंदे नंदव्रजस्त्रीणां पादरेणुमभीक्ष्णशः ॥ यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥ ६३ ॥ श्रीशुक उवाच ॥ अथ गोपीरनुज्ञाप्य यशोदां नन्दमेव च ॥ गोपानामंत्र्य दाशार्हो यास्यन्नारुरुहे रथम् ॥ ६४ ॥ तं निर्गतं समासाद्य नानोपायनपाणयः ॥ नंदादयोऽनुरागेण प्रावोचन्नश्रुलोचनाः ॥ ६५ ॥ मनसो वृत्तयो नः स्युः कृष्णपादांबुजाश्रयाः ॥ वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु ॥ ६६ ॥ कर्मभिर्भ्राम्यमाणानां यत्र क्वापीश्वरेच्छया ॥ मंगलाचरितैर्दानै रतिर्नः कृष्ण ईश्वरे ॥६७॥ एवं सभाजितो गोपैः कृष्णभक्त्या नराधिप ॥ उद्धवः पुनरागच्छन्मथुरां कृष्णपालिताम् ॥ ६८ ॥ कृष्णाय प्रणिपत्याह भक्त्युद्रेकं व्रजौकसाम् ॥ वसुदेवाय रामाय राज्ञे चोपायनान्यदात् ॥ ६९ ॥ इति श्रीमद्भागवते महापुराणे



रासोत्सवे कृष्णभुजदंडाभ्यां गृहीत आलिंगितः कण्ठस्तेन लब्धा आशिषो याभिस्तासां गोपीनां य उदगादाविर्बभूव ॥६०॥ किंच आस्तां तावद्गोपीनां भाग्यं मम त्वेतावत्प्रार्थ्यमित्याह। आसामिति । गोपीनां चरणरेणुभाजां गुल्मादीनां मध्ये यत्किमप्यहं स्यामित्याशंसा । कथंभूतानाम् । या इत्यादि । आर्याणां मार्गं धर्मं च हित्वा ॥ ६१ ॥ पुनस्ता एव विशिनष्टि । या वा इति । योगेश्वरैरप्यात्मन्येवार्चितं स्तनेषु न्यस्तं परिरभ्य तापं जहुरिति ॥६२॥ एवं महत्त्वं प्रतिपाद्य नमस्करोति । वंद इति ॥ ६३ ॥ अनुज्ञाप्यानुज्ञां याचित्वा । आमन्त्र्य पृष्ट्वा ॥६४॥६५॥ नोऽस्माकं मनसो वृत्तयः कृष्णपादांबुजाश्रयाः स्युः अभिधायिनीरभिधायिन्यः ॥ ६६ ॥ कृष्णे रतिः स्यादिति ॥६७॥६८॥ कृष्णादिभ्यो भक्त्युद्रेकमाह । उपायनानि चाददिति ॥ ६९ ॥ इति

दशमस्कंधे पूर्वार्धे टीकायां सप्तचत्वारिंशोऽध्यायः ॥४७॥ अष्टचत्वारिंशकेऽथ कृष्णः कुब्जामरीरमत् ॥ अक्रूरस्य गृहं गत्वा तं गजाह्वयमादिशत् ॥ १ ॥ सैरन्ध्रीकाममापूर्य पूरयित्वा मनोरथान् ॥ अक्रूरस्य ततः कृष्णस्तेन पार्थानसांत्वयत् ॥२॥१॥ महार्हैरनर्घ्यैरुपस्करैरन्वितम् । कामोपायैस्तदुद्दीपकैः सुरतबंधादिलेख्यैरुपबृंहितम् ॥ २ ॥ यथा यथोचितम् ॥३॥४॥ प्रसाधितो योग्यतामापादित आत्मा देहो यया सा । सव्रीडं यल्लीलयोद्गतं स्मितं तद्येषु विभ्रमेषु तद्युक्तैरीक्षितैरुपलक्षिता ॥५॥ अनुलेपार्पणादन्यत्तस्याः पुण्यं नास्तीति दर्शयितुं पुण्यलेशयेत्युक्तं न तु

दशमस्कन्धे पूर्वार्धे उद्धवप्रतियाने सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ श्रीशुक उवाच ॥ अथ विज्ञाय भगवान्सर्वात्मा सर्वदर्शनः ॥ सैरंध्र्याः कामतप्तायाः प्रियमिच्छन्गृहं ययौ ॥ १ ॥ महार्होपस्करैराढ्यं कामोपायोपबृंहितम् ॥ मुक्तादामपताकाभिर्वितानशयनासनैः ॥ धूपैः सुरभिभिर्दीपैः स्रग्गंधैरपि मंडितम् ॥२॥ गृहं तमायांतमवेक्ष्य साऽऽसनात्सद्यः समुत्थाय हि जातसंभ्रमा ॥ यथोपसंगम्य सखीभिरच्युतं सभाजयामास सदासनाभिः ॥३॥ तथोद्धवः साधुतयाऽभिपूजितो न्यषीददुर्व्यामभिमृश्य चासनम् ॥ कृष्णोऽपि तूर्णं शयनं महाधनं विवेश लोकाचरितान्यनुव्रतः ॥ ४ ॥ सा मज्जनालेपदुकूलभूषणस्रग्गंधतांबूलसुधासवादिभिः ॥ प्रसाधितात्मोपससार माधवं सव्रीडलीलोत्स्मितविभ्रमेक्षितैः ॥ ५ ॥ आहूय कांतां नवसंगमह्रिया विशंकितां कंकणभूषिते करे ॥ प्रगृह्य शय्यामधिवेश्य रामया रेमेऽनुलेपार्पणपुण्यलेशया ॥६॥ साऽनंगतप्तकुचयोरुरसस्तथाऽक्ष्णोर्जिघ्रन्त्यनंतचरणेन रुजो मृजंती ॥ दोर्भ्यां स्तनांतरगतं परिरभ्य कांतमानंदमूर्तिमजहादतिदीर्घतापम् ॥ ७ ॥ सैवं कैवल्यनाथं तं प्राप्य दुष्प्रापमीश्वरम् ॥ अङ्गरागार्पणेनाहो दुर्भगेदमयाचत ॥ ८ ॥ आहोष्यतामिह प्रेष्ठ दिनानि कतिचिन्मया ॥ रमस्व नोत्सहे त्यक्तुं सङ्गं तेऽम्बुरुहेक्षण ॥ ९ ॥ तस्यै कामवरं दत्त्वा मानयित्वा च मानदः ॥ सहोद्धवेन सर्वेशः स्वधामागमदर्चितम् ॥१०॥ दुराराध्यं समाराध्य विष्णुं सर्वेश्वरेश्वरम् ॥ यो वृणीते मनोग्राह्यमसत्त्वात्कुमनीष्यसौ ॥ ११ ॥ अक्रूरभवनं कृष्णः सहरामोद्धवः प्रभुः ॥ किंचिच्चिकीर्षयन्प्रागादक्रूरप्रियकाम्यया ॥ १२ ॥ स तान्नरवरश्रेष्ठानाराद्वीक्ष्य स्वबांधवान् ॥ प्रत्युत्थाय प्रमुदितः परिष्वज्याभिनंद्य च ॥ १३ ॥ ननाम कृष्णं रामं च स तैरप्यभिवादितः ॥ पूजयामास विधिवत्कृतासनपरिग्रहान् ॥ १४ ॥ पादावनेजनीरापो धारयन् शिरसा नृप ॥ अर्हणेनाम्बरैर्दिव्यैर्गंधस्रग्भूषणोत्तमैः ॥ १५ ॥ अर्चित्वा शिरसाऽऽनम्य पादावङ्कगतौ मृजन् ॥ प्रश्रयावनतोऽक्रूरः कृष्णरामावभाषत ॥ १६ ॥ दिष्ट्या पापो हतः कंसः सानुगो वामिदं कुलम् ॥ भवद्भ्यामुद्धृतं कृच्छ्रा-

पुण्यस्याल्पत्वविवक्षया ॥ ६ ॥ कुचादीनां रुजो मृजंती । जिघ्रंती च चरणम् ॥ ७ ॥ काममेव प्राकृतदृष्ट्या अयाचत । न च गोप्य इव सा तन्निष्ठेति दुर्भगेत्युक्तम् । कृतार्थत्वे तु तस्या न संदेहः ॥ ८ । ९ ॥ काम एव वरस्तं दत्त्वा । मानयित्वा चालंकारादिदानैः ॥१०॥ मनोग्राह्यं विषयसुखम् । असत्त्वात्तुच्छत्वात् ॥११॥ किंचिच्चिकीर्षयन् हस्तिनापुरस्थापनं कारयितुमिच्छन्नित्यर्थः । अक्रूरप्रियकाम्यया च ॥ १२ ॥ आराद्दूरादेव ॥ १३ ॥ १४ ॥ आ अप इति च्छेदः । अप आ सर्वतो धारयन्नित्यन्वयः ॥ १५ ॥ १६ ॥ वां युवयोरिदं कुलमुद्धृतं समेधितं च

॥१७॥ वामिदं कुलमित्यादिव्यवहारदृष्टयोक्त्वा परमार्थमाह। युवामिति। जगन्मयौ युवाम्। कुतः। जगद्धेतू। तदपि कुतः। प्रधानपुरुषौ तदात्मकौ। अतो भवद्भ्यां विना परं कारणमपरं कार्यं च नास्तीति ॥१८॥ ननु प्रत्यक्षादिसिद्धं कथं नास्तीत्युच्यतेऽत आह। आत्मसृष्टमिति। हे ब्रह्मन्परमेश्वर! ब्रह्मेति वा पाठः। रजआदिस्वशक्तिभिरात्मनैव सृष्टमिदं विश्वमन्वाविश्य कारणत्वादननुप्रविष्टोऽप्यनुप्रविश्येव स्थितः श्रुतप्रत्यक्षगोचरं यथा भवति तथा बहुधा भवानेव प्रतीयते ॥१९॥ एकस्यैव बहुधा प्रतीतिं सदृष्टांतामाह। यथा हीति। योनिषु स्वस्यैव रूपांतरेणाभिव्यक्तिस्थानेषु चराचरेषु यथा महीप्रमुखानि कारणान्येव नाना भांति आत्मयोनिषु स्वकारणेषु भूतभौतिकेषु। जीवोऽपि नरमृगादिशरीरेषु बाल्ययुवाद्यवस्थासु च तथा तथा प्रतीयत इति तद्व्यवच्छेदार्थमात्मतंत्रग्रहणम् ॥२०॥ ननु सृष्ट्यादिकर्तृत्वेन च मम किं जीववद्बंध उक्तो नहि नहीत्याह। सृजसीति। तद्गुणकर्मभिर्वा त्रैगुणैः कर्मभिर्वेत्यर्थः। यतः क्व च कदाचिदपि बंधहेतुरविद्या तव नैवास्ति। कुत इत्यत आह। ज्ञानात्मन इति मायाया आश्रयानावरकत्वादिति भावः ॥२१॥ किंच आस्तां तावद्बंधशङ्का यतोऽविद्योपाधेर्जीवात्मनोऽपि न वस्तुतो बंधोऽस्तीत्याह। देहाद्युपाधेरिति।

दुरंताच्च समेधितम् ॥१७॥ युवां प्रधानपुरुषौ जगद्धेतू जगन्मयौ ॥ भवद्भ्यां न विना किंचित्परमस्ति न चापरम् ॥१८॥ आत्मसृष्टमिदं विश्वमन्वाविश्य स्वशक्तिभिः ॥ ईयते बहुधा ब्रह्मन् श्रुतप्रत्यक्षगोचरम् ॥१९॥ यथा हि भूतेषु चराचरेषु मह्यादयो योनिषु भांति नाना ॥ एवं भवान्केवल आत्मयोनिष्वात्माऽऽत्मतंत्रो बहुधा विभाति ॥ २० ॥ सृजस्यथो लुंपसि पासि विश्वं रजस्तमःसत्त्वगुणैः स्वशक्तिभिः ॥ न बध्यसे तद्गुणकर्मभिर्वा ज्ञानात्मनस्ते क्व च बंधहेतुः ॥२१॥ देहाद्युपाधेरनिरूपितत्वाद्भवो न साक्षान्न भिदात्मनः स्यात् ॥ अतो न बंधस्तव नैव मोक्षः स्यातां निकामस्त्वयि नोऽविवेकः ॥ २२ ॥ त्वयोदितोऽयं जगतो हिताय यदा यदा वेदपथः पुराणः ॥ बाध्येत पाखंडपथैरसद्भिस्तदा भवान्सत्त्वगुणं बिभर्ति ॥२३॥ स त्वं प्रभोऽद्य वसुदेवगृहेऽवतीर्णः स्वांशेन भारमपनेतुमिहासि भूमेः ॥ अक्षौहिणीशतवधेन सुरेतरांशराज्ञाममुष्य च कुलस्य यशो वितन्वन् ॥२४॥ अद्येश नो वसतयः खलु भूरिभागा यः सर्वदेवपितृभूतनृदेवमूर्तिः ॥ यत्पादशौचसलिलं त्रिजगत्पुनाति स त्वं जगद्गुरुरधोक्षज याः प्रविष्टः ॥२५॥ कः पंडितस्त्वदपरं शरणं समीयाद्भक्तप्रियादृतगिरः सुहृदः कृतज्ञात् ॥ सर्वान्ददाति सुहृदो भजतोऽभिकामानात्मानमप्युपच-

भवो जन्म तन्मूला भिदा च साक्षात्स्वरूपतो न स्यादिति। ननु मम बंधाभावं वदता त्वया किं मोक्षोऽङ्गीक्रियते ओमिति चेत्तर्हि बंधाभावे मोक्षासंभवादापन्नो बंधोऽपीत्याशंक्याह। अत इति। यतो नाविद्या अतो न बंधो मोक्षश्च। एवमुभौ न स्यातामित्यर्थः। ननु उलूखले मां बद्धं श्रुतवान्यमुनाह्रदे मुक्तं दृष्टवानस्यतः कथमुभयं नास्त्यत आह। निकाम इति। स्वाभिप्रायानुरूपस्त्वयि नोऽस्माकमविवेक एव परमेवंभूत इति। यद्वा नोऽविवेक एव तवोभौ स्यातामिति ॥२२॥ ननु तर्हि ममावतारास्तच्चरित्राणि च शुक्तिरजतवदविद्याकल्पितान्येव किं नहि नहि इयं तु तव लीलेत्याह द्वयेन। त्वयोदित इति ॥२३॥ सुरेतररांशा ये राजानस्तेषामक्षौहिणीशतानां वधेन भूमेर्भारमपनेतुं स्वांशेन रामेण सहावतीर्णोऽसि ॥२४॥ अत एवंभूतस्य तवागमनेन कृतार्थोऽस्मीत्याह त्रयेण। अद्येति। हे ईशाद्य! नो वसतयो गृहास्तपोवनादपि बहुपुण्याः। कुतः। या वसतीस्त्वं साक्षात्प्रविष्टः। कथंभूतः। यस्य तव पादसलिलमेव गङ्गा त्रिजगत्पुनाति यश्च त्वं पञ्चयज्ञदेवतामूर्तिः स त्वं जगद्गुरुरिति ॥२५॥ स्वमनोरथः परिपूरित इति तुष्यन्नाह। कः पण्डित इति। ऋतगिरः सत्यवाचः त्वत्तोऽपरं शरणं कः समीयाद्गच्छेत्। यतो भवान् भजतः सर्वानभितः कामांश्च ददात्या-

त्मानमपीति ॥२६॥ नोऽविवेकिनाम्। तत्रापीह गृह एव ॥२७॥२८॥ वो युष्माकं प्रजाः पुत्रा हि वयमिति ॥२९॥ ननु नृभिर्देवाः सेव्या इति प्रसिद्धं तत्राह । देव इति । स्वार्थाः स्वकार्यसाधनपराः । साधवस्तु केवलं परानुग्रहपराः । परमार्थतस्तु साधव एव देवा इति सेव्या इत्यर्थः ॥ ३० ॥ तर्हि मृच्छिलादिमयाः किं देवादयो नैवेत्यत आह । न हीति । अम्मयानि तीर्थानि मृन्मयाः शिलामयाश्च देवा न भवंतीति न । अपि तु भवंत्येव। तथाऽपि साधूनां तेषां च महदंतरमित्याह । ते पुनंतीति ॥३१॥ किंचिच्चिकीर्षयन्प्रागादिति यदुक्तं तत्कार्यमादिशति । स इति । नः सुहृदां मध्ये भवान् श्रेष्ठोऽतः पांडवानां श्रेयश्चिकीर्षया गजाह्वयं गच्छस्व गच्छेति । यद्वा। स्वेति पृथक्पदम्। हे स्व आत्मीयेत्यर्थः ॥३२॥ राज्ञा धृतराष्ट्रेण । वसंते निवसंति । शुश्रुम श्रुतवंतो वयम् ॥३३॥

यापचयौ न यस्य ॥ २६ ॥ दिष्ट्या जनार्दन भवानिह नः प्रतीतो योगेश्वरैरपि दुरापगतिः सुरेशैः ॥ छिंध्याशु नः सुतकलत्रधनाप्तगेहदेहादिमोहरशनां भवदीयमायाम् ॥ २७ ॥ इत्यर्चितः संस्तुतश्च भक्तेन भगवान्हरिः ॥ अक्रूरं सस्मितं प्राह गीर्भिः संमोहयन्निव ॥ २८ ॥ श्रीभगवानुवाच ॥ त्वं नो गुरुः पितृव्यश्च श्लाघ्यो बंधुश्च नित्यदा ॥ वयं तु रक्ष्याः पोष्याश्च अनुकंप्याः प्रजा हि वः ॥ २९ ॥ भवद्विधा महाभागा निषेव्या अर्हसत्तमाः ॥ श्रेयस्कामैर्नृभिर्नित्यं देवाः स्वार्था न साधवः ॥ ३० ॥ न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ॥ ते पुनंत्युरुकालेन दर्शनादेव साधवः ॥ ३१ ॥ स भवान्सुहृदां वै नः श्रेयान् श्रेयश्चिकीर्षया ॥ जिज्ञासार्थं पांडवानां गच्छस्व त्वं गजाह्वयम् ॥ ३२ ॥ पितर्युपरते बालाः सह मात्रा सुदुःखिताः ॥आनीताः स्वपुरं राज्ञा वसंत इति शुश्रुम ॥ ३३ ॥ तेषु राजाऽम्बिकापुत्रो भ्रातृपुत्रेषु दीनधीः ॥ समो न वर्तते नूनं दुष्पुत्रवशगोऽन्धदृक् ॥ ३४ ॥ गच्छ जानीहि तद्वृत्तमधुना साध्वसाधु वा ॥ विज्ञाय तद्विधास्यामो यथा शं सुहृदां भवेत् ॥ ३५ ॥ इत्यक्रूरं समादिश्य भगवान्हरिरीश्वरः ॥ संकर्षणोद्धवाभ्यां वै ततः स्वभवनं ययौ ॥ ३६ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ श्रीशुक उवाच ॥ स गत्वा हास्तिनपुरं पौरवेंद्रयशोऽङ्कितम् ॥ ददर्श तत्रांबिकेयं सभीष्मं विदुरं पृथाम् ॥ १ ॥ सहपुत्रं च बाह्लीकं भरद्वाजं सगौतमम् ॥ कर्णं सुयोधनं द्रौणिं पांडवान्सुहृदोऽपरान् ॥ २ ॥ यथावदुपसंगम्य बंधुभिर्गांदिनीसुतः ॥ संपृष्टस्तैः सुहृद्वार्तां स्वयं चापृच्छदव्ययम् ॥ ३ ॥ उवास कतिचिन्मासान्राज्ञो वृत्तविवित्सया ॥ दुष्प्रजस्याल्पसारस्य खलच्छंदानुवर्तिनः ॥ ४ ॥ तेज ओजो बलं वीर्यं प्रश्रयादींश्च सद्गुणान् ॥ प्रजानुरागं पार्थेषु न सहद्भिश्चिकीर्षितम् ॥५॥ कृतं च धार्तराष्ट्रैर्यद्गरदानाद्यपेशलम् ॥ आचख्यौ सर्वमेवास्मै पृथा विदुर एव च ॥६॥

दुष्टा ये स्वपुत्रा दुर्योधनादयस्तद्वशेन गच्छतीति तथा । यतोऽन्धदृगंधनेत्रः ॥ ३४ ॥ ३५ ॥ ३६ ॥ इति श्रीमद्भागवते दशमे पूर्वार्धे टीकायामष्टचत्वारिंशोऽध्यायः ॥४८॥ ऊनपंचाशत्तमे तु गत्वाऽक्रूरो गजाह्वयम् ॥ राज्ञः स्वभ्रातृपुत्रेषु बुद्ध्वा वैषम्यमागमतम् ॥१॥ पौरवेंद्राणां यशोभिस्तत्कृतदेवब्राह्मणायतनादिभिरंकितम् ॥१॥ बाह्लीकपुत्रः सोमदत्तः । भारद्वाजो द्रोणः । गौतमः कृपः ॥ २ ॥ अव्ययं कुशलम् ॥ ३ ॥ दुष्प्रजस्यासत्पुत्रस्याल्पसारस्य मंदधृतेः खलानां कर्णादीनां छंदमिच्छामनुवर्तितुं शीलं यस्येति तथा तस्य ॥ ४ ॥ तेजः प्रभावः । ओजः शस्त्रादिनैपुणम् । वीर्यं शौर्यम् । न सहद्भिरसहमानैः । चिकीर्षितमिति उपरि कर्तुमिष्टम् ॥५॥ गरस्य विषस्य दानादि । अपेशलमन्याय्यम् । तेज ओज इत्यादि सर्वं कथयामास ॥६॥ तत्कथनात्पूर्वतरं पृथाया

वृत्तमाह । पृथा त्विति । अश्रूणां कला लेशा ययोस्ते ईक्षणे यस्याः सा ॥७॥ अपि किम् । जामयः कुलस्त्रियः ॥ ८ ॥ पैतृष्वस्रेयान्मत्पुत्रान् ॥ ९ ॥ शोचंतीं मां वाक्यैः सांत्वयिष्यति किम् ॥१०॥ हे महायोगिन्महान्योग उपायो मायाख्योऽस्यास्तीति । हे विश्वात्मन् सर्वान्तर्यामिन् । हे विश्वभावन विश्वपालक । प्रपन्नां शरणागताम् । अवसीदतीं क्लिश्यंतीम् । ११॥ आपवर्गिकात् मोक्षप्रदात् ॥१२॥ शुद्धाय धर्मात्मने । ब्रह्मणेऽपरिच्छिन्नाय । परमात्मने जीवसखाय । योगेश्वरायाणिमादियुक्ताय । योगाय ज्ञानात्मने ॥१३॥ प्रपितामही प्रपितामहः पांडुस्तस्य भार्या रुरोद ॥१४॥ पृथया सह समं दुःखं सुखं च यस्य सः । तस्याः पुत्राणामुत्पत्तिहेतुभिर्जनकैर्धर्मानिलेन्द्रादिभिस्तत्कथनैरित्यर्थः ॥१५॥ बंधुभिः रामकृष्णादिभिः । सौहृदेनोदितमुक्तं यत्तदवददिति ॥१६॥

पृथा तु भ्रातरं प्राप्तमक्रूरमुपसृत्य तम् ॥ उवाच जन्मनिलयं स्मरंत्यश्रुकलेक्षणा ॥ ७ ॥ अपि स्मरंति नः सौम्य पितरो भ्रातरश्च मे ॥ भगिन्यो भ्रातृपुत्राश्च जामयः सख्य एव च ॥ ८ ॥ भ्रात्रेयो भगवान्कृष्णः शरण्यो भक्तवत्सलः ॥ पैतृष्वस्रेयान्स्मरति रामश्चांबुरुहेक्षणः ॥ ९ ॥ सपत्नमन्ये शोचंतीं वृकाणां हरिणीमिव ॥ सांत्वयिष्यति मां वाक्यैः पितृहीनांश्च बालकान् ॥ १० ॥ कृष्ण कृष्ण महायोगिन्विश्वात्मन्विश्वभावन ॥ प्रपन्नां पाहि गोविंद शिशुभिश्चावसीदतीम् ॥ ११ ॥ नान्यत्तव पदांभोजात्पश्यामि शरणं नृणाम् ॥ बिभ्यतां मृत्युसंसारादीश्वरस्यापवर्गिकात् ॥ १२ ॥ नमः कृष्णाय शुद्धाय ब्रह्मणे परमात्मने ॥ योगेश्वराय योगाय त्वामहं शरणं गता ॥ १३ ॥ श्रीशुक उवाच ॥ इत्यनुस्मृत्य स्वजनं कृष्णं च जगदीश्वरम् ॥ प्रारुदद्दुःखिता राजन् भवतां प्रपितामही ॥ १४ ॥ समदुःखसुखोऽक्रूरो विदुरश्च महायशाः ॥ सांत्वयामासतुः कुंतीं तत्पुत्रोत्पत्तिहेतुभिः ॥ १५ ॥ यास्यन्राजानमभ्येत्य विषमं पुत्रलालसम् ॥ अवदत्सुहृदां मध्ये बंधुभिः सौहृदोदितम् ॥ १६ ॥ अक्रूर उवाच ॥ भो भो वैचित्रवीर्य त्वं कुरूणां कीर्तिवर्धन ॥ भ्रातर्युपरते पांडावधुनाऽऽसनमास्थितः ॥ १७ ॥ धर्मेण पालयन्नुर्वीं प्रजाः शीलेन रंजयन् ॥ वर्तमानः समः स्वेषु श्रेयः कीर्तिमवाप्स्यसि ॥ १८ ॥ अन्यथा त्वाचरँल्लोके गर्हितो यास्यसे तमः ॥ तस्मात्समत्वे वर्तस्व पांडवेष्वात्मजेषु च ॥ १९ ॥ नेह चात्यंतसंवासः कर्हिचित्केनचित्सह ॥ राजन्स्वेनापि देहेन किमु जायात्मजादिभिः ॥२०॥ एकः प्रसूयते जंतुरेक एव प्रलीयते ॥ एकोऽनुभुंक्ते सुकृतमेक एव च दुष्कृतम् ॥ २१ ॥ अधर्मोपचितं वित्तं हरंत्यन्येऽल्पमेधसः ॥ संभोजनीयापदेशैर्जलानीव जलौकसः ॥ २२ ॥ पुष्णाति यानधर्मेण स्वबुद्ध्या

भ्रातर्युपरत इति । पांडोः पुत्रेषु सत्सु राजासनं त्वमास्थित इति कटाक्षः ॥१७॥ भवतु तथाप्येवं वर्तमानः श्रेयोऽवाप्स्यसीत्याह । धर्मेणेति ॥१८॥ तमो नरकमिहैव महद्दुःखमिति भावः ॥ १९ ॥ नन्वात्मजानात्मजादिषु कथं समत्वं स्यात्तत्राह । नेह चेति । अत्यंतं नित्यं संवासः सम्यक् स्थितिः ॥ २० ॥ तत्र तावदुत्पत्तिमरणयोः सुखदुःखयोश्च केनापि साहित्यं नास्तीत्याह । एक इति ॥२१॥ किंच यदा च सह संवसंति तदाऽपि क्लेशोपार्जितवित्तापहारितया पुत्रा नाम शत्रव एव ज्ञेया इत्याह । अधर्मेति । संभोजनीयाः पोष्याः पुत्रादय इति व्यपदेशैरल्पमेधसो मूढस्य वित्तं हरंति । जलौकसो मत्स्यस्य जीवनभूतानि जलानि तथा तत्पुत्रा हरंति तद्वदिति ॥२२॥ किंच यानेवं पुष्णाति ते धनमादाय मृता जीवंतोऽपि वा तं परित्यजंतीत्याह । पुष्णातीति । स्वबुद्ध्या स्वीया

इत्यभिमानेन । रायोऽर्थाः अकृतार्थमप्राप्तभोगम् ॥ २३ ॥ स पुनः पापैकपाथेयो नरकं विशतीत्याह । स्वयमिति । असिद्धार्थोऽपूर्णमनोरथः ॥ २४ ॥ स्वप्नश्च माया च तत्तेन तुल्यं आयम्य नियम्य शांतः सन्समो भवेति ॥२५॥ हे दानपते अक्रूर । न तृप्याम्यलमिति न मन्ये ॥२६॥ सूनृता प्रिया वाक्चलेऽस्थिरे हृदि न स्थीयते न तिष्ठतीत्यर्थः । सुदामा पर्वतस्तत्र भवा विद्युदिव । तस्मिन्स्फटिकशिलामये सहसैवातिस्फुरिता विद्युद्यथा लीयते तद्वदित्यर्थः । यद्वा । सुदामा माला तस्या इयं सौदामनी मालाकारेत्यर्थः ॥२७॥ नन्वेवं जानतोऽपि कथमयं मोह इति

तमपंडितम् ॥ तेऽकृतार्थं प्रहिण्वंति प्राणा रायः सुतादयः ॥ २३ ॥ स्वयं किल्बिषमादाय तैस्त्यक्तो नार्थकोविदः ॥ असिद्धार्थो विशत्यंधं स्वधर्मविमुखस्तमः ॥ २४ ॥ तस्माल्लोकमिमं राजन्स्वप्नमायामनोरथम् ॥ वीक्ष्यायम्यात्मनात्मानं समः शांतो भव प्रभो ॥ २५ ॥ धृतराष्ट्र उवाच ॥ यथा वदति कल्याणीं वाचं दानपते भवान् ॥ तथाऽनया न तृप्यामि मर्त्यः प्राप्य यथाऽमृतम् ॥ २६ ॥ तथाऽपि सूनृता सौम्य हृदि न स्थीयते चले ॥ पुत्रानुरागविषमे विद्युत्सौदामनी यथा ॥ २७ ॥ ईश्वरस्य विधिं को नु विधुनोत्यन्यथा पुमान् ॥ भूमेर्भारावताराय योऽवतीर्णो यदोः कुले ॥ २८ ॥ यो दुर्विमर्शपथया निजमाययेदं सृष्ट्वा गुणान्विभजते तदनुप्रविष्टः ॥ तस्मै नमो दुरवबोधविहारतंत्रसंसारचक्रगतये परमेश्वराय ॥ २९ ॥ श्रीशुक उवाच ॥ इत्यभिप्रेत्य नृपतेरभिप्रायं स यादवः ॥ सुहृद्भिः समनुज्ञातः पुनर्यदुपुरीमगात ॥३०॥ शशंस रामकृष्णाभ्यां धृतराष्ट्रविचेष्टितम् ॥ पांडवान्प्रति कौरव्य यदर्थं प्रेषितः स्वयम् ॥ ३१ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे एकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥

चेदत आह । ईश्वरस्येति । विधिं विधानं मायामिति यावत् ॥ २८ ॥ अतस्तमेव नमस्यति । दुर्विमर्शपथया अवितर्क्यमार्गया । गुणान्कर्माणि तत्फलानि च विभजते विविच्य ददाति । दुरवबोधो यो विहारस्तस्य क्रीडा स एव तंत्रं प्रधानं मुख्यं कारणं यस्य संसारचक्रस्यात एव तस्य गतिर्यस्मात्तस्मै नम इति ॥ २९ ॥ अभिप्रेत्य ज्ञात्वा ॥ ३० ॥ ३१ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे श्रीधरस्वामिकृतभावार्थदीपिकायां टीकायामेकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥

इति श्रीधरीटीकासहिते-
श्रीमद्भागवते दशमस्कन्धे पूर्वार्द्धम्
समाप्तम्

अथ श्रीधरीटीकासहिते-
श्रीमद्भागवते दशमस्कन्धे उत्तरार्द्धम्
प्रारभ्यते

ॐ नमो भगवते वासुदेवाय॥ ततः पंचाशत्तमे तु जरासंधभयादिव॥ कारयित्वाऽम्बुधौ दुर्गं तन्निनाय निजं जनम्॥१॥ कपटान्कपटैरेव हत्वा दैत्यानयत्नतः॥ अजयच्च जरासंधं धर्मेणव तु धार्मिकम् ॥२॥ अस्तिप्राप्तिसंज्ञिके ईयतुर्जग्मतुः ॥ १ ॥ २ ॥ कंसे शोकः कृष्णे चामर्षस्ताभ्यां युतः ॥ ३ ॥ न्यरुणद्रुरोध ॥ ४ ॥ तस्य बलं सन्यमुद्वेलं लंघितमर्यादं सागरमिव । तेन तस्य बलेन संरुद्धम्॥५॥ किं बलमेव हन्मि न मागधम्। मागधं वा हत्वा बलं गृह्णामि। यद्वा । समागधं सर्वं हन्मीति चिंतयामास। ननु प्रथमं कथं जेष्यामीत्येवं चिंतयितुं युक्तं तत्राह। कारण-मानुष इति। भूभारावतारकारणेन मानुषो न तु तत्त्वत इति॥६॥ एवं त्रिधा विचिंत्य प्रथमं पक्षं निर्धारितवांस्तदाह चतुर्भिः। हनिष्यामीति ॥७॥ वधोद्यमं कर्ता करिष्यतीति॥८॥ नन्व-

॥ श्रीशुक उवाच ॥ अस्तिः प्राप्तिश्च कंसस्य महिष्यौ भरतर्षभ ॥ मृते भर्तरि दुःखार्ते ईयतुः स्म पितुर्गृहान् ॥ १ ॥ पित्रे मगधराजाय जरासंधाय दुःखिते ॥ वेदयांचक्रतुः सर्वमात्मवैधव्यकारणम् ॥ २ ॥ स तदप्रियमाकर्ण्य शोकामर्षयुतो नृप ॥ अयादवीं महीं कर्तुं चक्रे परममुद्यमम् ॥३॥ अक्षौहिणीभिर्विंशत्या तिसृभिश्चापि संवृतः ॥ यदुराजधानीं मथुरां न्यरुणत्सर्वतो दिशम् ॥४॥ निरीक्ष्य तद्बलं कृष्ण उद्वेलमिव सागरम् ॥ स्वपुरं तेन संरुद्धं स्वजनं च भयाकुलम् ॥ ५ ॥ चिंतयामास भगवान्हरिः कारणमनुषः ॥ तद्देशकालानुगुणं स्वावतारप्रयोजनम् ॥ ६ ॥ हनिष्यामि बलं ह्येतद्भुवि भारं समाहितम् ॥ मागधेन समानीतं वश्यानां सर्वभूभुजाम् ॥ ७ ॥ अक्षौहिणीभिः संख्यातं भटाश्वरथकुंजरैः ॥ मागधस्तु न हंतव्यो भूयः कर्ता बलोद्यमम् ॥ ८ ॥ एतदर्थोऽवतारोऽयं भूभारहरणाय मे ॥ संरक्षणाय साधूनां कृतोऽन्येषां वधाय च ॥ ९ ॥ अन्योऽपि धर्मर-क्षायै देहः संभ्रियते मया ॥ विरामायाप्यधर्मस्य काले प्रभवतः क्वचित् ॥ १० ॥ एवं ध्यायति गोविंद आकाशात्सूर्यवर्चसौ ॥ रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ॥ ११ ॥ आयुधानि च दिव्यानि पुराणानि यदृच्छया ॥ दृष्ट्वा तानि हृषीकेशः संकर्षणमथाब्रवीत् ॥ १२ ॥ पश्यार्य व्यसनं प्राप्तं यदूनां त्वावतां प्रभो ॥ एष ते रथ आयातो दयितान्यायुधानि च ॥ १३ ॥ यानमास्थाय जह्येतद्व्यसनात्स्वान्समुद्धर ॥ एतदर्थं हि नौ जन्म साधूनामीश शर्मकृत् ॥ १४ ॥ त्रयोविंशत्यनीकाख्यं भूमेर्भारमपाकुरु ॥ एवं संमंत्र्य दाशार्हौ दंशितौ रथिनौ पुरात् ॥ १५ ॥ निर्जग्मतुः स्वायुधाढ्यौ बलेनाल्पीयसा वृतौ ॥ शंखं दध्मौ विनिर्गत्य हरिर्दारुकसारथिः ॥ १६ ॥ ततोऽभूत्परसैन्यानां हृदि वित्रासवेपथुः ॥ तावाह मागधो वीक्ष्य हे कृष्ण पुरुषाधम ॥ १७ ॥ न त्वया योद्धुमिच्छामि बालेनैकेन लज्जया ॥ गुप्तेन हि त्वया मंद न योत्स्ये याहि बंधुहन् ॥ १८ ॥ तव

त एव हंतव्यस्तत्राह। एतदर्थ इति। एतच्छब्दार्थं स्पष्टयति। भूभारहरणायेति ॥९॥ अयमेतदर्थोऽवतार इत्युपलक्षणमित्याह। अन्योऽपीति। प्रभवत उद्भवतः ॥ १० ॥ ससूतौ सारथिसहितौ। परिच्छदः परिकरो ध्वजकवचादिस्तत्सहितौ ॥ ११ ॥ १२ ॥ त्वमेवावन् रक्षको नाथो विद्यते येषां ते त्वावंतस्तेषाम् ॥ १३ ॥ १४ ॥ दंशितौ बद्धकवचौ ॥ १५ ॥ स्वायुधाढ्यौ शोभनायुधसंपन्नौ ॥१६॥ पुरुषा अधमा यस्मादिति वास्तवोऽर्थः। हे पुरुषोत्तमेति ॥१७॥ गुप्तेन सर्वांतरत्वाद्दर्शनानर्हेण। हे मंद! बध्नातीति बंधुरविद्या तां हंतीति तथा हे अविद्यानिरसनेति। याहि प्राप्नुहि ॥१८॥

अच्छेद्यदेहोऽसाविति स्वयमेव मत्वा परितोषात्पक्षांतरमाह । यद्वा मां जहीति ॥ १९ ॥ यथाश्रुतार्थग्रहणेन भगवत उत्तरं न वै शूरा इति । विकत्थंते श्लाघंते ॥ २० ॥ माधवौ मधुवंशभवौ । महता सैन्यसमूहेनावृतवान् । वायुरभ्रैः स्वयं रेणुभिश्चाग्निं यथेत्यदर्शनमात्रमेवावरणमिति सूचितम् ॥ २१ ॥ २२ ॥ परस्यानीकानि सैन्यानि तान्येव पयोमुचो मेघास्तेषां शिलीमुखा बाणास्तेषामत्युल्बणं वर्षं तेन पीडितम् । व्यस्फूर्जयदुज्जृम्भितवान् ॥ २३ ॥ तदाह । गृह्णन्निति । निषंगादिषुधेः शरान् गृह्णन् अथ तान्गुणे संदधत् । गुणमाकृष्य निशितबाणसमूहान्मुंचन् । निघ्नन्प्रहरन् । पत्तिः पदातिः निरंतरमिति ग्रहणादिक्रियाविशेषणम् । ज्वलत्काष्ठं भ्रमणे यथा चक्रवद्भवति तद्वद्व्यस्फूर्जयदिति ॥ २४ ॥ हता अश्वा ध्वजाः सूता नायका रथिनश्च येषु ते ॥ २५ ॥ संछिद्यमाना द्विपदा इभा वाजिनश्च तेषामंगेभ्यः प्रसूता असृगापगा रुधिरनद्यः परस्परं प्रवर्तिता इति तृतीयेनान्वयः । प्रसिद्धनदीरूपकमाह । भुजा एवाहयो यासु ताः । पुरुषाणां शीर्षाण्येव कच्छपा यासु

राम यदि श्रद्धा युद्ध्यस्व धैर्यमुद्वह ॥ हित्वा वा मच्छरैश्छिन्नं देहं स्वर्याहि मां जहि ॥ १९ ॥ श्रीभगवानुवाच ॥ न वै शूरा विकत्थंते दर्शयंत्येव पौरुषम् ॥ न गृह्णीमो वचो राजन्नातुरस्य मुमूर्षतः ॥ २० ॥ श्रीशुक उवाच ॥ जरासुतस्तावभिसृत्य माधवौ महाबलौघेन बलीयसाऽऽवृणोत् ॥ ससैन्ययानध्वजवाजिसारथी सूर्यानलौ वायुरिवाभ्ररेणुभिः ॥ २१ ॥ सुपर्णतालध्वजचिह्नितौ रथावलक्षयंत्यो हरिरामयोर्मृधे ॥ स्त्रियः पुराट्टालकहर्म्यगोपुरं समाश्रिताः संमुमुहुः शुचार्दिताः ॥२२॥ हरिः परानीकपयोमुचां मुहुः शिलीमुखात्युल्बणवर्षपीडितम् ॥ स्वसैन्यमालोक्य सुरासुरार्चितं व्यस्फूर्जयच्छार्ङ्गशरासनोत्तमम् ॥ २३ ॥ गृह्णन्निषंगादथ संदधच्छरान्विकृष्य मुंचन् शितबाणपूगान् ॥ निघ्नन्रथान्कुञ्जरवाजिपत्तीन्निरंतरं यद्वदलातचक्रम्॥२४॥निर्भिन्नकुंभाः करिणो निपेतुरनेकशोऽश्वाः शरवृक्णकंधराः॥ रथाहताश्वध्वजसूतनायकाः पदातयश्छिन्नभुजोरुकंधराः॥२५॥ संछिद्यमानद्विपदेभवाजिनामंगप्रसूताः शतशोऽसृगापगाः॥ भुजाहयः पूरुषशीर्षकच्छपाहतद्विपद्वीपहयग्रहाकुलाः ॥२६॥ करोरुमीनानरकेशशैवलाधनुस्तरंगायुधगुल्मसंकुलाः॥अच्छूरिकावर्तभयानकामहामणिप्रवेकाभरणाश्मशर्कराः॥२७॥प्रवर्तिता भीरुभयावहा मृधे मनस्विनां हर्षकरीः परस्परम्॥ विनिघ्नताऽरीन्मुसलेन दुर्मदान्संकर्षणेनापरिमेयतेजसा ॥२८॥ बलं तदंगार्णवदुर्गभैरवं दुरंतपारं मगधेन्द्रपालितम् ॥ क्षयं प्रणीतं वसुदेवपुत्रयोर्विक्रीडितं तज्जगदीशयोः परम्॥२९॥स्थित्युद्भवांतं भुवनत्रयस्य यः समीहतेऽनंतगुणः स्वलीलया॥ न तस्य चित्रं परपक्षनिग्रहस्तथापि मर्त्यानुविधस्य वर्ण्यते ॥३०॥ जग्राह विरथं

ताः । हता द्विपा एव द्वीपा अंतर्वर्तितटानि हया एव ग्रहा ग्राहास्तैश्चाकुला व्याप्ताः ॥ २६ ॥ करा उरवश्च मीना यासु ताः । नराणां केशा एव शैवलं यासु ताः । धनूंष्येव तरंगा आयुधान्येव गुल्मास्तैश्च तैश्च संकुलाः । अच्छूरिकाश्चर्माणि चक्राणि वा तान्येवावर्तास्तैर्भयानकाः । महामणीनां प्रवेका उत्तमा आभरणानि च यथायथमश्मानः शर्कराश्च यासु ताः ॥ २७ ॥ भीरूणां भयावहाः । मनस्विनां धीराणां हर्षकर्यः ॥ २८ ॥ किंच संकर्षणेनापि तद्बलं क्षयं प्रणीतम् । अंग हे राजन् । अर्णववद्दुर्गं दुर्गमं भैरवं भयंकरं च । यतो दुरंतपारम् । अंतोऽत्र तलम् । पारमवधिः । दुःशब्दो निषेधे । विक्रमेणागाधं देशतश्च निरवधिकमित्यर्थः । किंच मगधेन्द्रेण च पालितं बलम् । यदेवभूतं रामकृष्णयोः कर्मोक्तं तत्परं केवलं तयोर्विक्रीडितं न तु पराक्रमः ॥ २९ ॥ न चैतदाश्चर्यमित्याह । स्थित्युद्भवांतमिति । तर्हि किमित्याश्चर्यमिव वर्णितं तत्राह । तथापीति । मर्त्याननुविधत्तेऽनुकरोतीति मर्त्यानुविधस्तस्य ॥ ३० ॥ किंच जग्राहेति । हतान्यनीकानि यस्य अवशिष्टा

असव एव यस्य तं च तं च ॥ ३१ ॥ हता बहुशोऽरातयो येन तथाभूतमपि जरासन्धं वध्यमानं वारयामासेति ॥३२॥३३॥ पवित्रार्थानि धर्मोपदेशपराणि पदानि येषु तैर्वाक्यैः । नयनैर्नीतिभिः । प्राकृतैर्लौकिकैः । तत्र लौकिकन्यायमाहुः । स्वकर्मेति । यदुभिरल्पकैः कृत्वा ते महतः पराभवः केवलं कर्मबंधेन प्राप्तोऽतस्त्वया न लज्जितव्यमिति ॥३४॥ बार्हद्रथो जरासंधः ॥३५॥ मुकुंदोऽपि ययावित्यनुषङ्गः । न क्षतं बलं यस्य सः । तस्यैवामृतदृष्ट्या क्षतप्रतिसंधानादिति भावः । निस्तीर्णोऽनायासेनैव तीर्णोऽरिबलार्णवो येन । साधु साधु इत्यनुमोदितश्च ॥३६॥ प्रत्युद्यातैर्मथुरावासिभिर्जनैः उपसङ्गम्य मिलित्वा ॥३७॥ तदा प्रभौ पुरं प्रविशति सति शंखादयो नेदुः ॥३८॥ कथंभूतां पुरं तदाह । सिक्तमार्गामिति । ब्रह्मघोषेण वेदघोषेण निर्घुष्टां निनादिताम् ।

रामो जरासन्धं महाबलम् ॥ हतानीकावशिष्टासुं सिंहः सिंहमिवौजसा ॥ ३१ ॥ वध्यमानं हतारातिं पाशैर्वारुणमानुषैः ॥ वारयामास गोविंदस्तेन कार्यचिकीर्षया ॥ ३२ ॥ स मुक्तो लोकनाथाभ्यां व्रीडितो वीरसंमतः ॥ तपसे कृतसंकल्पो वारितः पथि राजभिः ॥ ३३ ॥ वाक्यैः पवित्रार्थपदैर्नयनैः प्राकृतैरपि ॥ स्वकर्मबंधप्राप्तोऽयं यदुभिस्ते पराभवः ॥३४॥ हतेषु सर्वानीकेषु नृपो बार्हद्रथस्तदा ॥ उपेक्षितो भगवता मगधान्दुर्मना ययौ ॥ ३५ ॥ मुकुन्दोऽप्यक्षतबलो निस्तीर्णारिबलार्णवः ॥ विकीर्यमाणः कुसुमैस्त्रिदशैरनुमोदितः ॥ ३६ ॥ माथुरैरुपसंगम्य विज्वरैर्मुदितात्मभिः ॥ उपगीयमानविजयः सूतमागधबंदिभिः ॥३७॥ शंखदुन्दुभयो नेदुर्भेरीतूर्याण्यनेकशः ॥ वीणावेणुमृदङ्गानि पुरं प्रविशति प्रभौ ॥ ३८ ॥ सिक्तमार्गां हृष्टजनां पताकाभिरलंकृताम् ॥ निर्घुष्टां ब्रह्मघोषेण कौतुकाबद्धतोरणाम् ॥ ३९ ॥ निचीयमानो नारीभिर्माल्यदध्यक्षतांकुरैः ॥ निरीक्ष्यमाणः सस्नेहं प्रीत्युत्कलितलोचनैः ॥ ४० ॥ आयोधनगतं वित्तमनन्तं वीरभूषणम् ॥ यदुराजाय तत्सर्वमाहृतं प्रादिशत्प्रभुः ॥ ४१ ॥ एवं सप्तदशकृत्वस्तावत्यक्षौहिणीबलः ॥ युयुधे मागधो राजा यदुभिः कृष्णपालितैः ॥ ४२ ॥ अक्षिण्वंस्तद्बलं सर्वं वृष्णयः कृष्णतेजसा ॥ हतेषु स्वेष्वनीकेषु त्यक्तोऽयादरिभिर्नृपः ॥४३॥ अष्टादशमे संग्राम आगामिनि तदन्तरा ॥ नारदप्रेषितो वीरो यवनः प्रत्यदृश्यत ॥४४॥ रुरोध मथुरामेत्य तिसृभिर्म्लेच्छकोटिभिः ॥ नृलोके चाप्रतिद्वन्द्वो वृष्णीन् श्रुत्वाऽऽत्मसंमितान् ॥ ४५ ॥ तं दृष्ट्वाऽचिंतयत्कृष्णः संकर्षणसहायवान् ॥ अहो यदूनां वृजिनं प्राप्तं ह्युभयतो महत् ॥ ४६ ॥ यवनोऽयं निरुंधेऽस्मानद्य तावन्महाबलः ॥ मागधोऽप्यद्य वा श्वो वा परश्वो वाऽऽगमिष्यति ॥ ४७ ॥ आवयोर्युध्यतोरस्य यद्यागन्ता जरासुतः ॥ बंधून्वधिष्यत्यथवा नेष्यते स्वपुरं बली ॥ ४८ ॥ तस्मादद्य विधास्यामो दुर्गं द्विपददुर्गमम् ॥ तत्र ज्ञातीन्समाधाय यवनं

कौतुकेनोत्सवेन आसर्वतो बद्धानि तोरणानि यस्यां ताम् ॥ ३९ ॥ निचीयमानो विकीर्यमाणः । प्रविवेशेति विपरिणताऽनुषङ्गः ॥ ४० ॥ आयोधनं रणभूमिस्तत्रस्थं वित्तम् । वीराणां भूषणम् ॥ ४१ ॥ तावतीति छेदः । तावति पराजये वर्तमानेऽप्यक्षौहिण्यो बलं यस्य सः । सप्तदशकृत्वः सप्तदशवारान्युयुधे ॥४२॥ अक्षिण्वन् क्षयं निन्युः ॥ ४३ ॥ अष्टादशमेऽष्टादशे संग्रामे प्राप्ते तन्मध्येऽकस्मात्कालयवनः प्राप्तः ॥४४॥ आत्मसंमितान्स्वतुल्यान् ॥४५॥ वृजिनं दुःखम् । उभयतो यवनाज्जरासंधाच्च ॥४६॥ तदाह द्वयेन । निरुंधे निरुणद्धि ॥४७॥ अस्य अनेन ॥४८॥

॥ ४९ ॥ समुद्रमध्ये दुर्गं तन्मध्ये नगरम् । कृत्स्नाद्भुतं सर्वाश्चर्यमयम् । अचीकरत्कारयामास ॥ ५० ॥ त्वष्टा विश्वकर्मा तदीयं शिल्पनैपुणं च क्रियाकौशलम् । तदाह सार्द्धैस्त्रिभिः। रथ्येति । रथ्या राजमार्गाः पुरतः वीथ्य उपमार्गाः पश्चिमतः उभयतोऽपि चत्वराण्यङ्गणानि तन्मध्ये कोष्ठास्ततोऽप्यंतः सुवर्णभवनानि तदुपरि स्फाटिकाट्टालिकास्तदुपरि हेमकुंभा इति बहुभूमिकम् । यथावास्तु वास्तु गृहादिनिर्माणस्थानं तदनतिक्रम्य विनिर्मितम् ॥५१॥ सुराणां द्रुमा लताश्च येषु तान्युद्यानानि विचित्रोपवनानि च तैरन्वितम्। हेममयानि शृङ्गाणि येषु तैः। दिविस्पृग्भिरत्युच्चैः। स्फाटिका अट्टाला उपरिभूमिका गोपुराणि द्वाराणि च तैर्निर्मितमित्युत्तरेणान्वयः ॥५२॥ राजतारकुटैः रजतं च आरकूटं च पीतलोहं ताभ्यां निर्मितैः कोष्ठैरश्वशालाश्वशालादिभिः । कथंभूतैः । हेमकुंभैरलंकृतैः तथा रत्नकूटैः पद्मरागादिशिखरैः हैमैः सौवर्णैः । महामरकतमयानि स्थलानि येषु तैर्गृहैश्च ॥५३॥ किंच नगरगृहादौ वास्तोष्पतीनां देवानां च गृहैर्वलभीभिश्चंद्रशालिकाभिश्च निर्मितम् । यदुदेवगृहे राजगृहैरुल्लसच्छोभमानम् ॥५४॥ पारिजातं च प्राहिणोत्प्रस्थापयामासेति शुकपरीक्षित्संवादात्पूर्वभावित्वाद्भूतनिर्देशः। मर्त्यधर्मैः क्षुत्पिपासादिषड्र्मिभिः ॥५५॥ निधि-

घातयामहे ॥४९॥ इति सम्मन्त्र्य भगवान् दुर्गं द्वादशयोजनम् ॥ अन्तःसमुद्रे नगरं कृत्स्नाद्भुतमचीकरत् ॥ ५० ॥ दृश्यते यत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुणम् ॥ रथ्याचत्वरवीथीभिर्यथावास्तु विनिर्मितम् ॥ ५१ ॥ सुरद्रुमलतोद्यानविचित्रोपवनान्वितम् ॥ हेमशृङ्गैर्दिविस्पृग्भिः स्फाटिकाट्टालगोपुरैः ॥ ५२ ॥ राजतारकुटैः कोष्ठैर्हेमकुम्भैरलंकृतैः ॥ रत्नकूटैर्गृहैर्हैमैर्महामरकतस्थलैः ॥ ५३ ॥ वास्तोष्पतीनां च गृहैर्वलभीभिश्च निर्मितम् ॥ चातुर्वर्ण्यजनाकीर्णं यदुदेवगृहोल्लसत् ॥५४॥ सुधर्मां पारिजातं च महेंद्रः प्राहिणोद्धरेः ॥ यत्र चावस्थितो मर्त्यो मर्त्यधर्मैर्न युज्यते ॥५५॥ श्यामैककर्णान्वरुणो हयान् शुक्लान्मनोजवान् ॥ अष्टौ निधिपतिः कोशाँल्लोकपालो निजोदयान् ॥ ५६ ॥ यद्यद्भगवता दत्तमाधिपत्यं स्वसिद्धये ॥ सर्वं प्रत्यर्पयामासुर्हरौ भूमिगते नृप ॥५७॥ तत्र योगप्रभावेण नीत्वा सर्वजनं हरिः ॥ प्रजापालेन रामेण कृष्णः समनुमन्त्रितः ॥ निर्जगाम पुरद्वारात्पद्ममाली निरायुधः ॥ ५८ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे दुर्गनिवेशनं नाम पञ्चाशत्तमोऽध्यायः ॥५०॥ श्रीशुक उवाच ॥ तं विलोक्य विनिष्क्रान्तमुज्जिहानमिवोडुपम् ॥ दर्शनीयतमं श्यामं पीतकौशेयवाससम् ॥ १ ॥ श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकंधरम् ॥ पृथुदी-

पतिः कुबेरः अष्टौ कोशान्निधीन् । पद्मश्चैव महापद्मो मत्स्यकूर्मौ तथौदकः ॥ नीलो मुकुंदः शंखश्च निधयोऽष्टौ प्रकीर्तिता इति प्रसिद्धान् । निजोदयान्निजविभूतीः ॥ ५६ ॥ अन्ये च सिद्धादयो भगवता स्वाधिकारसिद्धये यद्यदाधिपत्यं दत्तमासीत्तत्सर्वं प्रत्यर्पयामासुरिति ॥५७॥ यथा कालयवनो न वेत्ति न चासौ जनस्तथा योगप्रभावेण नीत्वा त्वमत्र स्थित्वा प्रजाः पालयाहं पलायिष्य इति समनुमंत्रितः। कृतानुमंत्र इत्यर्थः ॥५८॥ इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे भावार्थदीपिकायां टीकायां पञ्चाशत्तमोऽध्यायः ॥ ५० ॥ एकपञ्चाशत्तमेऽहन्मुचुकुंददृशा हरिः ॥ यवनं मुचुकुंदेन स्तुतः सन्नन्वकंपत ॥ १ ॥ यवनेंद्रसुतात्कालयवनाद्यदुभीषणात् । हरिर्हरगिरः स्वैरं पालनायापलायत ॥ २ ॥ यदा गार्ग्यः श्यालेन षंढ इत्युक्तस्तदा यादवैरुपहसिते क्रुद्धोऽसौ श्रीमहेशं प्रसाद्य यदुभीषणं पुत्रं वरं लब्धवान् । ततश्च यवनेंद्रेणापुत्रेण स्वक्षेत्रे पुत्रोत्पादनाय प्रार्थितो गार्ग्यः कालयवनमजीजनदिति पुराणप्रसिद्धम्। पुरद्वारान्निष्क्रांतम् । उज्जिहानमुद्गच्छंतम् ॥१॥

॥२॥ नित्यप्रमुदितमित्यादि मुखारविंदविशेषणम् ॥३॥४॥ नारदोक्तैरेतैर्लक्षणैरयं पुमान्वासुदेव एव नान्यो भवितुमर्हति । अयं च निरायुधोऽतोऽनेन पद्भ्यामेव चलन्निरायुधोऽहं योत्स्यामीति निश्चित्य तं पराङ्मुखं प्राद्रवंतमन्वधावदित्यन्वयः ॥ ५ ॥ ६ ॥ आत्मानं हस्तप्राप्तमिव दर्शयता दूरं नीत इत्यन्वयः ॥ ७ ॥ अहताशुभोऽक्षीणकर्मा ॥ ८ ॥ ९ ॥ तं शयानमच्युतं मत्वाऽताडयदिति ॥ १० ॥ ११ ॥ तस्य वृद्धस्य दृष्टिपातेन संदीप्तो यः स्वदेहजोऽग्निस्तेन ॥ १२ ॥ यवनमर्दयति हिनस्तीति तथा स कस्य वंश्यः किंवीर्यः कीदृक्प्रभाववान् किंतेजः

घंचतुर्बाहुं नवकञ्जारुणेक्षणम् ॥ २ ॥ नित्यप्रमुदितं श्रीमत्सुकपोलं शुचिस्मितम् ॥ मुखारविंदं बिभ्राणं स्फुरन्मकरकुण्डलम् ॥ ३ ॥ वासुदेवो ह्ययमिति पुमान् श्रीवत्सलांछनः ॥ चतुर्भुजोऽरविंदाक्षो वनमाल्यतिसुन्दरः ॥४॥ लक्षणैर्नारदप्रोक्तैर्नान्यो भवितुमर्हति ॥ निरायुधश्चलन्पद्भ्यां योत्स्येऽनेन निरायुधः ॥ ५ ॥ इति निश्चित्य यवनः प्राद्रवन्तं पराङ्मुखम् ॥ अन्वधावज्जिघृक्षुस्तं दुरापमपि योगिनाम् ॥ ६ ॥ हस्तप्राप्तमिवात्मानं हरिणा स पदे पदे ॥ नीतो दर्शयता दूरं यवनेशोऽद्रिकन्दरम् ॥७॥ पलायनं यदुकुले जातस्य तव नोचितम् ॥ इति क्षिपन्ननुगतो नैनं प्रापाहताशुभः ॥८॥ एवं क्षिप्तोऽपि भगवान्प्राविशद्गिरिकन्दरम् ॥ सोऽपि प्रविष्टस्तत्रान्यं शयानं ददृशे नरम् ॥ ९ ॥ नन्वसौ दूरमानीय शेते मामिह साधुवत् ॥ इति मत्वाऽच्युतं मूढस्तं पदा समताडयत् ॥१०॥ स उत्थाय चिरं सुप्तः शनैरुन्मील्य लोचने ॥ दिशो विलोकयन् पार्श्वे तमद्राक्षीदवस्थितम् ॥ ११ ॥ स तावत्तस्य रुष्टस्य दृष्टिपातेन भारत ॥ देहजेनाग्निना दग्धो भस्मसादभवत्क्षणात् ॥ १२ ॥ राजोवाच ॥ को नाम स पुमान्ब्रह्मन्कस्य किंवीर्य एव च ॥ कस्माद्गुहागतः शिश्ये किंतेजो यवनार्दनः ॥१३॥ श्रीशुक उवाच ॥ स इक्ष्वाकुकुले जातो मांधातृतनयो महान् ॥ मुचुकुंद इति ख्यातो ब्रह्मण्यः सत्यसङ्गरः ॥१४॥ स याचितः सुरगणैरिंद्राद्यैरात्मरक्षणे ॥ असुरेभ्यः परित्रस्तैस्तद्रक्षां सोऽकरोच्चिरम् ॥ १५ ॥ लब्ध्वा गुहं ते स्वःपालं मुचुकुन्दमथाब्रुवन् ॥ राजन्विरमतां कृच्छ्राद्भवान्नः परिपालनात् ॥१६॥ नरलोके परित्यज्य राज्यं निहतकण्टकम् ॥ अस्मान्पालयतो वीर कामास्ते सर्वे उज्झिताः ॥ १७ ॥ सुता महिष्यो भवतो ज्ञातयोऽमात्यमंत्रिणः ॥ प्रजाश्च तुल्यकालीया नाधुना सन्ति कालिताः ॥ १८ ॥ कालो बलीयान्वलिनां भगवानीश्वरोऽव्ययः ॥ प्रजाः कालयते क्रीडन्पशुपालो यथा पशून् ॥१९॥ वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः ॥ एक एवेश्वरस्तस्य भगवान्विष्णुरव्ययः ॥ २०॥ एवमुक्तः स वै देवानभिवंद्य महायशाः ॥ निद्रामेव ततो वव्रे स राजा श्रमकर्षितः ॥ २१ ॥ यः कश्चिन्मम निद्राया भंगं कुर्यात्सुरोत्तमाः ॥ स हि भस्मीभवेदाशु तथोक्तैश्च सुरैस्तदा ॥ अशयिष्ट गुहाविष्टो निद्रया देवदत्तया ॥ २२ ॥ स्वापं यातं यस्तु

कस्य वीर्यं पुत्र इत्यर्थः । शिश्ये अशयिष्ट ॥ १३ ॥ सत्यः संगरो युद्धं प्रतिज्ञा वा यस्य सः ॥१४॥१५॥ गुहं कार्तिकेयम् । स्वःपालं स्वर्गपालकं सेनान्यम् ॥ १६ ॥ उज्झितास्त्यक्ता गता इत्यर्थः ॥१७॥ किंच सुता इति। तुल्यकालीयास्त्वत्समानकालीनाः । कालिता विचालिताः ॥१८॥ मत्प्रजाः कोऽन्यः कालयेदिति चेदत आहुः । काल इति। कालयते इतस्ततश्चालयति ॥१९॥

तस्य कैवल्यस्य ॥ २० ॥ २१ ॥ गुहायां प्रविष्टः शेते स्म ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ धर्षितोऽभिभूतः । दुर्धर्षमप्रधृष्यम् ॥ २८ ॥ विपिनेऽरण्ये तत्रापि गिरेर्गह्वरे दुष्प्रवेशस्थाने तत्राप्युरुकंटके पद्मपलाशसदृशाभ्यां पद्भ्यां विचरसीति ॥ २९ ॥ तेजोमूर्तिः प्रभावो दीप्तिर्वा ॥ ३० ॥ सर्वत्रापरितोषादाह । मन्य इति । पुरुषर्षभं श्रीविष्णुम् । गुहाध्वांतमतस्तमः ॥ ३१ ॥

मध्ये बोधयेत्त्वामचेतनः ॥ स त्वया दृष्टमात्रस्तु भस्मीभवतु तत्क्षणात् ॥ २३ ॥ यवने भस्मसान्नीते भगवान्सात्वतर्षभः ॥ आत्मानं दर्शयामास मुचुकुन्दाय धीमते ॥ २४ ॥ तमालोक्य घनश्यामं पीतकौशेयवाससम् ॥ श्रीवत्सवक्षसं भ्राजत्कौस्तुभेन विराजितम् ॥ २५ ॥ चतुर्भुजं रोचमानं वैजयन्त्या च मालया ॥ चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् ॥ २६ ॥ प्रेक्षणीयं नृलोकस्य सानुरागस्मितेक्षणम् ॥ अपीच्यवयसं मत्तमृगेंद्रोदारविक्रमम् ॥२७॥ पर्यपृच्छन्महाबुद्धिस्तेजसा तस्य धर्षितः॥ शंकितः शनकै राजा दुर्धर्षमिव तेजसा ॥२८॥ मुचुकुन्द उवाच ॥ को भवानिह संप्राप्तो विपिने गिरिगह्वरे ॥ पद्भ्यां पद्मपलाशाभ्यां विचरस्युरुकण्टके ॥२९॥ किंस्वित्तेजस्विनां तेजो भगवान्वा विभावसुः॥ सूर्यः सोमो महेंद्रो वा लोकपालोऽपरोऽपि वा ॥३०॥ मन्ये त्वां देवदेवानां त्रयाणां पुरुषर्षभम् ॥ यद्बाधसे गुहाध्वांतं प्रदीपः प्रभया यथा ॥३१॥ शुश्रूषतामव्यलीकमस्माकं नरपुङ्गव ॥ स्वजन्मकर्मगोत्रं वा कथ्यतां यदि रोचते ॥३२॥ वयं तु पुरुषव्याघ्र ऐक्ष्वाकाः क्षत्रबंधवः ॥ मुचुकुन्द इति प्रोक्तो यौवनाश्वात्मजः प्रभो ॥३३॥ चिरप्रजागरश्रांतो निद्रयाऽपहतेंद्रियः॥ शयेऽस्मिन्विजने कामं केनाप्युत्थापितोऽधुना ॥३४॥ सोऽपि भस्मीकृतो नूनमात्मीयेनैव पाप्मना॥ अनन्तरं भगवाञ्छ्रीमांल्लक्षितोऽमित्रशातनः ॥३५॥ तेजसा तेऽविषह्येण भूरि द्रष्टुं न शक्नुमः॥ हृतौजसो महाभाग माननीयोऽसि देहिनाम् ॥३६॥ एवं संभाषितो राज्ञा भगवान्भूतभावनः ॥ प्रत्याह प्रहसन्वाण्या मेघनादगभीरया॥ ३७॥ श्रीभगवानुवाच ॥ जन्मकर्माभिधानानि संति मेऽङ्ग सहस्रशः ॥ न शक्यंतेऽनुसंख्यातुमनंतत्वान्मयाऽपि हि ॥३८॥ क्वचिद्रजांसि विममे पार्थिवान्युरुजन्मभिः॥ गुणकर्माभिधानानि न मे जन्मानि कर्हिचित् ॥३९॥ कालत्रयोपपन्नानि जन्मकर्माणि मे नृप ॥ अनुक्रमंतो नैवांतं गच्छन्ति परमर्षयः ॥ ४० ॥ तथाऽप्यद्यतनान्यङ्ग शृणुष्व गदतो मम ॥ विज्ञापितो विरिंचेन पुराऽहं धर्मगुप्तये ॥ भूमेर्भारायमाणानामसुराणां क्षयाय च ॥४१॥ अवतीर्णो यदुकुले गृह आनकदुंदुभेः ॥ वदंति वासुदेवेति वसुदेवसुतं हि माम् ॥४२॥ कालनेमिहतः कंसः प्रलम्बाद्याश्च सद्द्विषः ॥ अयं च यवनो दग्धो राजंस्ते तिग्मचक्षुषा ॥ ४३ ॥ सोऽहं तवानुग्रहार्थं गुहामेतामुपागतः ॥ प्रार्थितः प्रचुरं पूर्वं त्वयाऽहं भक्तवत्सलः ॥ ४४ ॥ वरान्वृणीष्व राजर्षे सर्वान्कामान्ददामि ते ॥ मां प्रपन्नो जनः कश्चिन्न भूयोऽर्हति

॥ ३२ ॥ वयं त्विति वंश्याभिप्रायेण बहुवचनम् । तेष्वहं मुचुकुंद इति प्रोक्त इति । युवनाश्वो मांधातुः पिताऽतो यौवनाश्वः ॥ ३३–३८ ॥ क्वचित्कदाचित्कश्चिद्यद्यपि रजांस्यपि विममे गणितवांस्तथापि जन्मानि कर्माणि च न विममीते ॥ ३९–४२ ॥ ते तिग्मचक्षुषा निमित्तेन मयैव दग्धः ॥ ४३ ॥ ४४ ॥ अपूर्णोऽहमिति शोचितुम् । यद्वा । अन्यैर्दत्तेषु वरेषु क्षीयमाणेषु

यथा शोचति नैवं मां प्रपन्नः । मद्दत्तवराणामक्षय्यत्वादिति भावः ॥ ४५ ॥ अष्टाविंशतिमे युगे भगवानवतरिष्यतीति वृद्धगर्गवाक्यमनुस्मरन्नित्यर्थः ॥४६॥ त्वद्भक्तिरेव केवलं दुर्लभा कामास्तु तुच्छा न वरणयोग्या । इत्याशयेनाभक्तानां संसारमष्टभिः प्रपंचयन् स्तौति । विमोहित इति । हे ईश! योषित्पुरुषश्चेति द्विविधोऽप्ययं जनस्त्वदीयया मायया विमोहितोऽतोऽनर्थदृक् । अनर्थे संसारे दृक् दृष्टिर्यस्यासौ । यद्वा । अर्थं परमार्थस्वरूपं त्वां न पश्यतीति तथा । अतस्त्वां न भजति किंतु परस्परं वंचितः सन्सुखेच्छया दुःखानामेव प्रभवो येषु तेषु गृहेष्वेव सज्जत इति ॥४७॥ किंच कामसुखं सूकरादिष्वपि संभवति । भगवद्भजनं तु न मानुषजन्मव्यतिरेकेणेति मानुषत्वं प्राप्य त्वामभजन्नतिमूढ इत्याह । लब्ध्वेति । अत्र कर्मभूमौ । अव्यङ्गमविकलांगम् । किंच । असति विषयसुखे मतिर्यस्य सः । गृहमेवांधकूपस्तस्मिन्निपतितः । यथा पशुस्तृणलुब्धोऽन्धकूपे पततीति ॥ ४८ ॥ न केवलमस्य जनस्येयं गतिः किंतु ममापि तथैवेत्याह । ममैष इति । मर्त्ये शरीरे आत्मबुद्धिर्यस्य तस्य ममात एव सुतादिष्वासज्जमानस्य ॥४९॥ उन्नद्धमदत्वं प्रपञ्चयति। कलेवर इति । घटकुड्यादिसदृशे दृश्येऽनात्मनि यत एवं सुदुर्मदोऽभवमतो ममैष कालो निष्फलो

शोचितुम् ॥ ४५ ॥ श्रीशुक उवाच ॥ इत्युक्तस्तं प्रणम्याह मुचुकुन्दो मुदाऽन्वितः ॥ ज्ञात्वा नारायणं देवं गर्गवाक्यमनुस्मरन् ॥४६॥ मुचुकुन्द उवाच ॥ विमोहितोऽयं जन ईश मायया त्वदीयया त्वां न भजत्यनर्थदृक् ॥ सुखाय दुःखप्रभवेषु सज्जते गृहेषु योषित्पुरुषश्च वंचितः ॥ ४७ ॥ लब्ध्वा जनो दुर्लभमत्र मानुषं कथंचिदव्यङ्गमयत्नतोऽनघ ॥ पादारविंदं न भजत्यसन्मतिर्गृहांधकूपे पतितो यथा पशुः ॥४८॥ ममैष कालोऽजित निष्फलो गतो राज्यश्रियोन्नद्धमदस्य भूपतेः ॥ मर्त्यात्मबुद्धेः सुतदारकोशभूष्वासज्जमानस्य दुरन्तचिंतया ॥४९॥ कलेवरेऽस्मिन्घटकुड्यसंनिभे निरूढमानो नरदेव इत्यहम् ॥ वृतो रथेभाश्वपदात्यनीकपैर्गां पर्यटंस्त्वाऽगणयन्सुदुर्मदः ॥५०॥ प्रमत्तमुच्चैरितिकृत्यचिंतया प्रवृद्धलोभं विषयेषु लालसम् ॥ त्वमप्रमत्तः सहसाऽभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमंतकः ॥५१॥ पुरा रथैर्हेमपरिष्कृतैश्चरन्मतङ्गजैर्वा नरदेवसंज्ञितः ॥ स एव कालेन दुरत्ययेन ते कलेवरो विट्कृमिभस्मसंज्ञितः ॥५२॥ निर्जित्य दिक्चक्रमभूतविग्रहो वरासनस्थः समराजवंदितः ॥ गृहेषु मैथुन्यसुखेषु योषितां क्रीडामृगः पूरुष ईश नीयते ॥ ५३ ॥ करोति कर्माणि तपः सुनिष्ठितो निवृत्तभोगस्तदपेक्षयाऽददत् ॥ पुनश्च भूयेयमहं स्वराडिति प्रवृद्धतर्षो न सुखाय कल्पते ॥५४॥

गत इति ॥५०॥ त्वामगणयंतं त्वमाक्रमसीत्याह । प्रमत्तमिति । प्रमत्तमनवहितम् । त्वामंतकमविगणय्य देहादिष्वासक्तमिति यावत् । कुतः प्रमत्तम् । इतिकृत्यचिंतया एवमेवं करणीयमिति मनोरथपरंपरया । मनोरथे भग्नेऽपि विषयेषु लालसमुत्सुकम् । प्राप्तेऽपि पुनः प्रवृद्धो लोभस्तृष्णा यस्य तमंतकस्त्वमभिपद्यसेऽभिभवसीत्यर्थः । क्षुधा सृक्किणी लेलिहानोऽहिराखुं मूषकमिवेति ॥५१॥ किंच कालात्मना त्वयाऽभिपन्नो देह एवं भवतीत्याह । पुरेति । श्वशृगालादिभिर्भक्षितो विट्संज्ञितस्तैरभक्षितः कृमिसंज्ञितो दग्धो भस्मसंज्ञितो भवति इति बुद्ध्या विचार्यैवंभूते शरीरे ममतां कुर्वंता जना हरिं नाराधयंति । ते आत्मनि शत्रुभूता ज्ञेयाः सततम् । यतः । योनेः सहस्राणि बहूनि गत्वा दुःखेन लब्ध्वाऽपि च मानुषत्वम् ॥ सुखावहं ये न भजंति विष्णुं ते वै मनुष्यात्मनि शत्रुभूता इति ॥५२॥ किंच आतंकप्राप्तेः प्रागपि दिग्विजयिनो राज्ञोऽपि पारतंत्र्यदुःखं तदवस्थमेवेत्याह । निर्जित्येति । अभूतविग्रहोऽविद्यमानसंग्रामः । पूर्वं ये समाना राजानस्तै राजभिर्वंदितोऽपि मिथुनीभावः सुरतमेव परं सुखं येषु तेषु योषितां गृहेषु क्रीडामृग इव इतस्ततो नीयते ॥५३॥ किंच तत्रातितृष्णाकुलस्य न भोगक्षणः कश्चिदस्तीत्याह । करोतीति । तपस्यधःशयनब्रह्मचर्यादौ

सुनिष्ठितः । पुनश्च स्वराडिंद्रः स्यामिति । यद्वा । जन्मांतरेष्वेवमेव चक्रवर्ती स्यामिति ॥५४॥ तदेवमष्टभिः श्लोकैरीशबहिर्मुखानां संसारं प्रपंच्य भक्त्या तन्निवृत्तिक्रममाह । भवापवर्ग इति। हे अच्युत ! भ्रमतः संसरतो जनस्य यदा त्वदनुग्रहेण भवस्य बंधस्यापवर्गोऽन्तो भवेत्प्राप्तकालः स्यात्तदा सतां संगमो भवेत् । यदा च सत्सङ्गमो भवेत्तदा सर्वसङ्गनिवृत्त्या कार्यकारणनियंतरि त्वयि भक्तिर्भवति । ततो मुच्यत इत्यर्थः ॥५५॥ मम तु सत्सङ्गमात्पूर्वमेव यो राज्यादिसङ्गविच्छेदो जातः सोऽयं त्वया महाननुग्रहः कृत इत्याह । मन्य इति । ते त्वया साधुभिर्विवेकिभिस्तपसे वनं प्रवेष्टुमिच्छद्भिः स्वयं त्यक्तुमलभमानैः प्रार्थ्यत इति ॥५६॥ तदेवं विषयसेवामार्गं भगवत्सेवामार्गं च विविच्य वरान् वृणीष्वेति यदुक्तं तत्रोत्तरमाह । न कामय इति । अकिंचना निवृत्ताभिमानाः । आर्यो विवेकी ॥५७॥ रजस्तमःसत्त्वगुणैरनुबध्यत इति तथा ता आशिष ऐश्वर्यादिशत्रुमारणादिधर्मादिरूपा विसृज्य परं पुरुषमीश्वरं ज्ञप्तिमात्रं ज्ञानघनम् । कुतः । निरञ्जनम् । तत्कुतः । निर्गु-

भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागमः ॥ सत्संगमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः ॥ ५५ ॥ मन्ये ममानुग्रह ईश ते कृतो राज्यानुबंधापगमो यदृच्छया ॥ यः प्रार्थ्यते साधुभिरेकचर्यया वनं विविक्षद्भिरखंडभूमिपैः ॥५६॥ न कामयेऽन्यं तव पादसेवनादकिंचन प्रार्थ्यतमाद्वरं विभो ॥ आराध्य कस्त्वां ह्यपवर्गदं हरे वृणीत आर्यो वरमात्मबंधनम् ॥ ५७ ॥ तस्माद्विसृज्याशिष ईश सर्वतो रजस्तमःसत्त्वगुणानुबंधनाः ॥ निरंजनं निर्गुणमद्वयं परं त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम् ॥ ५८ ॥ चिरमिह वृजिनार्तस्तप्यमानोऽनुतापैरवितृषषडमित्रोऽलब्धशांतिः कथंचित् ॥ शरणद समुपेतस्त्वत्पदाब्जं परात्मन्नभयमृतमशोकं पाहि मापन्नमीश ॥ ५९ ॥ श्रीभगवानुवाच ॥ सार्वभौम महाराज मतिस्ते विमलोर्जिता ॥ वरैः प्रलोभितस्यापि न कामैर्विहता यतः ॥ ६० ॥ प्रलोभितो वरैर्यत्त्वमप्रमादाय विद्धि तत् ॥ न धीर्मय्येकभक्तानामाशीर्भिर्भिद्यते क्वचित् ॥ ६१ ॥ युंजानानामभक्तानां प्राणायामादिभिर्मनः ॥ अक्षीणवासनं राजन्दृश्यते पुनरुत्थितम् ॥ ६२ ॥ विचरस्व महीं कामं मय्यावेशितमानसः ॥ अस्त्वेव नित्यदा तुभ्यं भक्तिर्मय्यनपायिनी ॥ ६३ ॥ क्षात्रधर्मस्थितो जंतून्न्यवधीर्मृगयादिभिः ॥ समाहितस्तत्तपसा जह्यघं मदुपाश्रितः ॥ ६४ ॥ जन्मन्यनंतरे राजन्सर्वभूतसुहृत्तमः ॥ भूत्वा द्विजवरस्त्वं वै मामुपैष्यसि केवलम् ॥ ६५ ॥ इति श्रीमद्भागवते महापुराणे दश-

णम् । तदपि कुतः । अद्वयम् । अतएव अक्षरं त्वां शरणं व्रजामीति ॥५८॥ मुंचव तावद्भोगान्कैवल्यं तु करस्थमेवेति पुनर्वरैः प्रलोभयंतं श्रीकृष्णं पादोपग्रहणेन प्रार्थयते । चिरमिति । वृजिनैः कर्मफलैरार्तः पुनस्तद्वासनाभिस्तप्यमानस्तथाऽप्यवितृषषडमित्रः । तृडेव तृषा तृष्णा । न विगततृषाः षडमित्राः शत्रव इन्द्रियलक्षणा यस्य सः । अतएवालब्धशांतिः कथंचिद्दैववशेन लब्धशांतिरिति वा । शरणं स्वज्ञानं तद्ददातीति तथा हे शरणद । समुपेतः प्राप्तोऽहम् । अशोकत्वे हेतुः । अभयम् । तत्रापि हेतुः । ऋतं सत्यम् । आपन्नमापदा व्याप्तं पाहीति ॥ ५९ ॥ ६० ॥ अप्रमादाय प्रमादाय न भवत्येव । कुत इत्यत आह । न धीरिति । एकांतभक्तानां धीराशीर्भिः प्राप्ताभिरपि न भिद्यते नासज्जत इत्यर्थः ॥ ६१ ॥ व्यतिरेकमाह । युंजानानामिति । उत्थितं विषयाभिमुखम् ॥६२॥ तुभ्यं तव ॥ ६३ ॥ युक्त्याभासेन भीषयंस्तपसि लोकसंग्रहे प्रवर्तयति । क्षात्रधर्मेति ॥ ६४ ॥ ६५ ॥ इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे एकपञ्चाशत्तमोऽध्यायः

॥ ५१ ॥ द्विपंचाशत्तमे धावन्भयादिव गतः पुरीम् ॥ अन्वमोदत संदेशं रुक्मिण्या द्विजवर्णितम् ॥ १ ॥ १ ॥ क्षुल्लकानल्पप्राणान् ॥ २ ॥ तपसि श्रद्धायुतः ॥ ३ ॥ तत्र च बदर्याश्रमम् ॥ ४ ॥ निन्ये नयन्मार्गे चलति स्म ॥ ५ ॥ ६ ॥ वेगरभसं वेगोद्रेकम् ॥७॥ भीरुभीतवद्भीरोरपि भीतवत् । अतिभीतवदित्यर्थः । चेलतुः पलायेताम् । बहुयोजनं देशम् ॥ ८ ॥ अप्रमाणवित् प्रमाणमियत्ता तन्न वेत्तीति तथा ॥९॥ तुंगमेकादशयोजनोन्नतम् । प्रकर्षेण वर्षत्यस्मिन्निति प्रवर्षण इत्याख्या यस्य तम् । तदाह । भगवानिति । भगवानिंद्रः ॥१०॥ तत्र विचिन्वन्नपि तयोः

मस्कन्धे उत्तरार्धे मुचुकुन्दस्तुतिर्नामैकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ श्रीशुक उवाच ॥ इत्थं सोऽनुगृहीतोऽङ्ग कृष्णेनेक्ष्वाकुनंदनः ॥ तं परिक्रम्य संनम्य निश्चक्राम गुहामुखात् ॥ १ ॥ स वीक्ष्य क्षुल्लकान्मर्त्यान्पशून्वीरुद्वनस्पतीन् ॥ मत्वा कलियुगं प्राप्तं जगाम दिशमुत्तराम् ॥ २ ॥ तपःश्रद्धायुतो धीरो निःसंगो मुक्तसंशयः ॥ समाधाय मनः कृष्णे प्राविशद्गन्धमादनम् ॥३॥ बदर्याश्रममासाद्य नरनारायणालयम् ॥ सर्वद्वंद्वसहः शांतस्तपसाऽऽराधयद्धरिम् ॥४॥ भगवान्पुनराव्रज्य पुरीं यवनवेष्टिताम् ॥ हत्वा म्लेच्छबलं निन्ये तदीयं द्वारकां धनम् ॥५॥ नीयमाने धने गोभिर्नृभिश्चाच्युतचोदितैः ॥ आजगाम जरासंधस्त्रयोविंशत्यनीकपः ॥ ६ ॥ विलोक्य वेगरभसं रिपुसैन्यस्य माधवौ ॥ मनुष्यचेष्टामापन्नौ राजन्दुद्रुवतुर्द्रुतम् ॥ ७ ॥ विहाय वित्तं प्रचुरमभीतौ भीरुभीतवत् ॥ पद्भ्यां पद्मपलाशाभ्यां चेलतुर्बहुयोजनम् ॥ ८ ॥ पलायमानौ तौ दृष्ट्वा मागधः प्रहसन्बली ॥ अन्वधावद्रथानीकैरीशयोरप्रमाणवित् ॥ ९ ॥ प्रद्रुत्य दूरं संश्रांतौ तुंगमारुहतां गिरिम् ॥ प्रवर्षणाख्यं भगवान्नित्यदा यत्र वर्षति ॥ १० ॥ गिरौ निलीनावाज्ञाय नाधिगम्य पदं नृप ॥ ददाह गिरिमेधोभिः समंतादग्निमुत्सृजन् ॥ ११ ॥ तत उत्पत्य तरसा दह्यमानतटादुभौ ॥ दशैकयोजनोत्तुङ्गान्निपेततुरधो भुवि ॥ १२ ॥ अलक्ष्यमाणौ रिपुणा सानुगेन यदूत्तमौ ॥ स्वपुरं पुनरायातौ समुद्रपरिखां नृप ॥ १३ ॥ सोऽपि दग्धाविति मृषा मन्वानो बलकेशवौ ॥ बलमाकृष्य सुमहन्मगधान्मागधो ययौ ॥ १४ ॥ आनर्ताधिपतिः श्रीमान्रैवतो रेवतीं सुताम् ॥ ब्रह्मणा चोदितः प्रादाद्बलायेति पुरोदितम् ॥ १५ ॥ भगवानपि गोविंद उपयेमे कुरूद्वह ॥ वैदर्भीं भीष्मकसुतां श्रियो मात्रां स्वयंवरे ॥ १६ ॥ प्रमथ्य तरसा राज्ञः शाल्वादींश्चैद्यपक्षगान् ॥ पश्यतां सर्वलोकानां तार्क्ष्यपुत्रः सुधामिव ॥ १७ ॥ राजोवाच ॥ भगवान् भीष्मकसुतां रुक्मिणीं रुचिराननाम् ॥ राक्षसेन विधानेन उपयेम इति श्रुतम् ॥१८॥ भगवन् श्रोतुमिच्छामि कृष्णस्यामिततेजसः॥ यथा मागधशाल्वादीन् जित्वा कन्यामुपाहरत् ॥ १९ ॥

पदं निलयस्थानमनधिगम्य ॥ ११ ॥ ततो गिरेः दश चैकं च योजनानि यावदुत्तुङ्गान्मागधसंरोधदेशमतिक्रम्य परतोऽधो निपेततुः ॥ १२ ॥ १३ ॥ १४ ॥ श्रीकृष्णस्य विवाहान्निरूपयितुं बलदेवविवाहं नवमस्कंधोक्तमनुस्मारयति । आनर्तेति ॥ १५ ॥ मात्रां कलाम् ॥ १६ ॥ गरुडो यथा देवान्प्रमथ्य सुधामहरत्तथेति ॥ १७ ॥ राक्षसो युद्धहरणादिति स्मृतेः राज्ञः प्रमथ्येति च त्वदुक्त्या राक्षसेन विधानेनोपयेमे परिणीतवानिति श्रुतं पूर्वमेव वा ॥१८॥ सामान्य एव श्रुतम् । विशेषं तु श्रोतुमिच्छामि ॥ १९ ॥ श्रवणौत्सुक्यमाविष्करोति ब्रह्मन्निति । पुण्या महाफला

माध्वी श्रुतिसुखाः लोकस्य मलापहाश्च शृण्वानः शृण्वन्नित्यर्थः । श्रुतज्ञः श्रुतसारवित् । नित्यनूतनाः प्रतिक्षणमाश्चर्यवत्प्रतीयमानाः ॥२०–२४॥ चैद्यममन्यत तस्यावरमित्यर्थः ॥२५॥ अवेत्य ज्ञात्वा । असितापांगी सुनीलकटाक्षा । कृष्णाय कृष्णमानेतुं प्रेषयामास ॥२६॥ प्रतीहारैर्द्वारपालैः ॥ २७ ॥ आत्मानं श्रीकृष्णम् ॥ २८ ॥ अभिमृशन् शनैः संमर्दयन् ॥ २९ ॥ ३० ॥ स धर्मोऽस्य ब्राह्मणस्याखिलकामदोग्धा भवति । यद्वा । स ब्राह्मणोऽस्य विश्वस्याखिलकामधुगिति ॥३१॥ लोकानाप्नोति लोकाल्लोकांतरं पर्यटति । नैकत्र निवृतस्तिष्ठतीत्यर्थः । नाप्नोतीति पाठे सुरेश्वरोऽपि भूत्वा लोकान्नाप्नोत्युत्तमलोकान्प्राप्तोऽप्यप्राप्त इव क्लिश्यतीत्यर्थः । शेते सुखमास्ते इत्यर्थः । तदेवाह । सर्वेष्वंगेषु वाक्पाण्यादिषु विज्वरस्तापरहितः ॥३२॥ स्वलाभः स्वतः प्राप्तो लाभ

ब्रह्मन्कृष्णकथाः पुण्या माध्वीर्लोकमलापहाः ॥ को नु तृप्येत शृण्वानः श्रुतज्ञो नित्यनूतनाः ॥ २० ॥ श्रीशुक उवाच ॥ राजाऽऽसीद्भीष्मको नाम विदर्भाधिपतिर्महान् ॥ तस्य पंचाभवन्पुत्राः कन्यैका च वरानना ॥ २१ ॥ रुक्म्यग्रजो रुक्मरथो रुक्मबाहुरनंतरः ॥ रुक्मकेशो रुक्ममाली रुक्मिण्येषां स्वसा सती ॥ २२ ॥ सोपश्रुत्य मुकुंदस्य रूपवीर्यगुणश्रियः ॥ गृहागतैर्गीयमानास्तं मेने सदृशं पतिम् ॥ २३ ॥ तां बुद्धिलक्षणौदार्यरूपशीलगुणाश्रयाम् ॥ कृष्णश्च सदृशीं भार्यां समुद्वोढुं मनो दधे ॥ २४ ॥ बन्धूनामिच्छतां दातुं कृष्णाय भगिनीं नृप ॥ ततो निवार्य कृष्णद्विड्रुक्मी चैद्यममन्यत ॥ २५ ॥ तदवेत्यासितापांगी वैदर्भी दुर्मना भृशम् ॥ विचिंत्याप्तं द्विजं कंचित्कृष्णाय प्राहिणोद्द्रुतम् ॥ २६ ॥ द्वारकां स समभ्येत्य प्रतीहारैः प्रवेशितः ॥ अपश्यदाद्यं पुरुषमासीनं कांचनासने ॥ २७ ॥ दृष्ट्वा ब्रह्मण्यदेवस्तमवरुह्य निजासनात् ॥ उपवेश्यार्हयांचक्रे यथात्मानं दिवौकसः ॥ २८ ॥ तं भुक्तवंतं विश्रांतमुपगम्य सतां गतिः ॥ पाणिनाऽभिमृशन्पादावव्यग्रस्तमपृच्छत ॥ २९ ॥ कच्चिद्द्विजवरश्रेष्ठ धर्मस्ते वृद्धसंमतः ॥ वर्तते नातिकृच्छ्रेण संतुष्टमनसः सदा ॥ ३० ॥ संतुष्टो यर्हि वर्तेत ब्राह्मणो येन केनचित् ॥ अहीयमानः स्वाद्धर्मात्स ह्यस्याखिलकामधुक् ॥ ३१ ॥ असंतुष्टोऽसकृल्लोकानाप्नोत्यपि सुरेश्वरः ॥ अकिंचनोऽपि संतुष्टः शेते सर्वांगविज्वरः ॥३२॥ विप्रान्स्वलाभसंतुष्टान्साधून्भूतसुहृत्तमान् ॥ निरहंकारिणः शांतान्नमस्ये शिरसाऽसकृत् ॥ ३३ ॥ कच्चिद्वः कुशलं ब्रह्मन्राजतो यस्य हि प्रजाः ॥ सुखं वसंति विषये पाल्यमानाः स मे प्रियः ॥ ३४ ॥ यतस्त्वमागतो दुर्गं निस्तीर्येह यदिच्छया ॥ सर्वं नो ब्रूह्यगुह्यं चेत्किं कार्यं करवाम ते ॥ ३५ ॥ एवं सम्पृष्टसम्प्रश्नो ब्राह्मणः परमेष्ठिना ॥ लीलागृहीतदेहेन तस्मै सर्वमवर्णयत् ॥ ३६ ॥ रुक्मिण्युवाच ॥ श्रुत्वा गुणान्भुवनसुन्दर शृण्वतां ते निर्विश्य कर्णविवरैर्हरतोऽङ्गतापम् ॥ रूपं दृशां दृशिमतामखिलार्थलाभं त्वय्यच्युताविशति चित्तमपत्रपं मे ॥ ३७ ॥ का त्वा मुकुन्द महती कुलशीलरूपविद्यावयोद्रविणधामभिरात्मतुल्यम् ॥

आत्मलाभो वा तेन संतुष्टान्पूर्णान्साधून्स्वधर्मनिष्ठान् ॥३३॥ यस्य राज्ञो विषये देशे ॥३४॥ यतः स्थानात् । यदिच्छया यत्कार्येच्छया दुर्गं समुद्रम् ॥ ३५ ॥ संपृष्टः संप्रश्नः प्रष्टव्योऽर्थो यं सः । परमेष्ठिना परमेश्वरेण । बंधूनामभिप्रेतं रुक्मिणश्चेष्टितमित्यादि सर्वम् ॥ ३६ ॥ रुक्मिण्या स्वयमेकांते लिखित्वा दत्तपत्रिकाम् ॥ मुद्रामुन्मुच्य कृष्णाय प्रेमचिह्नामदर्शयत् ॥ ब्राह्मणः श्रीकृष्णानुज्ञया वाचयति । श्रुत्वेति । अयमर्थः । हे अच्युत हे भुवनसुन्दरेत्यौत्सुक्यं द्योतयति । क्व तव महिमा क्व चाहं रूपकुलशीलादियुक्तापि तथाऽप्यपगता त्रपा यस्मात्तन्मे चित्तं त्वय्यावि-

शत्यासज्जते । तत्कुतस्तत्राह । शृण्वतां कर्णविवरैरंतः प्रविश्यांगतापम् । अंगेति पृथक् संबोधनं वा हरतस्तव गुणान् श्रुत्वा तथा दृशिमतां चक्षुष्मतां दृशामखिलार्थलाभात्मकं रूपं च श्रुत्वेति ॥३७॥ अहो ! कुलकन्यानामिदमतिधाष्ट्यमिति मा शंकीरित्याह । का त्वेति । हे मुकुंद हे नृसिंह नरश्रेष्ठ ! का नाम कन्या कुलवती तथा महती पुरुगुणोदारा तथा धीरा धृतिमती त्वा त्वां पतिं न वृणीत । त्वय्येव केयं दोषशंकेति भावः । कथंभूतम् । कुलशीलादिभिरात्मनेव तुल्यं निरुपममित्यर्थः । द्रविणं द्रव्यसंपत् धाम प्रभावः तथा नरलोकस्य मनसामभिरामोऽभिमरणं यस्मात्तम् । किंच काले विवाहावसरे ॥३८॥ हे विभो ! तत्तस्मान्मे मया भवान्खलु पतिर्वृतः आत्मा च भवतोऽर्पितोऽतस्त्वमत्रागत्य मां भवतो जायां विधेहि । विपक्षे बाधकं द्योतयंत्याह । मा वीरभागमिति । वीरस्य तव भागं मामाराच्छीघ्रमेत्यागत्य चैद्यो माभिमर्शतु मा स्पृशतु । मृगपतेर्बलिं गोमायुवत् । गोमायुः शृगाल इवेति ॥ ३९ ॥ अनेकजन्मकृतैः सुकृतैरिदमेव भूयादिति प्रार्थयते । पूर्तेति । पूर्तं कूपादि । इष्टमग्निहोत्रादि । दत्तं हिरण्यादिदानम् । नियमस्तीर्थाटनादि । व्रतं कृच्छ्रादि ॥४०॥ ननु चैद्याय बंधुभिरर्पितायां मयि किमधुना करणीयमित्यपेक्षायामाह । श्वोभाविनीति । हे अजित!

धीरा पतिं कुलवती न वृणीत कन्या काले नृसिंह नरलोकमनोऽभिरामम् ॥ ३८ ॥ तन्मे भवान्खलु वृतः पतिरङ्ग जायामात्माऽर्पितश्च भवतोऽत्र विभो विधेहि ॥ मा वीरभागमभिमर्शतु चैद्य आराद्गोमायुवन्मृगपतेर्बलिमंबुजाक्ष ॥ ३९ ॥ पूर्तेष्टदत्तनियमव्रतदेवविप्रगुर्वर्चनादिभिरलं भगवान्परेशः ॥ आराधितो यदि गदाग्रज एत्य पाणिं गृह्णातु मे न दमघोषसुतादयोऽन्ये ॥ ४० ॥ श्वोभाविनि त्वमजितोद्वहने विदर्भान्गुप्तः समेत्य पृतनापतिभिः परीतः ॥ निर्मथ्य चैद्यमगधेंद्रबलं प्रसह्य मां राक्षसेन विधिनोद्वह वीर्यशुल्काम् ॥४१॥ अंतःपुरांतरचरीमभिहत्य बन्धूँस्त्वामुद्वहे कथमिति प्रवदाम्युपायम् ॥ पूर्वेद्युरस्ति महती कुलदेवियात्रा यस्यां बहिर्नववधूर्गिरिजामुपेयात् ॥ ४२ ॥ यस्यांघ्रिपङ्कजरजःस्नपनं महांतो वांछंत्युमापतिरिवात्मतमोपहत्यै ॥ यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं जह्यामसून्व्रतकृशान् शतजन्मभिः स्यात् ॥ ४३ ॥ ब्राह्मण उवाच ॥ इत्येते गुह्यसंदेशा यदुदेव मयाहृताः ॥ विमृश्य कर्तुं यच्चात्र क्रियतां तदनंतरम् ॥ ४४ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे रुक्मिण्युद्वाहे द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥ श्रीशुक उवाच ॥ वैदर्भ्याः स तु सन्देशं निशम्य यदुनन्दनः ॥ प्रगृह्य पाणिना पाणिं प्रहसन्निदमब्रवीत् ॥ १ ॥ श्रीभगवानु-

श्वोभाविनि उद्वहने विवाहे प्रथमं गुप्तोऽलक्षित एवागत्य पश्चात्पृतनापतिभिः परिवृतः संश्चैद्यादिबलं निर्मथ्य प्रसह्य बलाद्वीर्यं प्रभावदर्शनमेव शुल्कं वैवाहिकं देयं यस्यास्तां माम् । अनेन राक्षसविधिनोद्वहेत्युपदेशरहस्यम् ॥४१॥ ननु भवतु शिशुपालादिबलप्रमथनमंतःपुरमध्यगतायास्तव हरणे त्वद्बन्धुवधोऽपि प्रसज्येतेत्यत आह । अंतःपुरेति । पुराद्बहिर्वर्तमानां गिरिजामम्बिकाम् । अंबिकागृहादेव मम हरणं सुकरमिति भावः ॥४२॥ ननु किमनेनानर्थकारिणा निर्बंधेन चैद्योऽपि तावत्प्रख्यातगुणकर्मा योग्य एव वर इति तत्राह । यस्येति । हे अंबुजाक्ष ! यस्य भवतोऽङ्घ्रिपंकजं रजोभिः स्नपनमात्मनस्तमसोऽपहत्यै उमापतिरिव महांतो वांछंति तस्य भवतः प्रसादं यर्ह्यहं न प्राप्नुयां तर्हि व्रतैरुपवासादिभिः कृशानसून्प्राणान् जह्यां त्यजेयम् । ततः किमित्यत आह । शतजन्मभिरिति । एवमेव वारंवारं जह्यां यावच्छतजन्मभिरपि तव प्रसादः स्यादिति ॥४३॥ अत्र यत्कर्तुं करणीयं तद्विमृश्य क्रियतामिति ॥४४॥ इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥ त्रिपञ्चाशत्तमे गत्वा विदर्भान्कृतेहितः ॥ रुक्मिणीमहरत्कृष्णो मिषतां द्विषतां बलात् ॥१॥१॥ निद्राया अलाभे कारणांतरम् । वेदेति । तया अकथितमप्यलं जानामीति

॥२॥ आनयिष्ये आनेष्यामि । राजन्यापसदान्राजसु हीनान् उन्मथ्यानयने दृष्टांतः । एधस इति ॥३॥ उद्वाहर्क्षमिति । परश्वो रात्रौ विवाहनक्षत्रमिति विज्ञाय तस्यां रात्र्यां प्रस्थाय प्रातर्विदर्भदेशानगमत् । श्वोभाविनि त्वमजितोद्वहने विदर्भान् गुप्तः समेत्येति रुक्मिणीसंदेशात् ॥४॥ शैब्येत्यादीनि चत्वार्यश्वनामानि ॥ ५ ॥ ६ ॥ पुत्रस्य रुक्मिणः स्नेहेन तद्वशमनुगच्छतीति तथा । अनेन शिशुपालेऽनभिरुचिं द्योतयति । कर्माणि पुरालंकारपितृदेवार्चनादीनि ॥७॥ तान्येवाह । पुरमित्यादिचतुर्भिः । संमृष्टाः संसिक्ताश्च मार्गादयो यस्मिंस्तत् । चित्रा ध्वजेषु पताकास्ताभिः

वाच ॥ तथाऽहमपि तच्चित्तो निद्रां च न लभे निशि ॥ वेदाहं रुक्मिणो द्वेषान्ममोद्वाहो निवारितः ॥ २ ॥ तामानयिष्य उन्मथ्य राजन्यापसदान्मृधे ॥ मत्परामनवद्यांगीमेधसोऽग्निशिखामिव ॥ ३ ॥ श्रीशुक उवाच ॥ उद्वाहर्क्षं च विज्ञाय रुक्मिण्या मधुसूदनः ॥ रथः संयुज्यतामाशु दारुकेत्याह सारथिम् ॥ ४ ॥ स चाश्वैः शैब्यसुग्रीवमेघपुष्पवलाहकैः ॥ युक्तं रथमुपानीय तस्थौ प्रांजलिरग्रतः ॥ ५ ॥ आरुह्य स्यंदनं शौरिर्द्विजमारोप्य तूर्णगैः ॥ आनर्तादेकरात्रेण विदर्भानगमद्धयैः ॥ ६ ॥ राजा स कुंडिनपतिः पुत्रस्नेहवशं गतः ॥ शिशुपालाय स्वां कन्यां दास्यन्कर्माण्यकारयत् ॥ ७ ॥ पुरं संमृष्टसंसिक्तमार्गरथ्याचतुष्पथम् ॥ चित्रध्वजपताकाभिस्तोरणैः समलंकृतम् ॥८॥ स्रग्गंधमाल्याभरणैर्विरजोऽम्बरभूषितैः ॥ जुष्टं स्त्रीपुरुषैः श्रीमद्गृहैरगुरुधूपितैः ॥९॥ पितॄन्देवान्समभ्यर्च्य विप्रांश्च विधिवन्नृप ॥ भोजयित्वा यथान्यायं वाचयामास मङ्गलम् ॥ १० ॥ सुस्नातां सुदतीं कन्यां कृतकौतुकमङ्गलाम् ॥ अहतांशुकयुग्मेन भूषितां भूषणोत्तमैः ॥११॥ चक्रुः सामर्ग्यजुर्मंत्रैर्वध्वा रक्षां द्विजोत्तमाः ॥ पुरोहितोऽथर्वविद्वै जुहाव ग्रहशांतये ॥ १२ ॥ हिरण्यरूप्यवासांसि तिलांश्च गुडमिश्रितान् ॥ प्रादाद्धेनूश्च विप्रेभ्यो राजा विधिविदांवरः ॥ १३ ॥ एवं चेदिपती राजा दमघोषः सुताय वै ॥ कारयामास मंत्रज्ञैः सर्वमभ्युदयोचितम् ॥१४॥ मदच्युद्भिर्गजानीकैः स्यंदनैर्हेममालिभिः ॥ पत्त्यश्वसंकुलैः सैन्यैः परीतः कुण्डिनं ययौ ॥१५॥ तं वै विदर्भाधिपतिः समभ्येत्याभिपूज्य च ॥ निवेशयामास मुदा कल्पितान्यनिवेशने ॥१६॥ तत्र शाल्वो जरासंधो दंतवक्त्रो विदूरथः ॥ आजग्मुश्चैद्यपक्षीयाः पौंड्रकाद्याः सहस्रशः ॥१७॥ कृष्णरामद्विषो यत्ताः कन्यां चैद्याय साधितुम् ॥ यद्यागत्य हरेत्कृष्णो रामाद्यैर्यदुभिर्वृतः ॥ १८ ॥ योत्स्यामः संहतास्तेन इति निश्चितमानसाः ॥ आजग्मुर्भूभुजः सर्वे समग्रबलवाहनाः ॥ १९ ॥ श्रुत्वैतद्भगवान्रामो विपक्षीयनृपोद्यमम् ॥ कृष्णं चैकं गतं हर्तुं कन्यां कलहशङ्कितः ॥ २० ॥ बलेन महता सार्द्धं भ्रातृस्नेहपरिप्लुतः ॥ त्वरितः कुण्डिनं प्रागाद्गजाश्वर-

समलंकृतमकारयत ॥८॥ स्रग्गंधमाल्याभरणैरित्यत्र मत्वर्थो द्रष्टव्यः । यद्वा ; स्रग्गंधमाल्यान्याबिभ्रतीति तथा तैः । तथा विरजोऽम्बरैर्भूषितैश्च स्त्रीपुरुषैर्जुष्टम् । तथा श्रीमद्भिर्गृहैश्च जुष्टम् ॥९॥ यथान्यायमन्यांश्च कन्यां प्रति मंगलं वाचयामास ॥१०॥ कृतं कौतुकेन विवाहसूत्रेण मंगलं यस्यास्ताम् । अहतं नवीनम् । भूषणोत्तमैश्च भूषिताम् ॥११॥ वध्वास्तस्याः कन्यायाः । अथर्ववित्-दथर्वणमंत्रवित् ॥१२॥१३॥ अभ्युदये उचितम् ॥ १४ ॥ ततश्चतुरंगसैन्यैः परीतः परिवृतः कुंडिनं भीष्मकस्य पुरं ययौ । मदं च्यवंते इति मदच्युतस्तैः स्यंदनैः रथैः हेमरचिता माला विद्यते

येपु तैः ॥१५॥ कल्पितं निर्मितं यदन्यनिवेशनं तस्मिन् ॥१६॥१७॥ यर्हि श्रीकृष्णो हरेदिति शङ्किताः । कन्यां साधयितुमित्यर्थः ॥ १८-२१ ॥ सूर्योदयात्पूर्वमेवौत्सुक्येन रुक्मिण्यचिंतयदित्याह । भीष्मकन्येति । प्रत्यापत्तिं प्रत्यागमनम् ॥ २२ ॥ त्रियामा रात्रिस्तावन्मात्रेणांतरितः । अल्पराधसो मंदभाग्यायाः ॥ २३ ॥ जुगुप्सितं धाष्टर्यादि । अपीति शङ्कायाम् । नायाति हि कृतोद्यम इति । अयमर्थः । आदौ कृतोद्यमत्वात्तं त प्रस्थापितवान् । प्रस्थानावसरे च किंचिन्मयि जुगुप्सितं मत्वा प्रत्याचष्ट । अतः सोऽपि द्विजो नूनं नायातीति ॥ २४ ॥ यद्वा । ततो निर्गतोऽपि श्रीकृष्णो मद्दैववैमुख्यात्क्वचित्प्रतिबद्धो भवेदित्याह । दुर्भगाया इति ॥ २५ ॥ कालज्ञा नाऽधुनापि गोविंदागमनकाल इति मन्वाना किंचिदाश्वस्तचित्ता सती चिंतास्तब्धे लोचने निमीलितवतीत्यर्थः ॥ २६ ॥ प्रियभाषिणः प्रियसूचकाः ॥२७॥ पुरोपवनं प्राप्तेन श्रीकृष्णेन विनिर्दिष्टः प्राप्तं मां कथयेत्यादिष्टः ॥ २८ ॥ न व्यग्रा आत्मनो देहस्य गतिर्यस्य तम् । लक्षणा-

थपत्तिभिः ॥२१॥ भीष्मकन्या वरारोहा कांक्षन्त्यामनं हरेः ॥ प्रत्यापत्तिमपश्यन्ती द्विजस्याचिंतयत्तदा ॥२२॥ अहो त्रियामांतरित उद्वाहो मेऽल्पराधसः ॥ नागच्छत्यरविंदाक्षो नाहं वेद्म्यत्र कारणम् ॥ सोऽपि नावर्ततेऽद्यापि मत्सन्देशहरो द्विजः ॥२३॥ अपि मय्यनवद्यात्मा दृष्ट्वा किंचिज्जुगुप्सितम् ॥ मत्पाणिग्रहणे नूनं नायाति हि कृतोद्यमः ॥ २४ ॥ दुर्भगाया न मे धाता नानुकूलो महेश्वरः ॥ देवी वा विमुखा गौरी रुद्राणी गिरिजा सती ॥२५॥ एवं चिंतयती बाला गोविंदहृतमानसा ॥ न्यमीलयत कालज्ञा नेत्रे चाश्रुकलाकुले ॥२६॥ एवं वध्वाः प्रतीक्षन्त्या गोविंदागमनं नृप ॥ वाम ऊरुर्भुजो नेत्रमस्फुरन्प्रियभाषिणः ॥ २७ ॥ अथ कृष्णविनिर्दिष्टः स एव द्विजसत्तमः ॥ अन्तःपुरचरीं देवीं राजपुत्रीं ददर्श ह ॥ २८ ॥ सा तं प्रहृष्टवदनमव्यग्रात्मगतिं सती ॥ आलक्ष्य लक्षणाभिज्ञा समपृच्छच्छुचिस्मिता ॥२९॥ तस्या आवेदयत्प्राप्तं शशंस यदुनन्दनम् ॥ उक्तं च सत्यवचनमात्मोपनयनं प्रति ॥ ३० ॥ तमागतं समाज्ञाय वैदर्भी हृष्टमानसा ॥ न पश्यन्ती ब्राह्मणाय प्रियमन्यन्ननाम सा ॥ ३१ ॥ प्राप्तौ श्रुत्वा स्वदुहितुरुद्वाहप्रेक्षणोत्सुकौ ॥ अभ्ययात्तूर्यघोषेण रामकृष्णौ समर्हणैः ॥३२॥ मधुपर्कमुपानीय वासांसि विरजांसि सः ॥ उपायनान्यभीष्टानि विधिवत्समपूजयत् ॥३३॥ तयोर्निवेशनं श्रीमदुपकल्प्य महामतिः ॥ ससैन्ययोः सानुगयोरातिथ्यं विदधे यथा ॥३४॥ एवं राज्ञां समेतानां यथावीर्यं यथावयः ॥ यथाबलं यथावित्तं सर्वैः कामैः समर्हयत् ॥ ३५ ॥ कृष्णमागतमाकर्ण्य विदर्भपुरवासिनः ॥ आगत्य नेत्राञ्जलिभिः पपुस्तन्मु-

भिज्ञा दूतस्य लक्षणं तत्तत्कार्यसूचकमभिजानातीति तथा ॥२९॥ तस्यै प्राप्तं यदुनंदनमावेदितवान् । तं च शशंस । आत्मोपनयनं प्रति आत्मना स्वयं श्रीकृष्णस्यानयनं प्रति तेन द्विजेन सत्यवचनं प्रोक्तमिति । आत्मनः प्राणेश्वरस्येति वा । यद्वा । आत्मनस्तस्या उपनयनं प्रति श्रीकृष्णेन यदुक्तं सत्यवचनं तामानयिष्य इत्यादि तच्च शशंसावर्णयदित्यर्थः ॥ ३० ॥ तं श्रीकृष्णम् । अस्मिन्कार्ये सर्वस्वार्पणमप्यपर्याप्तमिति तदुचितं प्रियमपश्यंती तदा केवलं ननाम । पश्चाद्बहु ददावित्यर्थः । यद्वा । यां श्रियं ये नमंति ते तावत्सर्वसंपदामास्पदं भवंति किं पुनर्मयि प्रणतायामिति ततोऽधिकमन्यत्प्रियमपश्यंती ननामेति ॥३१-३३॥ महामतिरित्यनेन श्रीकृष्णो बाढं कन्यामुद्वोढुमेवागतः स्यादिति वरोचितेन विधिना समपूजयदिति सूचितम् । यथा यथावत् ॥ ३४ ॥

समेतानां राज्ञां मध्ये वीर्याद्यनतिक्रम्य तं तं समर्हितवानित्यर्थः ॥ ३५ ॥ श्रीकृष्णे भाविकर्मसूचकं जनानुरागं दर्शयति । कृष्णमागतमिति त्रिभिः ॥३६॥ अस्यैव रुक्मिण्येवार्हत्येव असावेव भैष्म्या एव समुचित एवेति षडवधारणानि । तत्रैकस्मिन्व्यतिरेकप्रदर्शनमुपलक्षणार्थं नापरेति । न च वाक्यभेददोषः । अनूद्यविधेयभेदेन विभिन्नानामेव वाक्यानां सहप्रयोगात् । ग्रहं संमार्ष्टीत्यादिवदिति ॥३७॥ अयमेवानुग्रह इति निर्दिशन्ति । गृह्णात्विति ॥३८॥ प्रेम्णः कलालेशस्तेन बद्धा वदन्ति स्म । संपूर्णं प्रेम तेषां हृद्येवावर्तत इत्यर्थः ॥३९॥ गमनं विशिनष्टि द्वयेन । पद्भ्यामिति ॥ ४० ॥ अपि च मृदंगेत्यादि जघ्निरे आहताः । वादिता इत्यर्थः ॥ ४१ ॥ वारमुख्या गणिकोत्तमाः ॥ ४२ ॥ ४३ ॥ उपस्पृश्याचम्य ॥ ४४ ॥ प्रवयसो वृद्धाः । भवान्विता-

खपङ्कजम् ॥ ३६ ॥ अस्यैव भार्या भवितुं रुक्मिण्यर्हति नापरा ॥ असावप्यनवद्यात्मा भैष्म्याः समुचितः पतिः ॥ ३७ ॥ किंचित्सुचरितं यन्नस्तेन तुष्टस्त्रिलोककृत् ॥ अनुगृह्णातु गृह्णातु वैदर्भ्याः पाणिमच्युतः ॥ ३८ ॥ एवं प्रेमकलाबद्धा वदन्ति स्म पुरौकसः ॥ कन्या चांतःपुरात्प्रागाद्भटैर्गुप्ताऽम्बिकालयम् ॥ ३९ ॥ पद्भ्यां विनिर्ययौ द्रष्टुं भवान्याः पादपल्लवम् ॥ सा चानुध्यायती सम्यङ्मुकुन्दचरणांबुजम् ॥ ४० ॥ यतवाङ्मातृभिः सार्द्धं सखीभिः परिवारिता ॥ गुप्ता राजभटैः शूरैः सन्नद्धैरुद्यतायुधैः ॥ मृदङ्गशङ्खपणवास्तूर्यभेर्यश्च जघ्निरे ॥ ४१ ॥ नानोपहारबलिभिर्वारमुख्याः सहस्रशः ॥ स्रग्गन्धवस्त्राभरणैर्द्विजपत्न्यः स्वलंकृताः ॥४२॥ गायन्तश्च स्तुवन्तश्च गायका वाद्यवादकाः ॥ परिवार्य वधूं जग्मुः सूतमागधवन्दिनः ॥४३॥ आसाद्य देवीसदनं धौतपादकरांबुजा ॥ उपस्पृश्य शुचिः शांता प्रविवेशाम्बिकांतिकम् ॥४४॥ तां वै प्रवयसो बालां विधिज्ञा विप्रयोषितः ॥ भवानीं वन्दयाञ्चक्रुर्भवपत्नीं भवान्विताम् ॥४५॥ नमस्ये त्वाऽम्बिकेऽभीक्ष्णं स्वसन्तानयुतां शिवाम् ॥ भूयात्पतिर्मे भगवान्कृष्णस्तदनुमोदताम् ॥ ४६ ॥ अद्भिर्गंधाक्षतैर्धूपैर्वासःस्रङ्माल्यभूषणैः ॥ नानोपहारबलिभिः प्रदीपावलिभिः पृथक् ॥ ४७ ॥ विप्रस्त्रियः पतिमतीस्तथा तैः समपूजयत् ॥ लवणापूपतांबूलकण्ठसूत्रफलेक्षुभिः ॥ ४८ ॥ तस्यै स्त्रियस्ताः प्रददुः शेषां युयुजुराशिषः ॥ ताभ्यो देव्यै नमश्चक्रे शेषां च जगृहे वधूः ॥४९॥ मुनिव्रतमथ त्यक्त्वा निश्चक्रामाम्बिकागृहात् ॥ प्रगृह्य पाणिना भृत्यां रत्नमुद्रोपशोभिना ॥५०॥ तां देवमायामिव वीरमोहिनीं सुमध्यमां कुण्डलमण्डिताननाम् ॥ श्यामां नितम्बार्पितरत्नमेखलां व्यञ्जत्स्तनीं कुन्तलशङ्कितेक्षणाम् ॥५१॥ शुचिस्मितां बिंबफलाधरद्युतिशोणायमानद्विजकुन्दकुड्मलाम् ॥

मिति भवस्योपसर्जनत्वं स्त्रीकर्मोचितमुक्तम् ॥ ४५ ॥ नमस्य इति । रुक्मिण्या तदैव दृष्टोऽयं मंत्रः । स्वसंतानयुतां गणेशादिसहिताम् । आत्मारामोऽसौ कथं त्वत्पतिर्भवेदिति चेदत आह । तदनुमोदतामिति । भवती श्रीकृष्ण एव वा ॥ ४६ ॥ वासःस्रग्गन्धादिभिरम्बिकां समपूजयत् ॥ ४७ ॥ तथा विप्रस्त्रियोऽपि तैर्द्रव्यैर्लवणादिभिश्च समपूजयन्निति ॥ ४८ ॥ शेषां निर्माल्यम् ॥ ४९ ॥ मुनिव्रतं मौनम् । भृत्यां सखीम् ॥ ५० ॥ तां विलोक्य वीरा मुमुहुरिति तृतीयेनान्वयः । श्यामामजातरजस्काम् । कुन्तलेभ्यः शङ्किते इव चपले ईक्षणे यस्यास्ताम् ॥ ५१ ॥ द्विजा एव कुन्दानां कुड्मलानि बिंबफलवद्योऽधरस्तस्य द्युतिभिः शोणायमानानि तानि यस्यास्ताम् । कला शोभा तद्युक्तं नूपुरं सिंजच्च तत्कलनूपुरं च तस्य धाम दीप्तिस्तेन शोभितुं

तस्येच्छया दुःखेऽपीहमानत्वेन पारवश्यं व्यक्तं दर्शितम् ॥ १२ ॥ अत्र चाहमेव दृष्टांत इत्याह । जरासंधः शौरेरिति। कृष्णात्सकाशात्। एकं संयुगम् । परं केवलमंतिमं वा । जिग्ये जितवानहम् ॥ १३ ॥ दैवमदृष्टं तद्युक्तेन ॥१४॥ फल्गुतंत्रैः स्वल्पसैन्यैः ॥ १५ ॥ प्रदक्षिणोऽनुकूलः स्यात् ॥ १६–२१ ॥ गोपालस्य वेदपालकस्येति वास्तवोऽर्थः। तथा सुदुर्मतेरिति शोभनानुग्रहवती

॥ ११ ॥ यथा दारुमयी योषिन्नृत्यते कुहकेच्छया ॥ एवमीश्वरतंत्रोऽयमीहते सुखदुःखयोः ॥१२॥ शौरेः सप्तदशाहं वै संयुगानि पराजितः ॥ त्रयोविंशतिभिः सैन्यैर्जिग्य एकमहं परम् ॥ १३ ॥ तथाऽप्यहं न शोचामि न प्रहृष्यामि कर्हिचित् ॥ कालेन दैवयुक्तेन जानन्विद्रावितं जगत् ॥१४॥ अधुनाऽपि वयं सर्वे वीरयूथपयूथपाः ॥ पराजिताः फल्गुतंत्रैर्यदुभिः कृष्णपालितैः ॥ १५ ॥ रिपवो जिग्युरधुना काल आत्मानुसारिणि ॥ तदा वयं विजेष्यामो यदा कालः प्रदक्षिणः ॥ १६ ॥ एवं प्रबोधितो मित्रैश्चैद्योऽगात्सानुगः पुरम् ॥ हतशेषाः पुनस्तेऽपि ययुः स्वं स्वं पुरं नृपाः ॥१७॥ रुक्मी तु राक्षसोद्वाहं कृष्णद्विडसहन्स्वसुः ॥ पृष्ठतोऽन्वगमत्कृष्णमक्षौहिण्या वृतो बली ॥ १८ ॥ रुक्म्यमर्षी सुसंरब्धः शृण्वतां सर्वभूभुजाम् ॥ प्रतिजज्ञे महाबाहुर्दंशितः सशरासनः ॥ १९ ॥ अहत्वा समरे कृष्णमप्रत्यूह्य च रुक्मिणीम् ॥ कुंडिनं न प्रवेक्ष्यामि सत्यमेतद्ब्रवीमि वः ॥ २० ॥ इत्युक्त्वा रथमारुह्य सारथिं प्राह सत्वरः ॥ चोदयाश्वान्यतः कृष्णस्तस्य मे संयुगं भवेत् ॥ २१ ॥ अद्याहं निशितैर्बाणैर्गोपालस्य सुदुर्मतेः ॥ नेष्ये वीर्यमदं येन स्वसा मे प्रसभं हृता ॥ २२ ॥ विकत्थमानः कुमतिरीश्वरस्याप्रमाणवित् ॥ रथेनैकेन गोविंदं तिष्ठ तिष्ठेत्यथाह्वयत् ॥२३॥ धनुर्विकृष्य सुदृढं जघ्ने कृष्णं त्रिभिः शरैः ॥ आह चात्र क्षणं तिष्ठ यदूनां कुलपांसन ॥ २४ ॥ कुत्र यासि स्वसारं मे मुषित्वा ध्वांक्षवद्धविः ॥ हरिष्येऽद्य मदं मन्द मायिनः कूटयोधिनः ॥२५॥ यावन्न मे हतो बाणैः शयीथा मुंच दारिकाम् ॥ स्मयन्कृष्णो धनुश्छित्त्वा षड्भिर्विव्याध रुक्मिणम् ॥ २६ ॥ अष्टभिश्चतुरो वाहान्द्वाभ्यां सूतं ध्वजं त्रिभिः ॥ स चान्यद्धनुरादाय कृष्णं विव्याध पंचभिः ॥ २७ ॥ तैस्ताडितः शरौघैस्तु चिच्छेद धनुरच्युतः ॥ पुनरन्यदुपादत्त तदप्यच्छिनदव्ययः ॥ २८ ॥ परिघं पट्टिशं शूलं चर्मासी शक्तितोमरौ ॥ यद्यदायुधमादत्त तत्सर्वं सोऽच्छिनद्धरिः ॥२९॥ ततो रथादवप्लुत्य खड्गपाणिर्जिघांसया ॥ कृष्णमभ्यद्रवत्क्रुद्धः पतंग इव पावकम् ॥३०॥ तस्य चापततः खड्गं तिलशश्चर्म चेषुभिः ॥ छित्त्वाऽसिमाददे तिग्मं रुक्मिणं हन्तुमुद्यतः ॥३१॥ दृष्ट्वा भ्रातृवधोद्योगं रुक्मिणी भयविह्वला ॥ पतित्वा पादयोर्भर्तुरुवाच करुणं सती ॥ ३२ ॥ योगेश्वराप्रमेयात्मन्देवदेव जगत्पते ॥ हन्तुं नार्हसि कल्याण भ्रातरं मे महाभुज ॥ ३३ ॥ श्रीशुक उवाच ॥ तया परित्रासविकंपितांगया शुचाऽवशु-

दुष्टेष्वपि मतिर्यस्य तस्येति ॥२२॥२३॥ यदूनां कुलपांसन कुलदूषण । वस्तुतस्तु यदूनां कुलस्य पते हे अंसन स्वयं च रिपुहननचतुर। अंस समाघाते इत्यस्माद्धातोः कर्तरि ल्युट् प्रत्ययो नंद्यादिविहितः ॥२४॥ ध्वांक्षः काकः स यथा हविर्मुष्णाति तद्वत् । वस्तुतस्तु अध्वांक्षवदिति च्छेदः। सहस्राक्षवदित्यर्थः । हे मंद स्थिरेत्यर्थः ॥२५–३३॥ परित्रासेन विकंपितान्यंगानि यस्यास्तया

शीलमस्य तेन पदा चलंतीम् ॥५२॥५३॥ न केवलं मुमुहुः पेतुश्चेत्याह । यामिति । यात्रामिषेण हरये स्वलावण्यं समर्पयंतीं यां वीक्ष्य क्षितौ पेतुः सा तान्प्राप्तान् ह्रिया ऐक्षत तदैवाच्युतं च ददर्शेत्युत्तरेणान्वयः ॥५४॥ चलत्पद्मकोशतुल्यौ चरणौ चालयंती ॥ ५५ ॥ सुपर्णलक्षणं गरुडध्वजं हरिः सिंहः ॥ ५६ ॥ असहमानानां तेषामाक्रोशमाह । अहो धिगस्मान् यतोऽस्माकं यशो गोपैर्हृतमिति ॥५७॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे टीकायां त्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ चतुष्पंचाशत्तमे तु जित्वा राज्ञोऽरिपक्षगान् ॥ रुक्मिणं च विरूप्याथ भैष्म्याः पाणि

पदा चलंतीं कलहंसगामिनीं सिंजत्कलानूपुरधामशोभिना ॥ ५२ ॥ विलोक्य वीरा मुमुहुः समागता यशस्विनस्तत्कृतहृच्छयार्दिताः ॥ ५३ ॥ यां वीक्ष्य ते नृपतयस्तदुदारहासव्रीडावलोकहृतचेतस उज्झितास्त्राः ॥ पेतुः क्षितौ गजरथाश्वगता विमूढा यात्राच्छलेन हरयेऽर्पयतीं स्वशोभाम् ॥५४॥ सैवं शनैश्चलयती चलपद्मकोशौ प्राप्तिं तदा भगवतः प्रसमीक्षमाणा ॥ उत्सार्य वामकरजैरलकानपांगैः प्राप्तान्ह्रियैक्षत नृपान्ददृशेऽच्युतं सा ॥५५॥ तां राजकन्यां रथमारुरुक्षतीं जहार कृष्णो द्विषतां समीक्षताम् ॥ रथं समारोप्य सुपर्णलक्षणं राजन्यचक्रं परिभूय माधवः ॥ ततो ययौ रामपुरोगमैः शनैः शृगालमध्यादिव भागहृद्धरिः ॥ ५६ ॥ तं मानिनः स्वाभिभवं यशःक्षयं परे जरासंधवशा न सेहिरे ॥ अहो धिगस्मान्यश आत्तधन्वनां गोपैर्हृतं केसरिणा मृगैरिव ॥ ५७ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे रुक्मिणीहरणं नाम त्रिपंचाशत्तमोऽध्यायः ॥५३ ॥ श्रीशुक उवाच ॥ इति सर्वे सुसंरब्धा वाहानारुह्य दंशिताः ॥ स्वैः स्वैर्बलैः परिक्रांता अन्वीयुर्धृतकार्मुकाः ॥ १ ॥ तानापततं आलोक्य यादवानीकयूथपाः ॥ तस्थुस्तत्संमुखा राजन्विस्फूर्ज्य स्वधनूंषि ते ॥ २ ॥ अश्वपृष्ठे गजस्कंधे रथोपस्थे च कोविदाः ॥ मुमुचुः शरवर्षाणि मेघा अद्रिष्वपो यथा ॥ ३ ॥ पत्युर्बलं शरासारैश्छन्नं वीक्ष्य सुमध्यमा ॥ सव्रीडमैक्षत्तद्वक्त्रं भयविह्वललोचना ॥ ४ ॥ प्रहस्य भगवानाह मास्मभैर्वामलोचने ॥ विनंक्ष्यत्यधुनैवैतत्तावकैः शात्रवं बलम् ॥ ५ ॥ तेषां तद्विक्रमं वीरा गदसंकर्षणादयः ॥ अमृष्यमाणा नाराचैर्जघ्नुर्हयगजान्रथान् ॥६॥ पेतुः शिरांसि रथिनामश्विनां गजिनां भुवि ॥ सकुंडलकिरीटानि सोष्णीषाणि च कोटिशः ॥७॥ हस्ताः सासिगदेष्वासाः करभा ऊरवोंऽघ्रयः ॥ अश्वाश्वतरनागोष्ट्रखरमर्त्यशिरांसि च ॥ ८ ॥ हन्यमानबलानीका वृष्णिभिर्जयकांक्षिभिः ॥ राजानो विमुखा जग्मुर्जरासंधपुरःसराः ॥९॥ शिशुपालं समभ्येत्य हृतदारमिवातुरम् ॥ नष्टत्विषं गतोत्साहं शुष्यद्वदनमब्रुवन् ॥१०॥ भो भोः पुरुषशार्दूल दौर्मनस्यमिदं त्यज ॥ न प्रियाप्रिययो राजन्निष्ठा देहिषु दृश्यते

पुरेऽग्रहीत् ॥ १ ॥ इतीति । अहो धिगस्मानित्येवं वदंतः । सुसंरब्धाः क्रोधाविष्टाः । दंशिताः कृतसन्नाहाः। परिक्रांताः परिवृताः । अन्वीयुरन्वधावन् ॥१॥ विस्फूर्ज्य टंकारयित्वा ॥२॥ परेषां शराणां बाहुल्ये यादवानामचलत्वे दृष्टांतः । मेघा इति ॥ ३ ॥ ऐक्षदैक्षत ॥४॥ मास्मभैः मा भयं कुरु । हे वामलोचने वराक्षि । तावकैस्त्वदीयैः कृत्वा ॥५ ॥ स चासौ विक्रमश्च तम् ॥ ६ ॥ उष्णीषाणि शिरोऽवतंसवस्त्राणि तत्सहितानि शिरांसि ॥७॥ करभाः प्रकोष्ठा ऊरुविशेषणं वा ॥८॥९॥ अप्राप्तदारमेव तं हृतदारमिवातुरम् ॥ १० ॥ निष्ठा स्थैर्यम् ॥ ११ ॥ कुहको नर्तयिता

शुचा शोकेनावशुष्यन्मुखं यस्याः रुद्धः कंठो यस्याः । सा च सा च । तथा कातर्येण वैक्लव्येन विस्रंसिता हेममयी माला यस्यास्तया गृहीतौ पादौ यस्य सः ॥३४॥ सश्मश्रुकेशसहितानि स्थाने स्थानेऽवशिष्टानि श्मश्रूणि केशाश्च यथा भवंति तथा । तेनैवासिना प्रवपन्मुंडयन्व्यरूपयद्विरूपमकरोत् ॥३५॥ तथाभूतं हतप्रायमित्युत्तरवाक्येऽप्यनुषंगः ॥३६॥३७॥ रुक्मिणीं सांत्वयति । मैवास्मानिति ॥ ३८ ॥ पुनः कृष्णमाक्षिपति बंधुरिति ॥ ३९ ॥ पुनर्देवीं प्रत्याह । क्षत्रियाणामिति । येन धर्मेण भ्रातरं हन्यात् । ततस्तस्माद्घोरतरोऽतिदारुणो धर्मश्च । अतः कोऽस्माकमपराध इति भावः ॥४०॥ पुनः श्रीकृष्णं प्रत्याह । राज्यस्येति । तथाऽप्यस्माकमेतदनुचितमिति भावः ॥४१॥ पुनर्देवीं प्रत्याह । तवेयमिति । सर्वभूतेषु दुर्हृदामहितानां भ्रातृणामज्ञवद्यद्भद्रं मन्यसे इच्छसि इयं तव विषमा असमीचीना बुद्धिः । कुतः । यतस्तदेव सुहृदामभद्रमिति । यद्वा । सर्वभूतेषु दुर्हृदामपि स्वसुहृदां भद्रमेव दंडरूपं मुंडनममद्रं यन्मन्यसे तवेयं विषमा बुद्धिरिति

ष्यन्मुखरुद्धकंठया ॥ कातर्यविस्रंसितहेममालया गृहीतपादः करुणो न्यवर्तत ॥३४॥ चैलेन बद्ध्वा तमसाधुकारिणं सश्मश्रुकेशं प्रवपन्व्यरूपयत् ॥ तावन्ममर्दुः परसैन्यमद्भुतं यदुप्रवीरा नलिनीं यथा गजाः ॥ ३५ ॥ कृष्णांतिकमुपव्रज्य ददृशुस्तत्र रुक्मिणम् ॥ तथाभूतं हतप्रायं दृष्ट्वा संकर्षणो विभुः ॥ विमुच्य बद्धं करुणो भगवान्कृष्णमब्रवीत् ॥ ३६ ॥ असाध्विदं त्वया कृष्ण कृतमस्मज्जुगुप्सितम् ॥ वपनं श्मश्रुकेशानां वैरूप्यं सुहृदो वधः ॥ ३७ ॥ मैवास्मान्साध्व्यसूयेथा भ्रातुर्वैरूप्यचिंतया ॥ सुखदुःखदो न चान्योऽस्ति यतः स्वकृतभुक्पुमान् ॥ ३८ ॥ बधुर्वधार्हदोषोऽपि न बंधोर्वधमर्हति ॥ त्याज्यः स्वेनैव दोषेण हतः किं हन्यते पुनः ॥ ३९ ॥ क्षत्रियाणामयं धर्मः प्रजापतिविनिर्मितः ॥ भ्राताऽपि भ्रातरं हन्याद्येन घोरतरस्ततः ॥ ४० ॥ राज्यस्य भूमेर्वित्तस्य स्त्रियो मानस्य तेजसः ॥ मानिनोऽन्यस्य वा हेतोः श्रीमदांधाः क्षिपंति हि ॥४१॥ तवेयं विषमा बुद्धिः सर्वभूतेषु दुर्हृदाम् ॥ यन्मन्यसे सदा भद्रं सुहृदां भद्रमज्ञवत् ॥ ४२ ॥ आत्ममोहो नृणामेष कल्प्यते देवमायया ॥ सुहृद्दुर्हृदुदासीन इति देहात्ममानिनाम् ॥ ४३ ॥ एक एव परो ह्यात्मा सर्वेषामपि देहिनाम् ॥ नानेव गृह्यते मूढैर्यथा ज्योतिर्यथा नभः ॥ ४४ ॥ देह आद्यंतवानेष द्रव्यप्राणगुणात्मकः ॥ आत्मन्यविद्यया क्लृप्तः संसारयति देहिनम् ॥ ४५ ॥ नात्मनोऽन्येन संयोगो वियोगश्चासतः सति ॥ तद्धेतुत्वात्तत्प्रसिद्धेर्दृग्रू-

अथवा सर्वभूतेषु मध्ये दुर्हृदां शिशुपालादीनामभद्रं सुहृदां भद्रं च यन्मन्यसे तवेयं विषमा बुद्धिः समा न भवति । अज्ञवदज्ञानामिव ॥ ४२ ॥ कुत इत्यत आह । आत्ममोह इति ॥ ४३ ॥ परमार्थमाह । एक एवेति । परः शुद्धः ज्योतिश्चंद्रादिर्यथोदकेषु । नभो यथा घटादिष्विति ॥ ४४ ॥ कुतस्तर्हि न चंद्रादिवदात्मानमेकं शुद्धं प्रतीमस्तत्राह । देह इति । द्रव्यमधिभूतम् । प्राण इंद्रियाण्यध्यात्मम् । गुणशब्देनाधिदैवं तत्त्रितयात्मकः देहोपाधिना शुद्धो न प्रतीयत इत्यर्थः ॥४५॥ ननु देहसंबंधेनापि संसारे सति शुद्धत्वं गतमेव तत्राह । नात्मन इति । हे सति । अन्येनाधिभूतादिनाऽऽत्मनः संयोगवियोगौ न स्तः । कुतः असतः असत्त्वादन्यस्येत्यर्थः । कुतोऽसत्त्वं तत्राह । तद्धेतुत्वादिति । तस्यान्यस्य भूतेंद्रियादेः प्रसिद्धेः प्रकाशस्य तद्धेतुत्वादात्महेतुत्वात् । ननु देवैरधिष्ठितेभ्य इंद्रियेभ्यो भूतानां प्रतीतिः प्रसिद्धा । भूतप्रतीत्या च तत्प्रसिद्धिर्नात्मन इत्यत आह । दृग्रूपाभ्यां यथा रवेः प्रकाश्यप्रकाशकत्वेन वर्तमानयोरपि चक्षूरूपयोः रवेः सका-

शात्मसिद्धिर्द्वयोरपि तैजसत्वात्तदभेदश्च तथा भूतेंद्रियादीनां परस्परं सिद्धानामपि चैतन्याधीन एव प्रकाशस्तत्कार्यत्वाच्च तद्व्यतिरेकेणासत्त्वं चेत्यर्थः। तथा च द्वादशे वक्ष्यति । दीपश्च चक्षू रूपं च ज्योतिषो न पृथक् भवेत् ॥ एवं धीः खानि मात्राश्च न स्युरन्यतमादृतादिति । यद्वा । रवेः प्रसिद्धाभ्यां परस्परं प्रसिद्धिर्यथा भवति तद्वदिति ॥ ४६ ॥ देहसंबंधाभावादेव नात्मनो जन्मादयोऽपीति वक्तुं जन्मादीनां देहधर्मत्वमाह । जन्मादयस्त्विति। कथं तर्हि जातोऽहं बालोऽहं वृद्धोऽहमित्यात्मनि जन्मादिप्रतीतिः देहजन्मादिनैवेति सदृष्टांतमाह । कलानामिवेति। इंदोः कलानामेव जन्मादयो नैवेंदोर्यथा तद्वत् । यथा च कलानाशादेव कुहूरमावास्या इंदुक्षय उच्यते । तद्वदस्यात्मनो देहनाशादेव मृतिव्यवहार इत्यर्थः ॥४७॥ नन्वात्मनो देहादिसंबंधाभावे कथं भोक्तृभोग्यभोगप्रतीतिरित्याशंक्य स्वप्नदृष्टांतेन समर्थयति ।यथा शयान इति आत्मानं भोक्तारं विषयान् भोग्यान्फलं भोगमसत्यप्यर्थेऽनुभुंक्ते तथाऽबुधः संसारं प्राप्नोति ॥ ४८ ॥ आत्मानं शो-

पाभ्यां यथा रवेः ॥ ४६ ॥ जन्मादयस्तु देहस्य विक्रिया नात्मनः क्वचित् ॥ कलानामिव नैवेंदोर्मृतिर्ह्यस्य कुहूरिव ॥ ४७ ॥ यथा शयान आत्मानं विषयान्फलमेव च ॥ अनुभुंक्तेऽप्यसत्यर्थे तथाऽऽप्नोत्यबुधो भवम् ॥ ४८ ॥ तस्मादज्ञानजं शोकमात्मशोषविमोहनम् ॥ तत्त्वज्ञानेन निर्हृत्य स्वस्था भव शुचिस्मिते ॥ ४९ ॥ श्रीशुक उवाच ॥ एवं भगवता तन्वी रामेण प्रतिबोधिता ॥ वैमनस्यं परित्यज्य मनो बुद्ध्या समादधे ॥ ५० ॥ प्राणावशेष उत्सृष्टो द्विड्भिर्हतबलप्रभः ॥ स्मरन्विरूपकरणं वितथात्ममनोरथः ॥ ५१ ॥ अहत्वा दुर्मतिं कृष्णमप्रत्यूह्य यवीयसीम् ॥ कुंडिनं न प्रवेक्ष्यामीत्युक्त्वा तत्रावसद्रुषा ॥ ५२ ॥ भगवान्भीष्मकसुतामेवं निर्जित्य भूमिपान् ॥ पुरमानीय विधिवदुपयेमे कुरूद्वह ॥ ५३ ॥ तदा महोत्सवो नृणां यदुपुर्यां गृहे गृहे ॥ अभूदनन्यभावानां कृष्णे यदुपतौ नृप ॥ ५४ ॥ नरा नार्यश्च मुदिताः प्रमृष्टमणिकुंडलाः ॥ पारिबर्हमुपाजह्रुर्वरयोश्चित्रवाससोः ॥५५॥ सा वृष्णिपुर्युत्तभितेंद्रकेतुभिर्विचित्रमाल्यांबररत्नतोरणैः ॥ बभौ प्रतिद्वार्युपक्लृप्तमंगलैरापूर्णकुम्भागुरुधूपदीपकैः ॥५६॥ सिक्तमार्गा मदच्युद्भिराहूतप्रेष्ठभूभुजाम् ॥ गजैर्द्वाःसु परामृष्टरंभापूगोपशोभिता ॥ ५७ ॥ कुरुसृंजयकैकेयविदर्भयदुकुन्तयः ॥ मिथो मुमुदिरे तस्मिन्संभ्रमात्परिधावताम् ॥५८॥ रुक्मिण्याहरणं श्रुत्वा गीयमानं ततस्ततः ॥ राजानो राजकन्याश्च बभूवुर्भृशविस्मिताः ॥ ५९ ॥ द्वारकायामभूद्राजन्महामोदः पुरौकसाम् ॥ रुक्मिण्या रमयोपेतं दृष्ट्वा कृष्णं श्रियः पतिम् ॥ ६० ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे रुक्मिण्युद्वाहोत्सवे

षयति विमोहयति चेति तथा तम् । निर्हृत्यापाकृत्य ॥४९॥ समादधे समाहितमकरोत् ॥ ५० ॥ रुक्मिणस्त्वेवं श्रुतवतो नाज्ञानं निवृत्तमिति दर्शयन्नाह । प्राणावशेष इति ॥ ५१ ॥ अहत्वा अज्ञात्वाऽदुर्मतिमिति च सत्योऽर्थः । अप्रत्यूह्यानावर्त्य । अप्रतिबुध्येति तु सत्यम् । यवीयसीं स्वसारम् । यत्र विरूपितस्तत्रैवावसत् । तत्र च भोजकटं नाम पुरमभवत् ॥ ५२ ॥ ५३ ॥ ५४ ॥ वरयोर्वरवध्वोः । पारिबर्हं देयमुपस्करम् ॥५५॥ उत्तंभितैरिंद्रकेतुभिर्ध्वजविशेषैः । उपक्लृप्तानि मंगलानि लाजांकुरपुष्पप्रकरादीनि तैः ॥ ५६ ॥ आहूताः प्रेष्ठा भूभुजस्तेषां गजैः परामृष्टा उच्छ्रिता रंभाश्च पूगाश्च तैरुपशोभिता । यद्वा । तैरेव गजैः परामृष्टा संस्पृष्टा रंभाश्च तैरुपशोभिता ॥५७॥ संभ्रमादौत्सुक्यात्परिधावतां बंधूनां मध्ये मिथः समेत्य मुदं प्रापुः ॥ ५८ ॥ ५९ ॥ ६० ॥

इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे टीकायां चतुःपंचाशत्तमोऽध्यायः ॥५४॥ पंचपंचाशत्तमे तु प्रद्युम्नोऽजनि कृष्णतः ॥ शंबरेण हृतः सोऽथ हत्वा तं कांतयाऽगमत् ॥१॥ प्रद्युम्नहानिलाभाद्यैः शंबराहरणादिना ॥ कुटुंबिनामपत्यादिसुखदुःखमसूसुचत् ॥२॥ जांबवत्यादिविवाहेभ्यः प्रागेव प्रद्युम्नजन्म ततो विवाहास्ततः शंबरागारात्प्रद्युम्नप्रत्यागमनं अतः पुत्रकथनप्रस्तावेऽपि प्रथमं प्रद्युम्नस्य जातमात्रस्य शंबरेण हरणं निरूप्यते । प्रत्यागमनं तूत्तरकालीनमपि कथापर्यवसानायात्रोक्तमिति । वासुदेवाधिष्ठितचित्तप्रभवत्वाद्वासुदेवांशः सृष्टिहेतुत्वाच्च । देहोपपत्तये देहप्राप्तये ॥१॥ अनवमोऽन्यूनः ॥२॥ स प्रसिद्धः कामशत्रुः शंबरस्तमात्मनः शत्रुं विदित्वा हृत्वा समुद्रे प्रास्य प्रक्षिप्य गृहमगादिति ॥३॥ निर्जगार गिलितवान् ॥ ४ ॥ स्वधितिना शस्त्रिकया । अवद्यन्नवा-

चतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥ श्रीशुक उवाच ॥ कामस्तु वासुदेवांशो दग्धः प्राग्रुद्रमन्युना ॥ देहोपपत्तये भूयस्तमेव प्रत्यपद्यत ॥ १ ॥ स एव जातो वैदर्भ्यां कृष्णवीर्यसमुद्भवः ॥ प्रद्युम्न इति विख्यातः सर्वतोऽनवमः पितुः ॥२॥ तं शंबरः कामरूपी हृत्वा तोकमनिर्दशम् ॥ स विदित्वाऽऽत्मनः शत्रुं प्रास्योदन्वत्यगाद्गृहम् ॥ ३ ॥ तं निर्जगार बलवान्मीनः सोऽप्यपरैः सह ॥ धृतो जालेन महता गृहीतो मत्स्यजीविभिः ॥ ४ ॥ तं शंबराय कैवर्ता उपाजह्रुरुपायनम् ॥ सूदा महानसं नीत्वाऽवद्यन्स्वधितिनाऽद्भुतम् ॥ ५ ॥ दृष्ट्वा तदुदरे बालं मायावत्यै न्यवेदयन् ॥ नारदोऽकथयत्सर्वं तस्याः शंकितचेतसः ॥ बालस्य तत्त्वमुत्पत्तिं मत्स्योदरनिवेशनम् ॥ ६ ॥ सा च कामस्य वै पत्नी रतिर्नाम यशस्विनी ॥ पत्युर्निर्दग्धदेहस्य देहोत्पत्तिं प्रतीक्षती ॥ ७ ॥ निरूपिता शंबरेण सा सूपौदनसाधने ॥ कामदेवं शिशुं बुद्ध्वा चक्रे स्नेहं तदाऽर्भके ॥ ८ ॥ नातिदीर्घेण कालेन स कार्ष्णी रूढयौवनः ॥ जनयामास नारीणां वीक्षंतीनां च विभ्रमम् ॥ ९ ॥ सा तं पतिं पद्मदलायतेक्षणं प्रलंबबाहुं नरलोकसुन्दरम् ॥ सव्रीडहासोत्तभितभ्रुवेक्षती प्रीत्योपतस्थे रतिरंग सौरतैः ॥ १० ॥ तामाह भगवान्कार्ष्णिर्मातस्ते मतिरन्यथा ॥ मातृभावमतिक्रम्य वर्तसे कामिनी यथा ॥११॥ रतिरुवाच ॥ भवान्नारायणसुतः शंबरेणाहृतो गृहात् ॥ अहं तेऽधिकृता पत्नी रतिः कामो भवान्प्रभो ॥१२॥ एष त्वाऽनिर्दशं सिंधावक्षिपच्छंबरोऽसुरः ॥ मत्स्योऽग्रसीत्तदुदरादिह प्राप्तो भवान्प्रभो ॥१३॥ तमिमं जहि दुर्धर्षं दुर्जयं शत्रुमात्मनः ॥ मायाशतविदं त्वं च मायाभिर्मोहनादिभिः ॥ १४ ॥ परिशोचति ते माता कुररीव गतप्रजा ॥ पुत्रस्नेहाकुला दीना विवत्सा गौरिवातुरा ॥१५॥ प्रभाष्यैवं ददौ विद्यां प्रद्युम्नाय महात्मने ॥ मायावती महामायां सर्वमायाविनाशिनीम् ॥ १६ ॥ स च शंबरमभ्येत्य संयुगाय समाह्वयत् ॥ अविषह्यैस्तमाक्षेपैः क्षिपन्संजनयन्कलिम् ॥ १७ ॥ सोऽधिक्षिप्तो दुर्वचोभिः पदाऽऽहत इवोरगः ॥ निश्चक्राम गदापाणिरमर्षात्ताम्रलोचनः ॥१८॥ गदामाविध्य तरसा प्रद्युम्नाय महात्मने ॥ प्रक्षिप्य

वद्यन्खंडितवंतः ॥५॥ तत्त्वं कामोऽयं तव भर्तेति । उत्पत्तिं श्रीकृष्णाद्रुक्मिण्यामुत्पन्न इति ॥ ६ ॥ यशस्विनी पतिव्रता । भर्तृदेहप्राप्तिं प्रतीक्षमाणा ॥ ७ ॥ तं शिशुं कामदेवं बुद्ध्वा विज्ञाय ॥८॥ विभ्रमं संमोहम् ॥९॥ अंग हे राजन् । सौरतभर्विरुपतस्थेऽभजत् ॥ १० ॥ ११ ॥ अधिकृता पत्नीत्यत्र हेतुः । रतिरहं भवान्काम इति ॥ १२ ॥ १३ ॥ दुर्जयत्वे हेतुः । मायाशतविदमिति । कथं तर्हि हंतव्यस्तत्राह । मायाभिरिति ॥१४॥ न चात्र विलंबः कार्य इत्याह । परिशोचति रोदितीत्यर्थः ॥१५–१८॥ वज्रस्य निष्पेषे निर्घाते यथा निष्ठुरस्तीव्रो नादो भवति तथाभूतं

नादं व्यनदत् । सामान्यविषयतया व्याप्यव्यापकत्वमोदनं पाकं पचतीतिवत् । अतिनिष्ठुरं नादमकरोदित्यर्थः ॥१९॥२०॥ वैहायस आकाशे स्थितः ॥२१॥ सत्त्वात्मिकां सत्त्वगुणमयीं प्रायुंक्तेत्युत्तरस्यानुषंगः ॥ २२ ॥ ता मायाः व्यधमयद्व्यनाशयत् ॥२३॥ ताम्राणि श्मश्रूणि यस्मिंस्तत् । ओजसा बलेन ॥ २४ ॥ २५ ॥ विद्युता सह बलाहको मेघ इव ॥२६॥२७॥ नीलाश्च वक्राश्च येऽलकास्त एवालयस्तैः ह्रीता लज्जिता ॥२८॥ श्रीकृष्णो न भवतीत्यवधार्य स्त्रीषु रत्नं श्रेष्ठा रतिस्तत्सहितम् ॥ २९ ॥ ३० ॥ सुतं स्मरंत्याह । को न्वयमिति । नरवैदूर्यः पुरुषश्रेष्ठः

व्यनदन्नादं वज्रनिष्पेषनिष्ठुरम् ॥ १९ ॥ तामापतंतीं भगवान्प्रद्युम्नो गदया गदाम् ॥ अपास्य शत्रवे क्रुद्धः प्राहिणोत्स्वगदां नृप ॥ २० ॥ स च मायां समाश्रित्य दैतेयीं मयदर्शिताम् ॥ मुमुचेऽस्त्रमयं वर्षं कार्ष्णौ वैहायसोऽसुरः ॥ २१ ॥ बाध्यमानोऽस्त्रवर्षेण रौक्मिणेयो महारथः ॥ सत्त्वात्मिकां महाविद्यां सर्वमायोपमर्दिनीम् ॥ २२ ॥ ततो गौह्यकगांधर्वपैशाचोरगराक्षसीः ॥ प्रायुंक्त शतशो दैत्यः कार्ष्णिर्व्यधमयत्स ताः ॥२३॥ निशातमसिमुद्यम्य सकिरीटं सकुण्डलम् ॥ शंबरस्य शिरः कायात्ताम्रश्मश्र्वोजसाऽहरत् ॥२४॥ आकीर्यमाणो दिविजैः स्तुवद्भिः कुसुमोत्करैः ॥ भार्ययाऽम्बरचारिण्या पुरं नीतो विहायसा ॥ २५ ॥ अंतःपुरवरं राजँल्ललनाशतसंकुलम् ॥ विवेश पत्न्या गगनाद्विद्युतेव बलाहकः ॥ २६ ॥ तं दृष्ट्वा जलदश्यामं पीतकौशेयवाससम् ॥ प्रलंबबाहुं ताम्राक्षं सुस्मितं रुचिराननम् ॥ २७ ॥ स्वलंकृतमुखांभोजं नीलवक्रालकालिभिः ॥ कृष्णं मत्वा स्त्रियो ह्रीता निलिल्युस्तत्र तत्र ह ॥ २८ ॥ अवधार्य शनैरीषद्वैलक्षण्येन योषितः ॥ उपजग्मुः प्रमुदिताः सस्त्रीरत्नं सुविस्मिताः ॥ २९ ॥ अथ तत्रासितापांगी वैदर्भी वल्गुभाषिणी ॥ अस्मरत्स्वसुतं नष्टं स्नेहस्नुतपयोधरा ॥ ३० ॥ को न्वयं नरवैदूर्यः कस्य वा कमलेक्षणः ॥ धृतः कया वा जठरे केयं लब्धा त्वनेन वा ॥ ३१ ॥ मम चाप्यात्मजो नष्टो नीतो यः सूतिकागृहात् ॥ एतत्तुल्यवयोरूपो यदि जीवति कुत्रचित् ॥ ३२ ॥ कथं त्वनेन सम्प्राप्तं सारूप्यं शार्ङ्गधन्वनः ॥ आकृत्याऽवयवैर्गत्या स्वरहासावलोकनैः ॥३३॥ स एव वा भवेन्नूनं यो मे गर्भे धृतोऽर्भकः ॥ अमुष्मिन्प्रीतिरधिका वामः स्फुरति मे भुजः ॥ ३४ ॥ एवं मीमांसमानायां वैदर्भ्यां देवकीसुतः ॥ देवक्यानकदुन्दुभ्यामुत्तमश्लोक आगमत् ॥ ३५ ॥ विज्ञातार्थोऽपि भगवांस्तूष्णीमास जनार्दनः ॥ नारदोऽकथयत्सर्वं शम्बराहरणादिकम् ॥ ३६ ॥ तच्छ्रुत्वा महदाश्चर्यं कृष्णांतःपुरयोषितः ॥ अभ्यनन्दन्बहूनब्दान्नष्टं मृतमिवागतम् ॥३७॥ देवकी वसुदेवश्च कृष्णरामौ तथा स्त्रियः ॥ दम्पती तौ परिष्वज्य रुक्मिणी च ययुर्मुदम् ॥३८॥ नष्टं प्रद्युम्नमायातमाकर्ण्य द्वारकौकसः ॥ अहो मृत इवायातो बालो दिष्ट्येति हाब्रुवन् ॥ ३९ ॥ यं वै मुहुः पितृसरूपनिजेशभावास्तन्मातरो यदभजन्रहरूढभावाः ॥ चित्रं न

॥३१॥ तेन तुल्यं वयो रूपं च यस्य स भवेदिति ॥ ३२ ॥ तस्य स्वपुत्रत्वं संभावयंत्याह । कथं त्विति ॥ ३३ ॥ तदेवाधिकं संभावयति । स एवेति ॥ ३४ ॥ देवक्यानकदुंदुभ्यां देवक्यानकदुंदुभिभ्यामित्यर्थः ॥३५-३९॥ अतिसौंदर्येण प्रद्युम्नं वर्णयति । यमिति । पिता श्रीकृष्णस्तत्सरूपे तत्सदृशे प्रद्युम्ने निज आत्मीय ईशो भर्तेति भावो भावना यासां तास्तन्मातरः कृष्णपत्न्यो-

ऽपि रहसि निरुढभावाः सत्यो यमभजन्निति यत्तन्न खलु चित्रम् । कथं सति । स्मरे स्मर्यमाणत्वेनैव क्षोभके कामेऽक्षिविषये सति किंच रमास्पदं श्रीकृष्णस्तस्य बिंबं श्रीमूर्तिस्तस्य बिंबे प्रतिबिंबे पुत्रे तदा किं नु वक्तव्यमन्यनार्यो भेजुरिति ॥ ४० ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे टीकायां पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ षट्पञ्चाशत्तमे मिथ्याऽभियोगे मणिमाहरत् ॥ कन्यां जांबवतः प्राप कृष्णः सत्राजितस्ततः ॥१॥ पुत्रादिकामसौख्यस्य निष्ठामुक्त्वाऽतिचञ्चलाम् ॥ अर्थस्यानर्थतामाह स्यमंतहरणादिना ॥२॥ सत्यभामाजांबवत्योर्विवाहप्रस्तावाय स्यमंतकाख्यान-माह । सत्राजित इति । सत्राजित इत्यकारांतः क्वचिच्च तकारांतोऽप्यन्वयानुसारेण द्रष्टव्यः । कृतापराधस्तच्छांतये स्वयमेवोद्यमं कृत्वा मणिना सह प्रादादिति ॥१॥२॥ भक्तस्य सत्राजितः । सूर्यः स्वाम्यपि सखेवासीदित्यर्थः । स च तुष्टस्तस्मै स्यमंतकं नाम मणिं प्रादात् । प्रीतः स्निग्धः ॥ ३ ॥ नोपलक्षितः सत्राजितोऽसावित्यविज्ञाता ॥४॥ दीव्यते क्रीडते सूर्योऽयमिति शङ्किताः संतः

तत्खलु रमास्पदबिंबबिंबे कामे स्मरेऽक्षिविषये किमुतान्यनार्यः ॥ ४० ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे प्रद्युम्नोत्पत्तिनिरूपणं नाम पञ्च-पञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ श्रीशुक उवाच ॥ सत्राजितः स्वतनयां कृष्णाय कृतकिल्बिषः ॥ स्यमंतकेन मणिना स्वयमुद्यम्य दत्तवान् ॥ १ ॥ राजोवाच ॥ सत्राजितः किमकरोद्ब्रह्मन्कृष्णस्य किल्बिषम् ॥ स्यमंतकः कुतस्तस्य कस्माद्दत्ता सुता हरेः ॥ २ ॥ श्रीशुक उवाच ॥ आसीत्सत्रा-जितः सूर्यो भक्तस्य परमः सखा॥ प्रीतस्तस्मै मणिं प्रादात्सूर्यस्तुष्टः स्यमंतकम् ॥३॥ स तं बिभ्रन्मणिं कंठे भ्राजमानो यथा रविः ॥ प्रविष्टो द्वारकां राजंस्तेजसा नोपलक्षितः ॥ ४ ॥ तं विलोक्य जना दूरात्तेजसा मुष्टदृष्टयः ॥ दीव्यतेऽक्षैर्भगवते शशंसुः सूर्यशङ्किताः ॥ ५ ॥ नारायण नमस्तेऽस्तु शङ्खचक्रगदाधर ॥ दामोदरारविंदाक्ष गोविन्द यदुनन्दन ॥ ६ ॥ एष आयाति सविता त्वां दिदृक्षुर्जगत्पते ॥ मुष्णन्गभस्तिचक्रेण नृणां चक्षूंषि तिग्मगुः ॥७॥ नन्वन्विच्छंति ते मार्गं त्रिलोक्यां विबुधर्षभाः ॥ ज्ञात्वाऽद्य गूढं यदुषु द्रष्टुं त्वां यात्यजः प्रभो ॥ ८ ॥ श्रीशुक उवाच ॥ निशाम्य बालवचनं प्रहस्यांबुजलोचनः ॥ प्राह नासौ रविर्देवः सत्राजिन्मणिना ज्वलन् ॥ ९ ॥ सत्राजित्स्वगृहं श्रीमत्कृतकौतुकमङ्गलम् ॥ प्रविश्य देवसदने मणिं विप्रैर्न्यवेशयत् ॥ १० ॥ दिने दिने स्वर्णभारानष्टौ स सृजति प्रभो ॥ दुर्भिक्षमार्यरिष्टानि सर्पाधिव्याधयोऽशुभाः ॥ न संति मायिनस्तत्र यत्रास्तेऽभ्यर्चितो मणिः ॥ ११ ॥ स याचितो मणिं क्वापि यदुराजाय शौरिणा ॥ नैवार्थकामुकः प्रादाद्याञ्चाभङ्गमतर्कयन् ॥ १२ ॥ तमेकदा मणिं

कथयामासुरिति ॥५॥ सूर्यं नमस्कारार्थमागतं कल्पयित्वोद्रिक्तभक्तीनां संबोधनानि नारायणेत्यादीनि ॥६॥ गभस्तिचक्रेण रश्मिजालेन मुष्णन्प्रतिघ्नन् । तिग्मास्तीक्ष्णा गावो रश्मयो यस्य सः ॥ ७ ॥ न चेदमघटमानमित्याहुः । नन्विति । अन्विच्छंति मृगयंते । अजः सूर्यः ॥ ८ ॥ बालानामज्ञानां वचनम् । ज्वलन् विद्योतमानः ॥ ९ ॥ कृतानि कौतुकेनोत्सवेन मङ्गलानि यस्मिं-स्तत् । विप्रैः कृत्वा ॥१०॥ भारप्रमाणं च । चतुर्भिर्व्रीहिभिर्गुंजं गुञ्जान्पञ्चपणं पणान् ॥ अष्टौ धरणमष्टौ च कर्षं तांश्चतुरः पलम् ॥ तुलां पलशतं प्राहुर्भारः स्याद्विंशतिस्तुला इति । मारीनामा-कालमृत्युः । अरिष्टमभद्रम् । अशुभा दुःखहेतवः ॥११॥ क्वापि कदाचित् । अनेन भगवत्यसमर्प्य स्वयमग्रभोजिनः सर्वानिष्टनिवर्तकमप्यनिष्टहेतुरेव भवतीति सूचितम् ॥१२॥ तदेव दर्शयितु-

माह । तमेकदेति । प्रतिमुच्य बद्ध्वा । प्रसेनः सत्राजिद्भ्राता ॥१३॥ आच्छिद्य आकृष्य गृहीत्वा ॥१४॥१५॥ अजपन्नुपांशु अवोचन् ॥१६-२२॥ क्रव्यार्थे आमिषार्थे ॥२३॥ अष्टाविंशाहं अष्ट च विंशतिश्चाहानि दिनानि यस्मिंस्तदष्टाविंशाहम् । विंशतिशब्दे तिलोप आर्षः । वज्रस्य निष्पेषो निर्घातस्तद्वत्परुषैर्निष्ठुरैः ॥२४॥ श्रीकृष्णस्य मुष्टीनां विनिष्पातैराघातैर्निष्पिष्टानि श्लथान्यङ्गानामुरूणि बंधनानि संधिस्थानानि यस्य सः ॥२५॥ लोके को वाऽयं मत्तो बलीयानिति विस्मितः सन्विमृश्याह । जाने इति । सर्वभूतानां यः प्राणस्तत्र यदोजः सहो बलं चइंद्रियहृद्यदेहबलानि तत्सर्वं त्वमित्यहं जाने । कथं तथा त्वमत आह । विष्णुमित्यादि ॥२६॥ पुराणत्वे हेतुः । त्वं हीति । स्रष्टा निमित्तम् । यच्च सदुपादानम् । अतः पुराणम् । प्रभविष्णुत्वे हेतुः ।

कंठे प्रतिमुच्य महाप्रभम् ॥ प्रसेनो हयमारुह्य मृगयां व्यचरद्वने ॥१३॥ प्रसेनं सहयं हत्वा मणिमाच्छिद्य केसरी ॥ गिरिं विशन् जांबवता निहतो मणिमिच्छता ॥ १४ ॥ सोऽपि चक्रे कुमारस्य मणिं क्रीडनकं बिले ॥ अपश्यन् भ्रातरं भ्राता सत्राजित्पर्यतप्यत ॥ १५ ॥ प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः ॥ भ्राता ममेति तच्छ्रुत्वा कर्णे कर्णेऽजपन् जनाः ॥१६॥ भगवाँस्तदुपश्रुत्य दुर्यशो लिप्तमात्मनि ॥ मार्ष्टुं प्रसेनपदवीमन्वपद्यत नागरैः ॥१७॥ हतं प्रसेनमश्वं च वीक्ष्य केसरिणा वने ॥ तं चाद्रिपृष्ठे निहतमृक्षेण ददृशुर्जनाः ॥ १८ ॥ ऋक्षराजबिलं भीममंधेन तमसावृतम् ॥ एको विवेश भगवानवस्थाप्य बहिः प्रजाः ॥ १९ ॥ तत्र दृष्ट्वा मणिश्रेष्ठं बालक्रीडनकं कृतम् ॥ हर्तुं कृतमतिस्तस्मिन्नवतस्थेऽर्भकांतिके ॥ २० ॥ तमपूर्वं नरं दृष्ट्वा धात्री चुक्रोश भीतवत् ॥ तच्छ्रुत्वाऽभ्यद्रवत्क्रुद्धो जांबवान्बलिनां वरः ॥ २१ ॥ स वै भगवता तेन युयुधे स्वामिनाऽऽत्मनः ॥ पुरुषं प्राकृतं मत्वा कुपितो नानुभाववित् ॥ २२ ॥ द्वन्द्वयुद्धं सुतुमुलमुभयोर्विजिगीषतोः ॥ आयुधाश्मद्रुमैर्दोर्भिः क्रव्यार्थे श्येनयोरिव ॥ २३ ॥ आसीत्तदष्टाविंशाहमितरेतरमुष्टिभिः ॥ वज्रनिष्पेषपरुषैरविश्रममहर्निशम् ॥ २४ ॥ कृष्णमुष्टिविनिष्पातनिष्पिष्टांगोरुबंधनः ॥ क्षीणसत्त्वः स्विन्नगात्रस्तमाहातीव विस्मितः ॥ २५ ॥ जाने त्वां सर्वभूतानां प्राण ओजः सहो बलम् ॥ विष्णुं पुराणपुरुषं प्रभविष्णुमधीश्वरम् ॥ २६ ॥ त्वं हि विश्वसृजां स्रष्टा सृज्यानामपि यच्च सत् ॥ कालः कलयतामीशः पर आत्मा तथाऽऽत्मनाम् ॥ २७ ॥ यस्येषदुत्कलितरोषकटाक्षमोक्षैर्वर्त्मादिशत्क्षुभितनक्रतिमिंगिलोऽब्धिः ॥ सेतुः कृतः स्वयश उज्ज्वलिता च लंका रक्षःशिरांसि भुवि पेतुरिषुक्षतानि ॥ २८ ॥ इति विज्ञातविज्ञानमृक्षराजानमच्युतः ॥ व्याजहार महाराज भगवान्देवकीसुतः ॥ २९ ॥ अभिमृश्यारविंदाक्षः पाणिना शंकरेण तम् ॥ कृपया परया भक्तं प्रेमगंभीरया गिरा

काल इति । अधीश्वरस्त्वमप्यत एवेत्याह । ईशः पर इति । न च तटस्थ इत्याह । आत्मनामात्मेति ॥२७॥ यत एवंभूतोऽतो ममेष्टदैवतं रघुनाथ एव त्वमित्याह । यस्येति । ईषदुत्कलित उद्दीपितो यो रोषस्तेन ये कटाक्षमोक्षास्तैः क्षुभिता नक्रा ग्राहास्तिमिंगिला महामत्स्याश्च यस्मिन्स सोऽब्धिर्वर्त्म मार्गमादिशद्ददावांस्तथाऽपि तस्मिन् येन त्वया स्वयश एव सेतुः कृतः । उज्ज्वलिता च दग्धा । यस्येषुभिः क्षतानि छिन्नानि रक्षसो दशग्रीवस्य सिरांसि भुवि पेतुः । स एव त्वमिति जाने ॥२८॥ इति विज्ञातं विज्ञानं येन तम् । विज्ञानशब्दः करणसाधनः कर्मसाधनो वा । ऋक्षराजं प्रत्यु-

क्तवान् ॥२९॥३०॥ वयं बहवो बिलद्वारं प्राप्तास्तत्र मिथ्याभिशापममुना मणिना प्रमृजन् प्रमार्ष्टुमहमंतर्बिलमिह प्राप्त इत्यर्थः ॥ ३१ ॥ सह मणिना समर्पयामास ॥३२–३४॥ श्रीकृष्णप्राप्तये चंद्रभागां नाम दुर्गामभजन् ॥३५॥ स च कृष्णस्तेषां प्रादुर्बभूव । आसव इति पाठे असव इन्द्रियाणि तेषां प्रेष्ठ इत्यर्थः । कदा । देव्या उपस्थानात् तया तान्प्रति आदिष्टा दत्ता या आशीः कृष्णं द्रक्ष्यथेति तया सहैव ॥३६॥ लोके जनाः कथंचिन्मृतं बंधुं पुनरागतमुपलभंते । तद्वदुपलभ्य सर्वे जातमहोत्सवा आसन्निति ॥३७॥३८॥ पाप्मनाऽऽपराधेनानुतप्यमानः ॥३९॥ अघं दोषम् । आत्मनो रजोमलमपराधमिति ॥४०॥ किं कृत्वा कस्मिन्कृते इत्यर्थः । साधु भद्रम् । अदीर्घदर्शनमविचारकं माम् । क्षुद्रं कृपणं मूढं मंदमतिम् ॥ ४१ ॥ एवं ध्यायन्नुपायं

॥ ३० ॥ मणिहेतोरिह प्राप्ता वयमृक्षपते बिलम् ॥ मिथ्याऽभिशापं प्रमृजन्नात्मनो मणिनाऽमुना ॥ ३१ ॥ इत्युक्तः स्वां दुहितरं कन्यां जांबवतीं मुदा ॥ अर्हणार्थं समणिना कृष्णायोपजहार ह ॥ ३२ ॥ अदृष्ट्वा निर्गमं शौरेः प्रविष्टस्य बिलं जनाः ॥ प्रतीक्ष्य द्वादशाहानि दुःखिताः स्वपुरं ययुः ॥ ३३ ॥ निशम्य देवकी देवी रुक्मिण्यानकदुंदुभिः ॥ सुहृदो ज्ञातयोऽशोचन्बिलात्कृष्णमनिर्गतम् ॥ ३४ ॥ सत्राजितं शपंतस्ते दुःखिता द्वारकौकसः ॥ उपतस्थुर्महामायां दुर्गां कृष्णोपलब्धये ॥ ३५ ॥ तेषां तु देव्युपस्थानात्प्रत्यादिष्टाऽऽशिषा स च ॥ प्रादुर्बभूव सिद्धार्थः सदारो हर्षयन्हरिः ॥ ३६ ॥ उपलभ्य हृषीकेशं मृतं पुनरिवागतम् ॥ सह पत्न्या मणिग्रीवं सर्वे जातमहोत्सवाः ॥ ३७ ॥ सत्राजितं समाहूय सभायां राजसन्निधौ ॥ प्राप्तिं चाख्याय भगवान्मणिं तस्मै न्यवेदयत् ॥ ३८ ॥ स चातिव्रीडितो रत्नं गृहीत्वाऽवाङ्मुखस्ततः ॥ अनुतप्यमानो भवनमगमत्स्वेन पाप्मना ॥ ३९ ॥ सोऽनुध्यायंस्तदेवाघं बलवद्विग्रहाकुलः ॥ कथं मृजाम्यात्मरजः प्रसीदेद्वाऽच्युतः कथम् ॥ ४० ॥ किं कृत्वा साधु मह्यं स्यान्न शपेद्वा जनो यथा ॥ अदीर्घदर्शनं क्षुद्रं मूढं द्रविणलोलुपम् ॥ ४१ ॥ दास्ये दुहितरं तस्मै स्त्रीरत्नं रत्नमेव च ॥ उपायोऽयं समीचीनस्तस्य शांतिर्न चान्यथा ॥ ४२ ॥ एवं व्यवसितो बुद्ध्या सत्राजित्स्वसुतां शुभाम् ॥ मणिं च स्वयमुद्यम्य कृष्णायोपजहार ह ॥ ४३ ॥ तां सत्यभामां भगवानुपयेमे यथाविधि ॥ बहुभिर्याचितां शीलरूपौदार्यगुणान्विताम् ॥ ४४ ॥ भगवानाह न मणिं प्रतीच्छामो वयं नृप ॥ तवास्तां देवभक्तस्य वयं च फलभागिनः ॥ ४५ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे स्यमंतकोपाख्याने षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥ श्रीशुक उवाच ॥ विज्ञातार्थोऽपि गोविंदो दग्धानाकर्ण्य पांडवान् ॥ कुंतीं च कुल्यकरणे सहरामो ययौ कुरून् ॥ १ ॥ भीष्मं कृपं सविदुरं गांधारीं द्रोण-

निश्चिनोति । दास्य इति । स्त्रीरत्नं दुहितरं तावद्दास्यामि तदनंतरं पारिबर्हत्वेन रत्नमपीति ॥४२॥४३॥ बहुभिः कृतवर्मादिभिः ॥४४॥ मणिं न प्रतीच्छामो न स्वीकुर्मः । देवः सूर्यस्तद्भक्तस्येति कटाक्षः । फलभागिन इति । तवापुत्रत्वात्त्वदीयं धनमस्माकमेवेति गूढोऽभिप्रायः ॥४५॥ इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे टीकायां षट्पंचाशत्तमोऽध्यायः ॥५६॥ सप्तपञ्चाशत्तमे तु पुनः शतधनोर्वधे ॥ प्राप्तं स्म दुर्यशोऽमार्ष्टि कृष्णोऽक्रूराहृतान्मणेः ॥१॥ अक्रूरमुररीकृत्य मणेः पात्रमथाच्युतः ॥ उपामंत्र्य तमेकांते सरामोऽगाद्गजाह्वयम् ॥२॥ सत्राजितः श्रीकृष्णाज्ञाभंग-

फलं व्यक्तीकर्तुमाह । विज्ञातार्थोऽपीति । पांडवा बिलद्वारेण जतुगृहान्निर्गता इत्येवं विज्ञातोऽर्थो येन सः । कुन्तीं च दग्धामाकर्ण्य । कुल्यकरणे कुलोचितसंव्यवहारार्थम् ॥१॥ अन्येषां तद्दाहदुः-खाभावाद्भीष्मादीन्सङ्गम्येत्युक्तम् ॥२॥३॥ ननु जीवन्सत्राजित्कथं मणिं दास्यति तत्रोचतुः । योऽस्मभ्यमिति । भ्रातरं प्रसेनं मृतं कस्मान्नान्वियान्नानुगच्छेत् । म्रियतामित्यर्थः ॥ ४ ॥ ५ ॥ जग्मिवान् जगाम ॥६–११॥ हेलनं प्रतिकूलम् । वृजिनमपराधम् ॥१२॥ अपीतो मृतः । सप्तदशसंख्याकान् संयुगान् ॥१३॥१४॥ तौ रामकृष्णावेकमेव तत्त्वमित्यभिप्रेत्याह । य इदमिति ।

मेव च ॥ तुल्यदुःखौ च संगम्य हा कष्टमिति होचतुः ॥२॥ लब्ध्वैतदंतरं राजन् शतधन्वानमूचतुः॥ अक्रूरकृतवर्माणौ मणिः कस्मान्न गृह्यते ॥ ३ ॥ योऽस्मभ्यं संप्रतिश्रुत्य कन्यारत्नं विगर्ह्य नः ॥ कृष्णायादान्न सत्राजित्कस्माद्भ्रातरमन्वियात् ॥ ४ ॥ एवं भिन्नमतिस्ताभ्यां सत्राजितमसत्तमः ॥ शयानमवधील्लोभात्स पापः क्षीणजीवितः ॥५॥ स्त्रीणां विक्रोशमानानां क्रंदंतीनामनाथवत् ॥ हत्वा पशून्सौनिकवन्मणिमादाय जग्मिवान् ॥६॥ सत्यभामा च पितरं हतं वीक्ष्य शुचाऽर्पिता ॥ व्यलपत्तात तातेति हा हताऽस्मीति मुह्यती ॥ ७ ॥ तैलद्रोण्यां मृतं प्रास्य जगाम गजसाह्वयम् ॥ कृष्णाय विदितार्थाय तप्ताऽऽचख्यौ पितुर्वधम् ॥ ८ ॥ तदाकर्ण्येश्वरौ राजन्ननुसृत्य नृलोकताम् ॥ अहो नः परमं कष्टमित्यस्राक्षौ विलेपतुः ॥ ९ ॥ आगत्य भगवांस्तस्मात्सभार्यः साग्रजः पुरम् ॥ शतधन्वानमारेभे हंतुं हर्तुं मणिं ततः ॥ १० ॥ सोऽपि कृष्णोद्यमं ज्ञात्वा भीतः प्राणपरीप्सया ॥ साहाय्ये कृतवर्माणमयाचत स चाब्रवीत् ॥ ११ ॥ नाहमीश्वरयोः कुर्यां हेलनं रामकृष्णयोः ॥ को नु क्षेमाय कल्पेत तयोर्वृजिनमाचरन् ॥ १२ ॥ कंसः सहानुगोऽपीतो यद्द्वेषात्त्याजितः श्रिया ॥ जरासंधः सप्तदश संयुगान्विरथो गतः ॥१३॥ प्रत्याख्यातः स चाक्रूरं पार्ष्णिग्राहमयाचत ॥ सोऽ-प्याह को विरुद्ध्येत विद्वानीश्वरयोर्बलम् ॥ १४ ॥ य इदं लीलया विश्वं सृजत्यवति हंति च ॥ चेष्टां विश्वसृजो यस्य न विदुर्मोहिताजया ॥१५॥ यः सप्तहायनः शैलमुत्पाट्यैकेन पाणिना ॥ दधार लीलया बाल उच्छिलीन्ध्रमिवार्भकः ॥ १६ ॥ नमस्तस्मै भगवते कृष्णायाद्भुतकर्मणे ॥ अनंता-यादिभूताय कूटस्थायात्मने नमः ॥ १७ ॥ प्रत्याख्यातः स तेनापि शतधन्वा महामणिम् ॥ तस्मिन्न्यस्याश्वमारुह्य शतयोजनगं ययौ ॥ १८ ॥ गरुडध्वजमारुह्य रथं रामजनार्दनौ ॥ अन्वयातां महावेगैरश्वै राजन्गुरुद्रुहम् ॥ १९ ॥ मिथिलायामुपवने विसृज्य पतितं हयम् ॥ पद्भ्यामधावत्सं-त्रस्तः कृष्णोऽप्यन्वद्रवद्रुषा ॥ २० ॥ पदातेर्भगवांस्तस्य पदातिस्तिग्मनेमिना ॥ चक्रेण शिर उत्कृत्य वाससोर्व्यचिनोन्मणिम् ॥ २१ ॥ अलब्धम-णिरागत्य कृष्ण आहाग्रजांतिकम् ॥ वृथा हतः शतधनुर्मणिस्तत्र न विद्यते ॥२२॥ तत आह बलो नूनं स मणिः शतधन्वना ॥ कस्मिंश्चित्पुरुषे

अजया मायया । मोहिताजयेति संधिरार्षः ॥१५–१७॥ अन्तर्यामिकृष्णनियुक्तस्तस्मिन्नक्रूरे मणिं न्यस्य ययावपलायत ॥ १८ ॥ गुरुः श्वशुरस्तद्द्रुन्तारम् ॥ १९ ॥ शतयोजनमात्रगामित्वा-त्ततः परं गन्तुमशक्तस्तत्र पतितः । तं हयं विसृज्य ॥ २० ॥ व्यचिनोन्मृगयामास । अक्रूरे मणिरस्तीति सर्वज्ञतया विदित्वाऽपि रामवंचनाय तथा कृतवानिति भावः ॥ २१ ॥ २२ ॥

अन्वेषान्विच्छ ॥ २३ ॥ सर्वज्ञस्यैवं विचेष्टितं मद्वंचनायेति मत्वा गूढमन्युराह । अहमिति ॥ २४ ॥ २५ ॥ कतिचित्समाः संवत्सरान् । प्रासंगिकमाह । तत इति ॥ २६ ॥ सत्यभामामप्यवंचयदिति सूचयन्नाह । केशव इति ॥ २७ ॥ बंधोः सत्राजितः । सांपरायिकाः पारलौकिक्यः ॥ २८ ॥ व्यूषतुर्द्वारकायाः सकाशात्क्वापि पलायितौ प्रयोजकौ मणिहरणे शतधन्वनः प्रवर्तकौ । तत्राक्रूरः कृष्णानुमतेनैव गतः कृतवर्मा तु भक्तपक्षपातप्राकट्यभयादिवोपेक्षित इति गम्यते । कथमन्यथा सर्वज्ञेश्वरवचनं तयोः संभवतीति ॥२९॥ तदेवं वाराणस्यां दानपतिसमाख्यया मणिहस्तेऽक्रूरे रुक्मवेदिकैर्महाध्वरैर्यजमाने निवसति पुन श्रीकृष्णेनैव प्रस्थापितोऽक्रूर इति कर्णे कर्णे जपति जने सत्यभामारामादीनामप्यविश्वासे जनसंग्रहायाक्रूरं समाहूय साक्षेपं श्रीकृष्णः प्राह । इदं च भगवन्मतं संगोप्य केचन ऋषयोऽन्यत्कारणमक्रूरानयने वर्णयंति । तद्यथाश्रुतं दूषयितुमनुवदन्ति । अक्रूरे प्रोषित इति ॥ ३० ॥ दूषयति इतीति । अंग हे राजन् । श्रीकृष्णमाहात्म्यं विस्मृत्येति ।

न्यस्तस्तमन्वेष पुरं व्रज ॥२३॥ अहं विदेहमिच्छामि द्रष्टुं प्रियतमं मम ॥ इत्युक्त्वा मिथिलां राजन्विवेश यदुनंदनः ॥२४॥ तं दृष्ट्वा सहसोत्थाय मैथिलः प्रीतमानसः ॥ अर्हयामास विधिवदर्हणीयं समर्हणैः ॥२५॥ उवास तस्यां कतिचिन्मिथिलायां समा विभुः ॥ मानितः प्रीतियुक्तेन जनकेन महात्मना ॥ ततोऽशिक्षद्गदां काले धार्तराष्ट्रः सुयोधनः ॥२६॥ केशवो द्वारकामेत्य निधनं शतधन्वनः ॥ अप्राप्तिं च मणेः प्राह प्रियायाः प्रियकृद्विभुः ॥ २७ ॥ ततः स कारयामास क्रियां बन्धोर्हतस्य वै ॥ साकं सुहृद्भिर्भगवान्या याः स्युः सांपरायिकाः ॥२८॥ अक्रूरः कृतवर्मा च श्रुत्वा शतधनोर्वधम् ॥ व्यूषतुर्भयवित्रस्तौ द्वारकायाः प्रयोजकौ ॥२९॥ अक्रूरे प्रोषितेऽरिष्टान्यासन्व द्वारकौकसाम् ॥ शारीरा मानसास्तापा मुहुर्दैविकभौतिकाः ॥ ३० ॥ इत्यंगोपदिशंत्येके विस्मृत्य प्रागुदाहृतम् ॥ मुनिवासनिवासे किं घटेतारिष्टदर्शनम् ॥३१॥ देवेऽवर्षति काशीशः श्वफल्कायागताय वै ॥ स्वसुतां गांदिनीं प्रादात्ततोऽवर्षत्स्म काशिषु ॥३२॥ तत्सुतस्तत्प्रभावोऽसावक्रूरो यत्र यत्र ह ॥ देवोऽभिवर्षते तत्र नोपतापा न मारिकाः ॥ ३३ ॥ इति वृद्धवचः श्रुत्वा नैतावदिह कारणम् ॥ इति मत्वा समानाय्य प्राहाक्रूरं जनार्दनः ॥ ३४ ॥ पूजयित्वाऽभिभाष्यैनं कथयित्वा प्रियाः कथाः ॥ विज्ञाताखिलचित्तज्ञः स्मयमान उवाच ह ॥ ३५ ॥ ननु दानपते न्यस्तस्त्वय्यास्ते शतधन्वना ॥ स्यमंतको मणिः श्रीमान्विदितः पूर्वमेव नः ॥ ३६ ॥ सत्राजितोऽनपत्यत्वाद्गृह्णीयुर्दुहितुः सुताः ॥ दायं निनीयापः पिंडान्विमुच्यर्णं च शेषितम् ॥३७॥ तथाऽपि दुर्धरस्त्वन्यैस्त्वय्यास्तां

तदेवाह । मुनिवासनिवास इति । मुनीनां वासो यस्मिन्स श्रीकृष्णस्तस्य निवासे सत्यक्रूरापगममात्रेणारिष्टदर्शनं किं घटेत । तदिच्छां विना न घटेतेत्यर्थः ॥ ३१ ॥ पुनस्तन्मतमेवानुवर्णयति । देव इति । काशिषु देशेषु देवे मघवत्यवर्षति सति ॥३२॥ ३३ ॥ इत्येवंभूतमक्रूरमहिमप्रतिपादनपरं वृद्धानां वाक्यं श्रुत्वा सत्यमेवं तथाऽप्येतावदेव कारणं न भवति । किंतु मणेरप्यपगम इति मत्वेत्येतदंतं परमतम् ॥ ३४ ॥ विज्ञातमखिलं येन स चासावतएव चित्तज्ञश्च । अयं भावः । महाभागवतस्यास्य मया दत्तेऽपि मणावपेक्षा नास्त्येव यस्मादाहूतो मणिना सहैवागत इति ज्ञात्वेति ॥ ३५ ॥ ३६ ॥ ततः किमत आह । सत्राजित इति । अपः पिंडांश्च निनीय दत्वा ऋणं च विमुच्यापाकृत्य शेषितमवशिष्टं दायं दुहितुः सत्यभामायाः सुता गृह्णीयुरिति शास्त्रम् । तथा च स्मरंति ।

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ॥ तत्सुता गोत्रजा बंधुशिष्यसब्रह्मचारिण इति ॥ ३७ ॥ अग्रजोऽपि न प्रत्येति न विश्वमितीति ॥ ३८ ॥ नास्तीति न वक्तव्यम् । यतोऽव्युच्छिन्नाः संतता मखा वर्तंत इति ॥ ३९ ॥ आलब्ध उक्तो हृदि स्पृष्ट इति वा ॥ ४० ॥ रजो मिथ्याभिशापं संमृज्य । अन्यैर्दुर्धर इत्यादिमिषेण प्रीत्या भूयस्तस्मै प्रत्यर्पितवानिति ॥ ४१ ॥ दुष्कीर्तिं तन्मूलं दुरितं चेति ॥४२॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे टीकायां सप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ अष्टपंचाशत्तमे तु कृष्णः पंच करेऽग्रहीत् ॥ कालिंदीं मित्रविंदां च सत्यां भद्रां च लक्ष्मणाम् ॥१॥ कालिंदीं निजलाभाय तपः परमुपेयुषीम् ॥ परिणेष्यन्प्रियावासमिंद्रप्रस्थमथागमत् ॥ २ ॥ प्रतीतान्नष्टानपि द्रुपदगृहे पुनः सं दृष्टान् । युयुधानः सात्यकिः ॥ १ ॥ प्राणा इंद्रियाणि

सुव्रते मणिः ॥ किंतु मामग्रजः सम्यङ्न प्रत्येति मणिं प्रति ॥३८॥ दर्शयस्व महाभाग बंधूनां शांतिमावह॥ अव्युच्छिन्ना मखास्तेऽद्य वर्तन्ते रुक्मवेदयः ॥ ३९ ॥ एवं सामभिरालब्धः श्वफल्कतनयो मणिम् ॥ आदाय वाससा छन्नं ददौ सूर्यसमप्रभम् ॥ ४० ॥ स्यमंतकं दर्शयित्वा ज्ञातिभ्यो रज आत्मनः ॥ विमृज्य मणिना भूयस्तस्मै प्रत्यर्पयत्प्रभुः ॥ ४१ ॥ यस्त्वेतद्भगवत ईश्वरस्य विष्णोर्वीर्याढ्यं वृजिनहरं सुमंगलं च ॥ आख्यानं पठति शृणोत्यनुस्मरेद्वा दुष्कीर्तिं दुरितमपोह्य याति शांतिम् ॥४२॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे स्यमंतकोपाख्याने सप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ श्रीशुक उवाच ॥ एकदा पांडवान्द्रष्टुं प्रतीतान्पुरुषोत्तमः ॥ इन्द्रप्रस्थं गतः श्रीमान्युयुधानादिभिर्वृतः ॥१॥ दृष्ट्वा तमागतं पार्था मुकुंदमखिलेश्वरम् ॥ उत्तस्थुर्युगपद्वीराः प्राणा मुख्यमिवागतम् ॥ २ ॥ परिष्वज्याच्युतं वीरा अंगसंगहतैनसः ॥ सानुरागस्मितं वक्त्रं वीक्ष्य तस्य मुदं ययुः ॥ ३ ॥ युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवंदनम् ॥ फाल्गुनं परिरभ्याथ यमाभ्यां चाभिवंदितः ॥ ४ ॥ परमासन आसीनं कृष्णा कृष्णमनिंदिता ॥ नवोढा व्रीडिता किंचिच्छनैरेत्याभ्यवंदत ॥५॥ तथैव सात्यकिः पार्थैः पूजितश्चाभिवंदितः ॥ निषसादासनेऽन्ये च पूजिताः पर्युपासत ॥ ६ ॥ पृथां समागत्य कृताभिवादनस्तयाऽतिहार्दार्द्रदृशाऽभिरंभितः ॥ आपृष्टवांस्तां कुशलं सहस्नुषां पितृष्वसारं परिपृष्टबांधवः ॥ ७ ॥ तमाह प्रेमवैक्लव्यरुद्धकंठाऽश्रुलोचना ॥ स्मरंती तान्बहून्क्लेशान्क्लेशापायात्मदर्शनम् ॥ ८ ॥ तदैव कुशलं नोऽभूत्सनाथास्ते कृता वयम् ॥ ज्ञातीन्नः स्मरता कृष्ण भ्राता मे प्रेषितस्त्वया ॥ ९ ॥ न तेऽस्ति स्वपरभ्रांतिर्विश्वस्य सुहृदात्मनः ॥ तथापि स्मरतां शश्वत्क्लेशान्हंसि हृदि स्थितः ॥१०॥ युधिष्ठिर उवाच ॥ किं न आचरितं श्रेयो न वेदाहमधीश्वर ॥ योगेश्वराणां दुर्दर्शो यन्नो दृष्टः कुमेधसाम् ॥ ११ ॥ इति वै वार्षिकान्मासान्राज्ञा

मुख्यं पंचवृत्तिं प्राणमिव ॥२॥ ३ ॥ ज्येष्ठयोः प्रणामं कृत्वा समेनालिंगितः कनिष्ठाभ्यामभिवंदितो बभूव ॥ ४ ॥ कृष्णा द्रौपदी । बहुभार्या सत्यपि निंदारहिता । पार्थैर्नवमचिरमूढा परिणीता ॥ ५ ॥ ६ ॥ अतिहार्देन स्नेहेनार्द्रे सजले दृशौ यस्यास्तया परिष्वक्तः । तथा परिपृष्टा बांधवा यस्य सः ॥७॥ प्रेम्णा वैक्लव्यं तेन रुद्धः कंठो यस्याः । क्लेशापाये आत्मनि दर्शनं यस्य तम् । भजतां क्लेशापायाय आत्मानं दर्शयतीति वा ॥ ८ ॥ ज्ञातीन्बंधून्नोऽस्मान् यदा भ्राताऽक्रूरः प्रेषितः ॥९॥ ज्ञातीनिति वचनात्प्राप्तं मोहं वारयंती स्तौति । न तेऽस्तीति। तत्र हेतुः । विश्वस्येति।

सुहृच्च आत्मा च तस्य । हंसि नाशयसि ॥१०॥ कुमेधसां विषयासक्तचित्तानां दृष्टोऽसि ॥११॥ सुखमवसदिति शेषः । सुखमभ्यर्थित इति वा क्रियासमाप्तिः ॥१२॥ कालिंदीदर्शनप्रसंगमाह । एकदेति । अक्षयाः सायका ययोस्तौ तूणौ इषुधी ॥ १३ ॥ १४ ॥ १५ ॥ राज्ञे युधिष्ठिराय । मेध्यान्कर्मार्हान् । बीभत्सुरर्जुनः ॥ १६ ॥ १७ ॥ सख्या श्रीकृष्णेन ॥१८–२०॥ अयं मां कामयेदित्याशंकायामाह नान्यमिति ॥ २१ ॥ २२ ॥ आदावेव तद्विद्वान् ॥ २३ ॥ प्रसंगात्तत्कालीनं चरित्रांतरमाह । यदैवेति । पार्थैर्यदैव संदिष्टो विज्ञापितः श्रीकृष्णस्तदैव तेषां विश्वकर्मणा देव-

सोऽभ्यर्थितः सुखम् ॥ जनयन्नयनानंदमिंद्रप्रस्थौकसां विभुः ॥ १२ ॥ एकदा रथमारुह्य विजयो वानरध्वजम् ॥ गांडीवं धनुरादाय तूणौ चाक्षयसायकौ ॥ १३ ॥ साकं कृष्णेन सन्नद्धो विहर्तुं गहनं वनम् ॥ बहुव्यालमृगाकीर्णं प्राविशत्परवीरहा ॥ १४ ॥ तत्राविध्यच्छरैर्व्याघ्रान्सूकरान्महिषान्रुरून् ॥ शरभान्गवयान्खङ्गान्हरिणान् शशशल्लकान् ॥ १५ ॥ तान्निन्युः किंकरा राज्ञे मेध्यान्पर्वण्युपागते ॥ तृट्परीतः परिश्रांतो बीभत्सुर्यमुनामगात् ॥ १६ ॥ तत्रोपस्पृश्य विशदं पीत्वा वारि महारथौ ॥ कृष्णौ ददर्शतुः कन्यां चरंतीं चारुदर्शनाम् ॥ १७ ॥ तामासाद्य वरारोहां सुद्विजां रुचिराननाम् ॥ ॥ पप्रच्छ प्रेषितः सख्या फाल्गुनः प्रमदोत्तमाम् ॥१८॥ का त्वं कस्यासि सुश्रोणि कुतोऽसि किं चिकीर्षसि ॥ मन्ये त्वां पतिमिच्छंतीं सर्वं कथय शोभने ॥ १९ ॥ कालिंद्युवाच ॥ अहं देवस्य सवितुर्दुहिता पतिमिच्छती ॥ विष्णुं वरेण्यं वरदं तपः परममास्थिता ॥ २० ॥ नान्यं पतिं वृणे वीर तमृते श्रीनिकेतनम् ॥ तुष्यतां मे स भगवान्मुकुन्दोऽनाथसंश्रयः ॥२१॥ कालिंदीति समाख्याता वसामि यमुनाजले ॥ निर्मिते भवने पित्रा यावदच्युतदर्शनम् ॥ २२ ॥ तथाऽवदद्गुडाकेशो वासुदेवाय सोऽपि ताम् ॥ रथमारोप्य तद्विद्वान्धर्मराजमुपागमत् ॥ २३ ॥ यदैव कृष्णः संदिष्टः पार्थानां परमाद्भुतम् ॥ कारयामास नगरं विचित्रं विश्वकर्मणा ॥ २४ ॥ भगवांस्तत्र निवसन्स्वानां प्रियचिकीर्षया ॥ अग्नये खांडवं दातुमर्जुनस्यास सारथिः ॥ २५ ॥ सोऽग्निस्तुष्टो धनुरदाद्धयान् श्वेतान्रथं नृप ॥ अर्जुनायाक्षयौ तूणौ चर्म चाभेद्यमस्त्रिभिः ॥२६॥ मयश्च मोचितो वह्नेः सभां सख्या उपाहरत् ॥ यस्मिन्दुर्योधनस्यासीज्जलस्थलदृशिभ्रमः ॥ २७ ॥ स तेन समनुज्ञातः सुहृद्भिश्चानुमोदितः ॥ आययौ द्वारकां भूयः सात्यकिप्रमुखैर्वृतः ॥ २८ ॥ अथोपयेमे कालिंदीं सुपुण्यर्त्वृक्ष ऊर्जिते ॥ वितन्वन्परमानंदं स्वानां परममंगलम् ॥ २९ ॥ विंदानुविंदावावंत्यौ दुर्योधनवशानुगौ ॥ स्वयंवरे स्वभगिनीं कृष्णे सक्तां न्यषेधताम् ॥ ३० ॥ राजाधिदेव्यास्तनयां मित्रविंदां पितृष्वसुः ॥ प्रसह्य हृतवान्कृष्णो राजन्राज्ञां प्रपश्यताम् ॥ ३१ ॥ नग्नजिन्नाम कौशल्य आसीद्राजाऽतिधार्मिकः ॥ तस्य सत्याऽभवत्कन्या देवी नाग्नजिती नृप

शिल्पिना नगरं कारयामास ॥ २४ ॥ किंच । भगवान्निरतिशयैश्वर्यगुणवानप्यर्जुनस्य धनुरादिलाभाय सारथिरास । खांडवं नामेंद्रस्य वनम् ॥ २५ ॥ अक्षयावक्षयसायकौ ॥२६॥ खांडवदाहकाद्वह्नेः । सख्ये अर्जुनाय । यस्मिन्निति सामान्यतो निर्देशः । यस्यामित्यर्थः । जलस्थलयोर्दृशोर्दृष्टेर्भ्रमः । यद्वा । जले स्थलवत् दृक् दृष्टिर्यस्मिंस्तज्जलस्थलदृक् तस्मिन् भ्रम आसीदिति ॥२७॥२८॥

सुपुण्यश्च्रतुः ऋक्षं च यस्मिन् ॥२९॥ पंचमं मित्रविंदाविवाहमाहुः । विंदानुविंदाविति द्वाभ्याम् । आवंत्यावर्वंत्यराजानौ ॥३०॥३१॥ षष्ठमाह । नग्नजिदिति । कौशल्योऽयोध्यापतिस्तस्य सत्या नाम कन्याऽभवदासीत् । देवी कांतिमती । नाग्नजितीति पितृनाम्ना प्रसिद्धेत्यर्थः ॥३२॥ वीरस्य गंधमपि न सहंति इति तथा तान् । खलान् दुर्वृत्तान् ॥३३॥ वृषान् जयति यस्तेन लभ्याम् ॥३४॥ प्रतिनंदितरतं प्रतिनंदितवान् । श्रीकृष्णेन वा स प्रतिनंदितः ॥ ३५–३९ ॥ हे नरेंद्र! राजन्यबंधोः क्षत्रियस्य । शुल्कदा द्रव्यादिप्रदाः ॥४०॥ गुणानामेकमेव धाम स्थानं तथाभूतस्य

॥ ३२ ॥ न तां शेकुर्नृपा वोढुमजित्वा सप्त गोवृषान् ॥ तीक्ष्णशृङ्गान्सुदुर्धर्षान्वीरगंधासहान्खलान् ॥ ३३ ॥ तां श्रुत्वा वृषजिल्लभ्यां भगवान्सात्वतां पतिः ॥ जगाम कौशल्यपुरं सैन्येन महता वृतः ॥ ३४ ॥ स कोशलपतिः प्रीतः प्रत्युत्थानासनादिभिः ॥ अर्हणेनापि गुरुणा पूजयन्प्रतिनंदितः ॥ ३५ ॥ वरं विलोक्याभिमतं समागतं नरेंद्रकन्या चकमे रमापतिम् ॥ भूयादयं मे पतिराशिषोऽमलाः करोतु सत्या यदि मे धृतो व्रतैः ॥ ३६ ॥ यत्पादपंकजरजः शिरसा बिभर्ति श्रीरब्जजः सगिरिशः सहलोकपालैः ॥ लीलातनूः स्वकृतसेतुपरीप्सयेशः काले दधत्स भगवान्मम केन तुष्येत् ॥ ३७ ॥ अर्चितं पुनरित्याह नारायण जगत्पते ॥ आत्मानंदेन पूर्णस्य करवाणि किमल्पकः ॥ ३८ ॥ श्रीशुक उवाच ॥ तमाह भगवान् हृष्टः कृतासनपरिग्रहः ॥ मेघगंभीरया वाचा सस्मितं कुरुनंदन ॥ ३९ ॥ श्रीभगवानुवाच ॥ नरेंद्र याच्ञा कविभिर्विगर्हिता राजन्यबंधोर्निजधर्मवर्तिनः ॥ तथापि याचे तव सौहृदेच्छया कन्यां त्वदीयां न हि शुल्कदा वयम् ॥ ४० ॥ राजोवाच ॥ कोऽन्यस्तेऽभ्यधिको नाथ कन्यावर इहेप्सितः ॥ गुणैकधाम्नो यस्यांगे श्रीर्वसत्यनपायिनी ॥ ४१ ॥ किं त्वस्माभिः कृतः पूर्वं समयः सात्वतर्षभ ॥ पुंसां वीर्यपरीक्षार्थं कन्यावरपरीप्सया ॥४२॥ सप्तैते गोवृषा वीर दुर्दांता दुरवग्रहाः ॥ एतैर्भग्नाः सुबहवो भिन्नगात्रा नृपात्मजाः ॥ ४३ ॥ यदि मे निगृहीताः स्युस्त्वयैव यदुनंदन ॥ वरो भवानभिमतो दुहितुर्मे श्रियः पते ॥ ४४ ॥ एवं समयमाकर्ण्य बद्ध्वा परिकरं प्रभुः ॥ आत्मानं सप्तधा कृत्वा न्यगृह्णाल्लीलयैव तान् ॥ ४५ ॥ बद्ध्वा तान्दामभिः शौरिर्भग्नदर्पान्हतौजसः ॥ व्यकर्षल्लीलया बद्धान्बालो दारुमयान्यथा ॥ ४६ ॥ ततः प्रीतः सुतां राजा ददौ कृष्णाय विस्मितः ॥ तां प्रत्यगृह्णाद्भगवान्विधिवत्सदृशीं प्रभुः ॥ ४७ ॥ राजपत्न्यश्च दुहितुः कृष्णं लब्ध्वा प्रियं पतिम् ॥ लेभिरे परमानंदं जातश्च परमोत्सवः ॥ ४८ ॥ शंखभेर्यानका नेदुर्गीतवाद्यद्विजाशिषः ॥ नरा नार्यः प्रमुदिताः सुवासःस्रगलंकृताः ॥ ४९ ॥ दशधेनुसहस्राणि पारिबर्हमदाद्विभुः ॥ युवतीनां त्रिसाहस्रं निष्कग्रीवसुवाससाम् ॥ ५० ॥ नव नागसहस्राणि नागाच्छतगुणान्रथान् ॥ रथाच्छतगुणानश्वानश्वाच्छतगुणान्नरान् ॥ ५१ ॥ दंपती

यस्य तवांगे ॥४१॥४२॥ दुर्दांता अशिक्षिताः । दुरवग्रहा अपरायत्ताः । कुतस्तदाह । एतैरिति । भग्ना भंगं प्रापिताः ॥ ४३ ॥ यद्यदामे गोवृषा निगृहीता दमिता नाथिता इति यावत् ॥४४॥ एतान्यो निगृह्णाति तस्य कन्येति समयः कृतस्तम् । सप्तधा कृत्वेति बह्वीनां योषितां संपूर्ण एवाहं संभोगयोग्यः स्यामिति सत्यां प्रत्यसापत्न्यप्रदर्शनार्थमात्मनः सप्तधाकरणम् ॥ ४५–४९ ॥

निष्कग्रीवाश्च ताः सुवाससश्च तासां युवतीनां च दासीनाम् ॥५०॥ नागान्नागेभ्यः शतगुणान्नव लक्षाणि। रथाद्रथेभ्यः शतगुणान्नव कोटीः। अश्वादश्वेभ्यः शतगुणान्नव पद्मानि ॥५१॥५२॥ यदुभिर्गोवृषैश्च भग्नवीर्या अपि सुदुर्मर्षा असहनशीला रुरुधुः ॥५३॥ अस्यतः क्षिपतः प्रयुंजानानिति यावत् ॥ ५४ ॥ ५५ ॥ सप्तमं विवाहमाह। श्रुतिकीर्तिर्नाम या पितृष्वसा तस्याः सुतां भद्रां नाम कैकेयीं तद्देशजाम् ॥५६॥ अष्टमं विवाहमाह। सुतां चेति। एक एव स श्रीकृष्णो लक्ष्मणां जहार ॥५७॥ तस्य निरोधोऽन्तःपुरं तस्मात् ॥५८॥ भैष्मी जांबवती भामा सत्या भद्रा च लक्ष्मणा ॥ कालिंदी मित्रविंदा चेत्यष्टौ पट्टमहास्त्रियः ॥१॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे टीकायामष्टपञ्चाशत्तमोऽध्यायः ॥५८॥ ऊनषष्टितमे भौमं हत्वा तेनाहृता हरिः ॥ कन्याः सहस्रशः प्राप पारिजातं दिवोऽहरत् ॥१॥ परिणीय ततस्ताभिस्तन्मनोरथपूरणैः ॥ आत्मारामोऽप्यसौ रेमे तद्गृहेषु गृहस्थवत् ॥२॥ येन ताः स्त्रियो निरुद्धाः स भौमः। चकाराद्येन कारणेन

रथमारोप्य महत्या सेनया वृतौ ॥ स्नेहप्रक्लिन्नहृदयो यापयामास कोशलः ॥ ५२ ॥ श्रुत्वैतद्रुरुधुर्भूपा नयंतं पथि कन्यकाम् ॥ भग्नवीर्याः सुदुर्मर्षा यदुभिर्गोवृषैः पुरा ॥ ५३ ॥ तानस्यतः शरव्रातान्बंधुप्रियकृदर्जुनः ॥ गांडीवी कालयामास सिंहः क्षुद्रमृगानिव ॥ ५४ ॥ पारिबर्हमुपागृह्य द्वारकामेत्य सत्यया ॥ रेमे यदूनामृषभो भगवान्देवकीसुतः ॥५५॥ श्रुतकीर्तेः सुतां भद्रामुपयेमे पितृष्वसुः ॥ कैकेयीं भ्रातृभिर्दत्तां कृष्णः संतर्दनादिभिः ॥ ५६ ॥ सुतां च मद्राधिपतेर्लक्ष्मणां लक्षणैर्युताम् ॥ स्वयंवरे जहारैकः स सुपर्णः सुधामिव ॥ ५७ ॥ अन्याश्चैवंविधा भार्याः कृष्णस्यासन्सहस्रशः ॥ भौमं हत्वा तन्निरोधादाहृताश्चारुदर्शनाः ॥ ५८ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे अष्टमहिष्युद्वाहो नामाष्टपंचाशत्तमोऽध्यायः ॥५८॥ राजोवाच ॥ यथा हतो भगवता भौमो येन च ताः स्त्रियः ॥ निरुद्धा एतदाचक्ष्व विक्रमं शार्ङ्गधन्वनः ॥ १ ॥ श्रीशुक उवाच ॥ इन्द्रेण हृतछत्रेण हृतकुण्डलबंधुना ॥ हृतामराद्रिस्थानेन ज्ञापितो भौमचेष्टितम् ॥ सभार्यो गरुडारूढः प्राग्ज्योतिषपुरं ययौ ॥२॥ गिरिदुर्गैः शस्त्रदुर्गैर्जलाग्न्यनिलदुर्गमम् ॥ मुरपाशायुतैर्घोरैर्दृढैः सर्वत आवृतम् ॥ ३ ॥ गदया निर्बिभेदाद्रीन् शस्त्रदुर्गाणि सायकैः ॥ चक्रेणाग्निं जलं वायुं मुरपाशांस्तथाऽसिना ॥ ४ ॥ शंखनादेन यंत्राणि हृदयानि मनस्विनाम् ॥ प्राकारं गदया गुर्व्या निर्बिभेद गदाधरः ॥ ५ ॥ पाञ्चजन्यध्वनिं श्रुत्वा युगांताशनिभीषणम् ॥ मुरः शयान उत्तस्थौ दैत्यः पंचशिरा जलात् ॥ ६ ॥ त्रिशूलमुद्यम्य सुदुर्निरीक्षणो युगान्तसूर्यानलरोचिरुल्बणः ॥

हृतस्तदाचक्ष्वेति ॥ १ ॥ इन्द्रेण भौमविचेष्टितं ज्ञापितं सन्प्राग्ज्योतिषपुरं भौमनगरं ययावित्यन्वयः। किंभूतेन। हृतं छत्रं यस्य तेन। लोकपालप्रधानत्वादिंद्रस्य वरुणच्छत्रहरणेऽपि तस्यैव मानभंग इति। तथोक्तम्। हृते कुंडले यस्याः सा अदितिर्बंधुर्माता यस्य तेन। हृतममराद्रौ स्थानं मणिपर्वतलक्षणं यस्य तेन। सत्यभामाया गृहे भगवंतमिंद्र आगत्य विज्ञापितवांस्तदा तस्याः कौतुकाय तया भार्यया सह ययाविति। यद्वा। त्वदनुज्ञयैव त्वत्पुत्रं हनिष्यामीति इतिहासोक्तं भूम्यै वरं दत्तं सत्यं कर्तुं सत्यभामाया भूम्यंशत्वात्तया सह ययौ। यद्वा। नारदानीतपारिजातैककुसुमे रुक्मिण्यै दत्ते सति कुपितां सत्यभामां सांत्वयता तुभ्यं पारिजातमेव दास्यामीति श्रीकृष्णेन प्रतिश्रुतमिति हरिवंशे प्रसिद्धं तदर्थं तां नीतवानिति ॥ २ ॥ गरुडेन याने कारणम्। गिरिदुर्गैरित्यादि। वैरुपलक्षितम्। जलाग्न्यनिलैश्च सर्वतो वर्तमानैर्दुर्गमम् ॥ ३ ॥ ४ ॥ ५ ॥ युगांताशनेर्ध्वनिवद्भीषणम्। परिखाया जलात् ॥ ६ ॥७॥ आविध्य आतोल्य। स महाग्नाद

इत्यन्वयः ॥ ८ ॥ तस्मै श्रीकृष्णाय गदां व्यमुंचत व्यक्षिपत् ॥ ९ ॥ १० ॥ इंद्रतेजसा वज्रेण । प्रतिक्रियया हेतुभूतया अमर्षजुषः ॥ ११ ॥ पीठं पीठनामानम् । निरगन्निरगमन् ॥ १२ ॥ १३ ॥ कृत्तानि शीर्षादीनि येषां तान् ॥१४॥ शतघ्नीं शक्तिविशेषाम् ॥१५॥ विचित्रा वाजाः पत्राणि येषां तैर्बाणैर्निकृत्ता बाहव ऊरवः कंधरा विग्रहा देहाश्च यस्मिंस्तत्। तत्रैव तं यदा विव्यधुस्त-

ग्रसंस्त्रिलोकीमिव पञ्चभिर्मुखैरभ्यद्रवत्तार्क्ष्यसुतं यथोरगः ॥ ७ ॥ आविध्य शूलं तरसा गरुत्मते निरस्य वक्त्रैर्व्यनदत्स पंचभिः ॥ सरोदसीसर्वदिशोऽम्बरं महानापूरयन्नंडकटाहमावृणोत् ॥ ८ ॥ तदाऽपतद्वै त्रिशिखं गरुत्मते हरिः शराभ्यामभिनत्त्रिधोजसा ॥ मुखेषु तं चापि शरैरताडयत्तस्मै गदां सोऽपि रुषा व्यमुञ्चत ॥ ९ ॥ तामापतंतीं गदया गदां मृधे गदाग्रजो निर्बिभिदे सहस्रधा ॥ उद्यम्य बाहूनभिधावतोऽजितः शिरांसि चक्रेण जहार लीलया ॥ १० ॥ व्यसुः पपातांभसि कृत्तशीर्षो निकृत्तशृंगोऽद्रिरिवेंद्रतेजसा ॥ तस्यात्मजाः सप्त पितुर्वधातुराः प्रतिक्रियामर्षजुषः समुद्यताः ॥ ११ ॥ ताम्रोऽन्तरिक्षः श्रवणो विभावसुर्वसुर्नभस्वानरुणश्च सप्तमः ॥ पीठं पुरस्कृत्य चमूपतिं मृधे भौमप्रयुक्ता निरगन्धृतायुधाः ॥ १२ ॥ प्रायुंजतासाद्य शरानसीन्गदाः शक्त्यृष्टिशूलान्यजिते रुषोल्बणाः ॥ तच्छस्त्रकूटं भगवान्स्वमार्गणैरमोघवीर्यस्तिलशश्चकर्त ह ॥ १३ ॥ तान्पीठमुख्यान-नयद्यमालयं निकृत्तशीर्षोरुभुजांघ्रिवर्मणः ॥ स्वानीकपानच्युतचक्रसायकैस्तथा निरस्तान्नरको धरासुतः ॥ १४ ॥ निरीक्ष्य दुर्मर्षण आस्रवन्मदैर्गजैः पयोधिप्रभवैर्निराक्रमत् ॥ दृष्ट्वा सभार्यं गरुडोपरि स्थितं सूर्योपरिष्टात्सतडिद्घनं यथा ॥ कृष्णं स तस्मै व्यसृजच्छतघ्नीं योधाश्च सर्वे युगपत्स्म वि-व्यधुः ॥ १५ ॥ तद्भौमसैन्यं भगवान्गदाग्रजो विचित्रवाजैर्निशितैः शिलीमुखैः ॥ निकृत्तबाहूरुशिरोध्रविग्रहं चकार तत्रैव हताश्वकुंजरम् ॥ १६ ॥ यानि योधैः प्रयुक्तानि शस्त्रास्त्राणि कुरूद्वह ॥ हरिस्तान्यच्छिनत्तीक्ष्णैः शरैरेकैकशस्त्रिभिः ॥ १७ ॥ उह्यमानः सुपर्णेन पक्षाभ्यां निघ्नता गजान् ॥ गरुत्मता हन्यमानास्तुंडपक्षनखैर्गजाः ॥ १८ ॥ पुरमेवाविशन्नार्ता नरको युध्ययुध्यत ॥ दृष्ट्वा विद्रावितं सैन्यं गरुडेनार्दितं स्वकम् ॥ १९ ॥ तं भौमः प्राहरच्छक्त्या वज्रः प्रतिहतो यतः ॥ नाकंपत तया विद्धो मालाहत इव द्विपः ॥ २० ॥ शूलं भौमोऽच्युतं हंतुमाददे वितथोद्यमः ॥ तद्वि-सर्गात्पूर्वमेव नरकस्य शिरो हरिः ॥ अपाहरद्गजस्थस्य चक्रेण क्षुरनेमिना ॥ २१ ॥ सकुंडलं चारुकिरीटभूषणं बभौ पृथिव्यां पतितं समुज्ज्वलत् ॥ हाहेति साध्वित्यृषयः सुरेश्वरा माल्यैर्मुकुंदं विकिरंत ईडिरे ॥ २२ ॥ ततश्च भूः कृष्णमुपेत्य कुंडले प्रतप्तजांबूनदरत्नभास्वरे ॥ सवैजयंत्या वन-मालयाऽर्पयत्प्रचेतसं छत्रमथो महामणिम् ॥ २३ ॥ अस्तौषीदथ विश्वेशं देवी देववरार्चितम् ॥ प्रांजलिः प्रणता राजन्भक्तिप्रवणया धिया ॥ २४ ॥

स्मिन्नेव क्षणे ॥१६॥ अत्याश्चर्ये कुरूद्वहेति संबोधनम् । तथा हि । तैर्यानि प्रयुक्तानि शस्त्रास्त्राणि तत्प्राप्तेः पूर्वमेव तत्सर्वं सैन्यं हत्वा पश्चात्तानि शस्त्राण्यस्त्राणि च चिच्छेद। तत्राप्येकैकं शस्त्रमस्त्रं च त्रिभिः शरैरित्याश्चर्यम् ॥१७॥ किंच गरुत्मतेति ॥ १८ ॥ १९ ॥ यतो यया शक्त्या वज्रः प्रतिहत आस गरुडस्तु नाकंपत ॥२०॥ गरुडे वितथोद्यमः सन् शूलं त्रिशूलमाददे धृतवान्

॥२१॥२२॥ प्रतप्ते जांबूनदे यानि रत्नानि तैर्भास्वरे । मेर्वंशभूतं मंदरशिखरं महामणिं चार्पयदिति ॥ २३ ॥ २४ ॥ ऐश्वर्यं ज्ञात्वा भूमिः स्तौति । नमस्त इति । हे परमात्मन् देवाद्यंतर्यामिन् ॥२५॥ येन मंत्रेण कुन्त्याः प्रसन्नः पूर्वमासीत्तेन मंत्रेण नमस्यति । नम इति । पंकजं नाभौ यस्य तस्मै । जगत्कारणायेत्यर्थः । अतएव सत्कीर्तिमयी पंकजमाला विद्यते यस्य तस्मै । एवंभूतं ध्यायतां पंकजवत्सुप्रसन्ने तापोपशमने नेत्रे यस्य तस्मै । पंकजवत्सुसेव्यौ पंकजांकितौ वांघ्री यस्य तस्मै नम इति ॥ २६ ॥ किंच भगवते निरतिशयैश्वर्याय वासुदेवाय सर्वभूताश्रयायात एव विष्णवे व्यापिने । नहि सर्वभूताश्रयत्वं परिच्छिन्नस्य संभवतीति कुतः सर्वाश्रयत्वं तत्राह । पुरुषाय सर्वस्मात्कार्यात्पूर्वमेव सते पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वमिति श्रुतेः । एतदपि कुतः । आदिबीजाय आदेर्जगत्कारणस्यापि कारणाय । एवमपि न मृदादिवज्जाड्यमित्याह । पूर्णबोधायेति ॥२७॥ नन्वेवमपि स्वस्य कारणात्पूर्वं सत्त्वं न स्यादत आह । अजायेति । स्वयमजाय अस्य च जगतो जनयित्रे । उभयत्रापि क्रमेण हेतुद्वयम् । ब्रह्मणे बृहते अनंतशक्तये इति च । बृहत्त्वादजत्वमनंतशक्तित्वात्तज्जनयितृत्वमित्यर्थः । ननु पित्रादयः पुत्रादीनां जनकास्तेषां

भूमिरुवाच ॥ नमस्ते देवदेवेश शंखचक्रगदाधर ॥ भक्तेच्छोपात्तरूपाय परमात्मन्नमोऽस्तु ते ॥२५॥ नमः पंकजनाभाय नमः पंकजमालिने ॥ नमः पंकजनेत्राय नमस्ते पंकजांघ्रये ॥ २६ ॥ नमो भगवते तुभ्यं वासुदेवाय विष्णवे ॥ पुरुषायादिबीजाय पूर्णबोधाय ते नमः ॥ २७ ॥ अजाय जनयित्रेऽस्य ब्रह्मणेऽनंतशक्तये ॥ परवरात्मन्भूतात्मन्परमात्मन्नमोऽस्तु ते ॥ २८ ॥ त्वं वै सिसृक्षू रज उत्कटं प्रभो तमो निरोधाय बिभर्ष्यसंवृतः ॥ स्थानाय सत्त्वं जगतो जगत्पते कालः प्रधानं पुरुषो भवान्परः ॥ २९ ॥ अहं पयो ज्योतिरथानिलो नभो मात्राणि देवा मन इन्द्रियाणि ॥ कर्ता महानित्यखिलं चराचरं त्वय्यद्वितीये भगवन्नयं भ्रमः ॥ ३० ॥ तस्यात्मजोऽयं तव पादपंकजं भीतः प्रपन्नार्तिहरोपसादितः ॥ तत्पालयैनं कुरु हस्तपंकजं शिरस्यमुष्याखिलकल्मषापहम् ॥३१॥ श्रीशुक उवाच ॥ इति भूम्याऽर्थितो वाग्भिर्भगवान्भक्तिनम्रया ॥ दत्त्वाऽभयं भौमगृहं प्राविशत्सकलर्द्धिमत् ॥३२॥ तत्र राजन्यकन्यानां षट्सहस्राधिकायुतम् ॥ भौमाहृतानां विक्रम्य राजभ्यो ददृशे हरिः ॥ ३३ ॥ तं प्रविष्टं स्त्रियो वीक्ष्य नरवीरं विमोहिताः ॥ मनसा वव्रिरेऽभीष्टं पतिं दैवोपसादितम् ॥३४॥ भूयात्पतिरयं मह्यं धाता तदनुमोदताम् ॥ इति सर्वाः पृथक्कृष्णे भावेन हृदयं दधुः

च तत्पूर्वं तेषां च भूतानि तेषां च स्वकर्मद्वारेण जीवाः किमत्राहं तत्राह । परावरात्मन्नित्यादि । पुत्राद्यात्मकत्वात्त्वमेव जनक इत्यर्थः ॥२८॥ ननु गुणा विश्वोत्पत्त्यादिहेतवस्ते च प्रधानस्यैव तस्य च पुरुषः क्षोभकस्तत्र च कालो निमित्तमिति प्रसिद्धं किमत्राहं तत्राह । त्वं वा इति तमसो धारणेऽप्यसंवृत एव । स्थानाय पालनाय । जगतः सृष्ट्याद्यर्थमुत्कटं रज आदित्वमेव बिभर्षि सृजसीत्यर्थः । कालप्रधानपुरुषाश्च त्वद्व्यतिरिक्ता न संति । त्वं तु परः सर्वव्यतिरिक्तः । अतस्त्वमेव जनयितेत्यर्थः ॥२९॥ कार्यकारणप्रपञ्चस्य तदव्यतिरेकं तस्य च सर्वव्यतिरेकमुपपादयति । अहमिति । अहं भूमिः । मात्राणीति देवा मन इन्द्रियाणीति च त्रिविधाहंकारकार्याणि । कर्ताऽहंकारः ॥३०॥ एवं स्तुत्वा प्रार्थयते । तस्येति । हे प्रपन्नार्तिहर । यस्य नरकस्य । अयं भगदत्तो नाम भीतोऽतएव मया तव पादपंकजमुपसादितः ॥३१॥ अभयं दत्त्वा ॥३२॥ शताधिकमित्यपि ज्ञातव्यम् । यथाह श्रीपराशरः । कन्यापुरे सकन्यानां षोडशातुलविक्रमः ॥ शताधिकानि ददृशे सहस्राणि महामते इति । राजभ्य इत्युपलक्षणं सिद्धादिभ्यश्चेति । तथा च तेनैवोक्तम् । देवसिद्धासुरादीनां नृपाणां च जनार्दन ॥ हृत्वा हि सोऽसुरः कन्या रुरोध निजमंदिर इति ॥३३॥३४॥

॥३५॥ प्राहिणोत् प्रस्थापयामास । सुमृष्टाः कमनीयाश्च ता विरजोऽम्बराश्च ताः । नरयानैः शिबिकाभिः । अपि च महाकोशानिति ॥३६॥३७॥ सप्रियः सत्यभामासहितः ॥३८॥३९॥ गृहोद्यानं निष्कुटं तदुपशोभयति यः ॥४०॥ सेंद्रान्विबुधान्निर्जित्येतींद्रकृष्णयोः संग्राम उक्तस्तत्र ननु कथं प्रसाधितस्वमनोरथेन श्रीकृष्णेन महेन्द्रस्य संग्राम इत्याह । ययाच इति । अच्युतमर्थसाधनमिति च कर्मद्वयं याचतिधातोः । विगृह्यते विग्रहं करोति महानपि तमः क्रोधः । आढ्यतां धनिकतां धिगिति ॥४१॥ यथा यथावत् । अनेन देवक्यादिबंधुजनसमागमोऽपि प्रतिगृहं यौगपद्येन सूचितः । अव्ययः सर्वत्रापि संपूर्ण एव ॥४२॥ अहो भाग्यं नारीणामित्याह त्रिभिः । गृहेष्विति । अतर्क्याणि कर्माणि करोति तथा सः । निरस्तं साम्यमतिशयश्च यैरन्यैर्षां तेषु गृहेष्वनपाय्यनवस्थितः । रमाभिर्लक्ष्म्या अंशभूताभिः । निजकामसंप्लुतः स्वानंदपरिपूर्णः । गार्हकमेधिकान् गृहस्थधर्मान् ॥४३॥ अनुरागहाससहितमवलोकं च तत्पूर्वकं नवसङ्गमं च तद्गतं

॥३५॥ ताः प्राहिणोद्द्वारवतीं सुमृष्टविरजोऽम्बराः ॥ नरयानैर्महाकोशान्रथाश्वान्द्रविणं महत् ॥३६॥ ऐरावतकुलेभांश्च चतुर्दन्तांस्तरस्विनः ॥ पांडुरांश्च चतुःषष्टिं प्रेषयामास केशवः ॥३७॥ गत्वा सुरेन्द्रभवनं दत्त्वाऽदित्यै च कुंडले ॥ पूजितस्त्रिदशेंद्रेण सहेन्द्राण्या च सप्रियः ॥ ३८ ॥ चोदितो भार्ययोत्पाट्य पारिजातं गरुत्मति ॥ आरोप्य सेंद्रान्विबुधान्निर्जित्योपानयत्पुरम् ॥३९॥ स्थापितः सत्यभामाया गृहोद्यानोपशोभनः ॥ अन्वगुर्भ्रमराः स्वर्गात्तद्गन्धासवलंपटाः ॥४०॥ ययाच आनम्य किरीटकोटिभिः पादौ स्पृशन्नच्युतमर्थसाधनम् ॥ सिद्धार्थ एतेन विगृह्यते महानहो सुराणां च तमो धिगाढ्यताम् ॥ ४१ ॥ अथो मुहूर्त एकस्मिन्नानागारेषु च ताः स्त्रियः ॥ यथोपयेमे भगवांस्तावद्रूपधरोऽव्ययः ॥४२॥ गृहेषु तासामनपाय्यतर्क्यकृन्निरस्तसाम्यातिशयेष्ववस्थितः ॥ रेमे रमाभिर्निजकामसंप्लुतो यथेतरो गार्हकमेधिकांश्चरन् ॥ ४३ ॥ इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता ब्रह्मादयोऽपि न विदुः पदवीं यदीयाम् ॥ भेजुर्मुदाऽविरतमेधितयाऽनुरागहासावलोकनवसङ्गमजल्पलज्जाः ॥ ४४ ॥ प्रत्युद्गमासनवरार्हणपादशौचतांबूलविश्रमणबीजनगंधमाल्यैः ॥ केशप्रसारशयनस्नपनोपहार्यैर्दासीशता अपि विभोर्विदधुः स्म दास्यम् ॥ ४५ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे पारिजातहरणनरकवधो नाम एकोनषष्टितमोऽध्यायः ॥ ५९ ॥ श्रीशुक उवाच ॥ कर्हिचित्सुखमासीनं स्वतल्पस्थं जगद्गुरुम् ॥ पतिं पर्यचरद्भैष्मी व्यजनेन सखीजनैः ॥ १ ॥ यस्त्वेतल्लीलया विश्वं सृजत्यत्त्यवतीश्वरः ॥ स हि जातः स्वसेतूनां गोपीथाय यदुष्वजः ॥ २ ॥ तस्मिन्नंतर्गृहे भ्राजन्मुक्तादामविलम्बिना ॥ विराजिते वितानेन दीपैर्मणिमयैरपि ॥ ३ ॥ मल्लिकादामभिः पुष्पैर्द्विरेफकुलनादिते ॥ जालरं-

जल्पं च तस्मिन् लज्जां च भेजुः ॥४४॥ विश्रमणं पादसंवाहनम् । केशप्रसारः केशप्रसाधनम् । दासीनां शतानि विद्यन्ते यासां तथाभूता अपि स्वयं विभोर्दास्यं विदधुः ॥४५॥ इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे टीकायामेकोनषष्टितमोऽध्यायः ॥५९॥ अथ षष्टितमे कृष्णः परिहासेन रुक्मिणीम् ॥ कोपयित्वा ततः प्रेमकलहे तामसांत्वयत् ॥१॥ रामारामजनानंदमहोदयविडंबनैः ॥ रुक्मिण्या प्रेमकलहच्छद्मनैश्वर्यमीर्यते ॥२॥ स्वतल्पस्थं स्वपर्यंकस्थम् ॥१॥ वक्ष्यमाणं रुक्मिण्याः श्रीकृष्णे परमप्रेम संभावयितुं तस्योक्तमेव तत्त्वमनुस्मारयति। यस्त्विति ॥२॥ आदौ तावत्त्रिभिः श्लोकैर्मंदिरमनुवर्णयति । तस्मिन्निति । तच्छब्देनातिप्रसिद्धमाह । भ्राजंति मुक्तादामानि तेषां विलंबाः संति यस्मिंस्तेन वितानेन विराजिते । तृतीयांतानां विराजितपदेनान्वयः ॥३॥ सुगं-

धितया द्विरेफकुलैर्नादिते । प्रविशद्भिश्चंद्ररश्मिभिः ॥४॥ निर्गच्छद्भिरगुरुसंभवैर्धूपैश्चातिमनोहरत्वं दर्शितम् ॥५॥ पयसः क्षीरस्य फेन इव मृदुनि पर्यंकस्थे कशिपूत्तमे हंसतूलिकायाम् । उपतस्थे असेवत ॥ ६ ॥ तदेवाभिनयति । बालव्यजनमिति ॥७॥ उपाच्युतस्य समीपे सा मणिनूपुराभ्यां रेमे । क्वणयती मणिमयौ नूपुरौ कूजयंती तथा अंगुलीयवलयव्यजनान्यग्रहस्ते हस्ताग्रे यस्याः सा । वस्त्रांतेन गूढौ स्थगितौ कुचौ तयोः कुंकुमं तेन शोणो हारस्तस्य भासा तथा नितंबे धृता या परार्ध्या अमूल्या कांची तया च रेजे ॥८॥ तां निरीक्ष्य प्रीतः सन्स्मयमानो हरिराबभाषे । कथंभूताम् । या लीलया धृतनरतनोस्तस्यानुरूपरूपा अनुरूपं रूपं यस्यास्ताम् । यथोक्तं श्रीपराशरेण । देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी ॥ विष्णोर्देहानुरूपा वै करोत्येषाऽऽत्मनस्तनुमिति । किंचालकैः कुंडलाभ्यां निष्केण पदकेनालंकृतकंठेन च चतुर्दिक्षु शोभिते वक्त्रे उल्लसंती स्मितसुधा यस्यास्ताम् ॥९॥ सर्वगुणयुक्ताऽपि तव बुद्धिर्मंदेत्याशयेनाह । राजपुत्रीत्याद्येकादशभिः । हे

ध्रप्रविष्टैश्च गोभिश्चंद्रमसोऽमलैः ॥ ४ ॥ पारिजातवनामोदवायुनोद्यानशालिना ॥ धूपैरगुरुजै राजन् जालरंध्रविनिर्गतैः ॥ ५ ॥ पयःफेननिभे शुभ्रे पर्यंके कशिपूत्तमे ॥ उपतस्थे सुखासीनं जगतामीश्वरं पतिम् ॥६॥ वालव्यजनमादाय रत्नदंडं सखीकरात् ॥ तेन वीजयती देवी उपासांचक्र ईश्वरम् ॥७॥ सोपाच्युतं क्वणयती मणिनूपुराभ्यां रेजेऽङ्गुलीयवलयव्यजनाग्रहस्ता ॥ वस्त्रांतगूढकुचकुंकुमशोणहारभासा नितंबधृतया च परार्ध्यकांच्या ॥८॥ तां रूपिणीं श्रियमनन्यगतिं निरीक्ष्य या लीलया धृततनोरनुरूपरूपा ॥ प्रीतः स्मयन्नलककुंडलनिष्ककंठवक्त्रोल्लसत्स्मितसुधा हरिराबभाषे ॥ ९ ॥ श्रीभगवानुवाच ॥ राजपुत्रीप्सिता भूपैर्लोकपालविभूतिभिः ॥ महानुभावैः श्रीमद्भी रूपौदार्यबलोर्जितैः ॥ १० ॥ तान्प्राप्तानर्थिनो हित्वा चैद्यादीन्स्मरदुर्मदान् ॥ दत्ता भ्रात्रा स्वपित्रा च कस्मान्नो ववृषेऽसमान् ॥ ११ ॥ राजभ्यो बिभ्यतः सुभ्रूः समुद्रं शरणंगतान् ॥ बलवद्भिः कृतद्वेषान्प्रायस्त्यक्तनृपासनान् ॥ १२ ॥ अस्पष्टवर्त्मनां पुंसामलोकपथमीयुषाम् ॥ आस्थिताः पदवीं सुभ्रूः प्रायः सीदंति योषितः ॥ १३ ॥ निष्किंचना वयं शश्वन्निष्किंचनजनप्रियाः ॥ तस्मात्प्रायेण न ह्याढ्या मां भजंति सुमध्यमे ॥१४॥ ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवः ॥ तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् ॥ १५ ॥ वैदर्भ्येतदविज्ञाय त्वयाऽदीर्घसमीक्षया ॥ वृता वयं गुणैर्हीना भिक्षुभिः श्लाघिता मुधा ॥ १६ ॥ अथात्मनोऽनुरूपं वै भजस्व क्षत्रियर्षभम् ॥ येन त्वमाशिषः सत्या इहामुत्र च लप्स्यसे ॥ १७ ॥ चैद्यशाल्वजरासंधदन्तवक्रादयो नृपाः ॥ मम द्विषन्ति वामोरु रुक्मी चापि तवाग्रजः ॥१८॥ तेषां वीर्यमदांधानां दृप्तानां स्मयनुत्तये ॥ आनीताऽसि मया भद्रे तेजोऽपहरता सताम् ॥ १९ ॥ उदासीना वयं

राजपुत्रि ! लोकपालानामिव विभूतिरैश्वर्यं येषां तैस्तथा महाप्रभावैराढ्यै रूपादिभिरूर्जितैश्च पूर्वमीप्सिताऽसि ॥ १० ॥ तान्हित्वा नोऽस्मानसमानान्कस्माद्ववृषे वृतवती त्वम् ॥ ११ ॥ किंच । प्रायशो राजभ्यो जरासंधादिभ्यो बिभ्यतो भयं प्राप्नुवतः ॥१२॥ अस्पष्टवर्त्मनामविज्ञाताचाराणाम् । अलोकपथमस्त्रीपारतन्त्र्यम् । पदवीं मार्गम् । आस्थिता अनुसृताः ॥१३॥ किंच निष्किंचना इति ॥१४॥ आत्मसमं परस्परमनुरूपम् । जन्मैश्वर्याभ्यां सहिता आकृतिः रूपं जातिर्वा समा । भव आयतिः ॥१५॥ न दीर्घा समीक्षा विचारो यस्यास्तया ॥१६॥ अथ इदानीमपि ॥ १७ ॥ तर्हि किमित्यानीताऽहमिति चेत्तत्राह । चैद्यशाल्वजरासंधेति । मम मां द्विषंति ॥१८॥ स्मयनुत्तये गर्वापनयनाय ॥ १९ ॥ स्त्रीणामतिदुःसहमौदासीन्यमकामत्वं चाह । उदासीना इति । गेह-

योर्देहगेहयोरुदासीना अतएव ज्योतिरक्रियाः ज्योतिः प्रदीपादि तद्वत्साक्षिमात्रतया क्रियारहिता आस्महे वर्तामहे इति॥२०॥ अविश्लेषाद्धेतोः आत्मानमेव वल्लभामित्येवार्थे इवशब्दः ॥२१॥ ॥२२॥ चिंतालक्षणमाह । पदेति । नखैररुणा श्रीः कांतिर्यस्य तेन सुजातेन सुकोमलेन पदा ॥ २३ ॥ सुदुःखमप्रियश्रवणात् । भयं त्यागशंकया शोकोऽनुतापः तैर्विनष्टा बुद्धिर्यस्यास्तस्याः । श्लथंति पतन्ति वलयानि यस्माद्धस्तात् । देहश्च पपात । विक्लवा अवशा धीर्यस्यास्तस्याः ॥२४॥ हास्यस्य प्रौढिं गांभीर्यम् ॥२५॥ चतुर्भुज इति उत्थापनाश्लेषणवक्त्रपरिमार्जनाद्यर्थमाविष्कृतचतुर्भुज इत्यर्थः । समुह्य निबध्य॥२६॥ अश्रुकले अश्रुभिः शोभिते । शुचा शोकाश्रुभिः ॥२७॥ सांत्वयामासानुनीतवान्॥२८॥ मा माम् । त्वद्वचः किं नु वदिष्यसीति श्रोतुकामेन श्रोतुमिच्छ-

नूनं न स्त्र्यपत्यार्थकामुकाः ॥ आत्मलब्ध्यास्महे पूर्णा गेहयोर्ज्योतिरक्रियाः ॥२०॥ श्रीशुक उवाच ॥ एतावदुक्त्वा भगवानात्मानं वल्लभामिव ॥ मन्यमानामविश्लेषात्तद्दर्पघ्न उपारमत् ॥ २१ ॥ इति त्रिलोकेशपतेस्तदात्मनः प्रियस्य देव्यश्रुतपूर्वमप्रियम् ॥ आश्रुत्य भीता हृदि जातवेपथुश्चिंतां दुरंतां रुदती जगाम ह ॥ २२ ॥ पदा सुजातेन नखारुणश्रिया भुवं लिखंत्यश्रुभिरञ्जनासितैः ॥ आसिंचती कुंकुमरूषितौ स्तनौ तस्थावधोमुख्यतिदुःखरुद्धवाक् ॥ २३ ॥ तस्याः सुदुःखभयशोकविनष्टबुद्धेर्हस्ताच्छ्लथद्वलयतो व्यजनं पपात ॥ देहश्च विक्लवधियः सहसैव मुह्यन्रम्भेव वायुविहता प्रविकीर्य केशान् ॥ २४ ॥ तद्दृष्ट्वा भगवान्कृष्णः प्रियायाः प्रेमबंधनम् ॥ हास्यप्रौढिमजानंत्याः करुणः सोऽन्वकंपत ॥ २५ ॥ पर्यंकादवरुह्याशु तामुत्थाप्य चतुर्भुजः ॥ केशान्समुह्य तद्वक्त्रं प्रामृजत्पद्मपाणिना ॥ २६ ॥ प्रमृज्याश्रुकले नेत्रे स्तनौ चोपहतौ शुचा ॥ आश्लिष्य बाहुना राजन्ननन्यविषयां सतीम् ॥ २७ ॥ सांत्वयामास सांत्वज्ञः कृपया कृपणां प्रभुः ॥ हास्यप्रौढिभ्रमच्चित्तामतदर्हां सतां गतिः ॥२८॥ श्रीभगवानुवाच ॥ मा मा वैदर्भ्यसूयेथा जाने त्वां मत्परायणाम् ॥ त्वद्वचः श्रोतुकामेन क्ष्वेल्याऽऽचरितमंगने ॥ २९ ॥ मुखं च प्रेमसंरंभस्फुरिताधरमीक्षितुम् ॥ कटाक्षेपारुणापाङ्गं सुन्दरभ्रुकुटीतटम् ॥ ३० ॥ अयं हि परमो लाभो गृहेषु गृहमेधिनाम् ॥ यन्नर्मैर्नीयते यामः प्रियया भीरु भामिनि ॥ ३१ ॥ श्रीशुक उवाच ॥ सैवं भगवता राजन्वैदर्भी परिसान्त्विता ॥ ज्ञात्वा तत्परिहासोक्तिं प्रियत्यागभयं जहौ ॥ ३२ ॥ बभाष पुंसां वीक्षन्ती भगवान्मुखम् ॥ सव्रीडहासरुचिरस्निग्धापाङ्गेन भारत ॥३३॥ रुक्मिण्युवाच ॥ नन्वेवमेतदरविंदविलोचनाह यद्वै भवान्भगवतोऽसदृशी विभूम्नः ॥

ता क्ष्वेल्या नर्मणा एवमाचरितमुक्तं न तत्त्वतः । हे अङ्गने सुंदरि ॥२९॥ प्रेमसंरंभेण प्रणयकोपेन स्फुरितः कंपितोऽधरो यस्मिंस्तत् । कटाक्षशब्देन कटाक्षास्तैराक्षेपैररुणावपांगौ यस्मिंस्तत् । अतएव सुंदरं कुटिलं भ्रुकुटीतटं यस्मिंस्तत् ॥३०॥ ननु कलहे किं कौतुकं सुखं वाऽत आह । अयं हीति । नर्मैर्नर्मभिः । यामः कालः ॥३१॥३२॥ भगवतस्तस्य ऐश्वर्ययुक्तं मुखं सव्रीडेन हासेन रुचिरेण स्निग्धेनापांगेन वीक्षमाणा ॥३३॥ असमत्वं भयं दुर्गाश्रयणं प्रबलैः कलिः ॥ अराजत्वमविज्ञाता लौकिकेहावसादनम् ॥१॥ निष्किंचनत्वं तत्प्रीतिराढ्यानादरणीयता ॥ अनौचित्यं निर्गुणत्वं वृथा श्लाघा च भिक्षुभिः ॥ २॥ औदासीन्यमकामत्वं स्वदोषान्षोडशासतः॥ अज्ञत्वादीर्घदर्शित्वे भैष्म्या राज्ञां बहून् गुणान् ॥३॥ कृष्णनर्मोदितान् भैष्मी न्यषेधत्तद्गुणस्तवैः ॥३॥ भगवता स्वनि-

दापराणीव यानि वचनान्युक्तानि तानि सर्वोत्कर्षपरतया व्याचक्षाणा प्रतिभाषते स्म। तत्र यदुक्तं कस्मान्नो ववृषेऽसमानीति तत्रासाम्यं सत्यमेवेत्याह। नन्वेवमिति। हे अरविंदविलोचन! त्र्यधीश-त्रयाणां ब्रह्मादीनामप्यधीशो नियंता त्वं क्व चाहं गुणप्रकृतिस्त्रिगुणस्वभावा प्राकृता गुणमयी प्रकृतिर्वा। ननु त्वमेवाधीश्वरी श्रीः सर्वैरुपास्यत्वादिति चेदत आह। अज्ञैः सकामैर्गृहीतौ पादौ यस्याः सा ॥ ३४ ॥ यदुक्तं राजभ्यो बिभ्यतः सुभ्रुः समुद्रं शरणं गतानिति तत्राह। सत्यमिति। हे उरुक्रमेति भयाभावं दर्शयति। गुणाः शब्दादय एव राजंत इति राजानस्तेभ्यो भयादिवेति अंतर्हृदये समुद्रे तद्वदगाधे विषयाकारैरपरिच्छिन्न इत्यर्थः। शेते निश्चलतया प्रकाशते। उपलंभनमात्रश्चैतन्यधन आत्मा भवानिति। बलवद्भिः कृतद्वेषानिति यदुक्तं तदपि सत्यमित्याह। नित्य-मिति। कदिंद्रियगणैः कुत्सितैर्बहिर्मुखैरिंद्रियगणैः। वृत्त्यभिप्रायेण बहुवचनम्। कुत्सित इन्द्रियगणो येषामिति वा। तैस्त्वं नित्यं कृतविग्रहः तेषु तवाप्रतीतेः। यदुक्तं त्यक्तनृपासनानिति तदपि युक्तमेवेत्याह। त्वत्सेवकैरिति। नृपाणां पदमासनमंधं गाढं तम एव तत्। अविवेकबहुलत्वात्। त्वत्सेवकैरेव तत्त्यक्तं किं पुनर्वक्तव्यं त्वया त्यक्तमिति ॥३५॥ अस्पष्टवर्त्मनां पुंसामलोकपथमी-युषामिति यदुक्तं तदपि तथैवेत्याह। त्वत्पादेति। नृपशुभिर्नराकारैः पशुभिः। किं पुनर्वक्तव्यं तव वर्त्मास्फुटमिति। किंच यस्माद्ये भवंतमनुवर्तंते तेषामपीहितमलौकिकमिव। अथो अतः किमु

क स्वे महिम्न्यभिरतो भगवांस्त्र्यधीश क्वाहं गुणप्रकृतिरज्ञगृहीतापादा ॥ ३४ ॥ सत्यं भयादिव गुणेभ्य उरुक्रमांतः शेते समुद्र उपलंभनमात्र आत्मा ॥ नित्यं कदिंद्रियगणैः कृतविग्रहस्त्वं त्वत्सेवकैर्नृपपदं विधुतं तमोऽन्धम् ॥ ३५ ॥ त्वत्पादपद्ममकरंदजुषां मुनीनां वर्त्मास्फुटं नृपशुभिर्ननु दुर्विभाव्यम् ॥ यस्मादलौकिकमिवेहितमीश्वरस्य भूमंस्तवेहितमथो अनु ये भवंतम् ॥ ३६ ॥ निष्किंचनो ननु भवान्नु यतोऽस्ति किंचिद्यस्मै बलिं बलिभुजोऽपि हरंत्यजाद्याः ॥ न त्वा विदंत्यसुतृपोऽन्तकमाढ्यतांधाः प्रेष्ठो भवान्बलिभुजामपि तेऽपि तुभ्यम् ॥ ३७ ॥ त्वं वै समस्तपुरुषार्थमयः फलात्मा यद्वांछया सुमतयो विसृजंति कृत्स्नम् ॥ तेषां विभो समुचितो भवतः समाजः पुंसः स्त्रियाश्च रतयोः सुखदुःखिनोर्न ॥ ३८ ॥ त्वं न्यस्त-दंडमुनिभिर्गदितानुभाव आत्मात्मदश्च जगतामिति मे वृतोऽसि ॥ हित्वा भवद्भ्रुव उदीरितकालवेगध्वस्ताशिषोऽब्जभवनाकपतीन्कुतोऽन्ये ॥३९॥

वक्तव्यं तवेश्वरस्येहितमलौकिकमित्यर्थः। आस्थिताः पदवीं सुभ्रूः प्रायः सीदन्ति योषित इत्यस्य परिहारं वक्ष्यति। मद्वांछयेति पञ्चमश्लोके ॥३६॥ निष्किंचना वयं शश्वन्निष्किंचनजनप्रियाः॥ तस्मात्प्रायेण न ह्याढ्या मां भजन्ति सुमध्यमे इत्येतच्छ्लोकोक्तं दोषत्रयं परिहरति। निष्किंचन इति। दरिद्रतालक्षणं निष्किंचनत्वं तु तव न घटत इत्याह। यस्मा इति। अन्यतो बलिभुजः पूज्या अपि ब्रह्मादयो यस्मै भवते बलिं हरंति तस्य सर्वेश्वरस्य भवतो दरिद्रता न घटत इत्यर्थः। निष्किंचनजनप्रिया इत्यत्र तत्पुरुषेण बहुव्रीहिणा वा निंदा स्यादिति स्वयमप्युभयथा स्तौति। प्रेष्ठो भवानिति। बलिभुजां ब्रह्मादीनां लोकेश्वराणां त्वं प्रेष्ठस्तेऽपि तुभ्यं तवेति। तस्मात्प्रायेण न ह्याढ्या मां भजन्तीति तस्योत्तरम्। न त्वा विदन्तीति। आढ्यतयांऽधास्त्वा त्वामंतकं न विदंति। अतस्ते असुतृपः असूनेव तर्पयन्ति न त्वां भजन्तीत्यर्थः ॥३७॥ बलिभुजामपि भवान्प्रेष्ठ इत्यत्र हेतुं वदंति। ययोरेव समं वित्तमित्यनेनोक्तमनौचित्यं परिहरति। त्वं वा इति। फलात्मा परमानन्दरूपः। एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीति श्रुतेः। समाजः सेव्यसेवकलक्षणसंबंधो न तु पुंसः स्त्रियाश्च मिथो रतयोः अतएव तत्कृतसुखदुःखिनोः। तदाकुलयोरित्यर्थः ॥३८॥ भिक्षुभिः श्लाघिता मुधेत्यस्य परिहारः। त्वमिति। भिक्षुपदव्याख्यानं न्यस्तदंडैर्मुनिभिरिति। मुधेत्यस्य परिहारः आत्मेति। यदर्थं सर्वं प्रियं भवति तस्य जगतामात्मनस्तव वरणं न

वृथेत्यर्थः। किंच आत्मद इति। वैदर्भ्येतदविज्ञाय त्वयाऽदीर्घसमीक्षयेति स्वस्मिन्नुक्तं दोषद्वयं परिहरति। इतीति। इति ज्ञात्वैव मे मया वृतोऽसीत्यज्ञानपरिहारः। हित्वेत्यदीर्घसमीक्षापरिहारः। भवतो भ्रुवः सकाशादुदीरितो यः कालस्तस्य वेगस्तेन ध्वस्ता आशिषो येषां तान्ब्रह्मादीनपि विहाय। कुतोऽन्ये वराका इत्यर्थः ॥ ३९ ॥ स्वाज्ञानं परिहृत्य पुरुषांतरगुणवर्णनप्रदर्शितकोपसंरंभेण तस्मिन्नेवाज्ञानमापादयति। जाड्यमिति। सिंहो यथा पशून्विद्राव्य स्वबलिं हरति तथा शार्ङ्गधनुर्निनादेनैव जरासंधादीन्विद्राव्य मां स्वभागं श्रियं यस्त्वं हृतवानसि तस्य तव राजभ्यो भयादुदधिं प्रपन्न इति यद्वचो भाषणं तज्जाड्यं मांद्यम्। न घटत इत्यर्थः ॥४०॥ यच्चान्यदस्पष्टवर्त्मनामित्यादिना अर्थात्त्वां भजन्तः सीदंतीत्यवसादनं श्रमावहत्वमुक्तं तदपि मंदमेवेत्याह। यद्वांछयेति। यस्य तव भजनवांछया नृपोत्तमाः। अङ्गो वेनस्य पिता वैन्यः पृथुः जायन्तो भरतः नाहुषो ययातिः गयश्चादिर्येषां ते य एते तव पदवीं मार्गमाश्रितास्ते किं सीदंति न सीदंत्येव। अपि तु त्वत्पदं प्राप्ता इत्यर्थः। एवं कोपावेशेनावसादनस्य परिहारादस्पष्टवर्त्मनामित्येतदानन्तर्यं विहायात्रोत्कर्षः ॥४१॥ यच्चोक्तमथात्मनोऽनुरूपमिति तत्राह। काऽन्यमिति श्लोकद्वयेन। गुणानामालयस्य तव पादसरोजगंधं जनताया अपवर्गं मोक्षरूपं लक्ष्म्या आलयं तत्सेव्यं सद्भिर्मुखरितं वर्णितमाघ्राय तमविगणय्य मर्त्या मरणधर्मिका सदा उरु भयं यस्य तमन्यं का स्त्री श्रयेत सेवेत। अर्थे विविक्ता

जाड्यं वचस्तव गदाग्रज यस्तु भूपान्विद्राव्य शार्ङ्गनिनदेन जहर्थ मां त्वम् ॥ सिंहो यथा स्वबलिमीश पशून्स्वभागं तेभ्यो भयाद्यदुदधिं शरणं प्रपन्नः ॥ ४० ॥ यद्वांछया नृपशिखामणयोऽङ्गवैन्यजायंतनाहुषगयादय ऐकपत्यम् ॥ राज्यं विसृज्य विविशुर्वनमंबुजाक्ष सीदंति तेऽनुपदवीं त इहास्थिताः किम् ॥४१॥ काऽन्यं श्रयेत तव पादसरोजगंधमाघ्राय सन्मुखरितं जनताऽपवर्गम् ॥ लक्ष्म्यालयं त्वविगणय्य गुणालयस्य मर्त्या सदारुभयमर्थविविक्तदृष्टिः ॥ ४२ ॥ तं त्वाऽनुरूपमभजं जगतामधीशमात्मानमत्र च परत्र च कामपूरम् ॥ स्यान्मे तवांघ्रिररणं सृतिभिर्भ्रमंत्या यो वै भजंतमुपयात्यनृतापवर्गः ॥ ४३ ॥ तस्याः स्युरच्युत नृपा भवतोपदिष्टाः स्त्रीणां गृहेषु खरगोश्वविडालभृत्याः ॥ यत्कर्णमूलमविकर्षण नोपयायाद्युष्मत्कथामृडविरिंचसभासु गीता ॥ ४४ ॥ त्वक्श्मश्रुरोमनखकेशपिनद्धमंतर्मांसास्थिरक्तकृमिविट्कफपित्तवातम् ॥ जीवच्छवं भजति कांतमतिर्विमूढा या ते पदाब्जमकरंदमजिघ्रती स्त्री ॥४५॥ अस्त्वंबुजाक्ष मम ते चरणानुराग आत्मन्रतस्य मयि चानतिरिक्तदृष्टेः ॥ यर्ह्यस्य वृद्धय उपात्तरजोऽति-

दृष्टिर्यस्याः सा। गुणालयस्येत्यनेन गुणैर्हीना इति यदुक्तं तदपास्तम् ॥४२॥ अतस्त्वामेवाहमभजमित्याह। तं त्वेति। किंच प्रार्थयते। स्यादिति अरणं शरणम्। सृतिभिर्देवतिर्यगादिभिर्जन्मभिः। पाठांतरे त्वर्थवादबहुलकर्मश्रवणैरित्यर्थः। कथंभूतस्य तव। यस्त्वमनृतस्य संसारस्यापवर्गो नाशो यस्मात्स भजन्तमुपयात्यात्मसात्करोति तस्य तवांघ्रिरिति। भीतस्य हि शरणमेवानुरूपं भजनयोग्यमतस्त्वामहमभजमित्यर्थः ॥ ४३ ॥ ये चोक्ता राज्ञां बहवो गुणाः राजपुत्रीप्सिता भूपैर्लोकपालभृतिभिरित्यादिना तत्र सेर्ष्यं सशापं सांगुलिभंगं चाह द्वाभ्याम्। तस्याः स्युरिति। खरा इव केवलं भारवाहा गावो बलीवर्दा इव नित्यं व्यापारक्लिष्टाः श्वान इवावमता विडाला इव कृपणा हिंस्राश्च भृत्या इव किंकरा नृपास्तस्या दुर्भगायाः पतयः स्युः यस्याः कर्णपथं त्वत्कथा न प्राप्नुयादिति ॥४४॥ तथाहि। ते पदाब्जमकरंदमजिघ्रती या स्त्री विमूढा सा कांतोऽयमिति मतिर्यस्याः सा कांतमतिर्जीवच्छवं भजति। त्वगादिभिर्बहिः पिनद्धं छन्नमंतर्मांसादिमयमिति ॥ ४५ ॥ यदुक्तमुदासीना वयमित्यादिना तत्राह। अस्त्विति। यद्यपि त्वं निरपेक्षस्तथाऽपि मम ते चरणानुरागोऽस्तु मयि च मय्यपि नातिरिक्ता अतिशयवती दृष्टिर्यस्य तस्य ते।

आत्मन् आत्मन्येव रतस्य। तर्हि तव तेन को लाभः। त्वच्चरणानुराग एव महाँल्लाभः। किंच। यर्ह्यस्य विश्वस्य वृद्धये उपात्ता रजसोऽतिमात्रा औत्कंठ्यं येन स तथाभूतः सन्मामीक्षसे। उ एवार्थे। ह हर्षे। तदेव नः परमानुकंपा अत्यनुग्रह इति ॥ ४६ ॥ तदेवं सर्वं तदुक्तं प्रतिव्याख्याय प्रसन्नचित्ता मंत्रमुपदिशंत्याह द्वाभ्याम्। नैवेति। अथात्मनोऽनुरूपमित्यादि ते वचोऽलीकं मिथ्येति नैव मन्ये। यतो लोके कन्याया एव क्वचिद्रतिर्भवति यथा काशिराजकन्यानामंबांबालिकांऽबिकायां तिसृणां मध्ये अंबाया एव शाल्वे रतिर्जाता तद्वत् ॥ ४७ ॥ व्यूढायाः परिणीताया अपीति। उभयस्मादिहपरलोकद्वयाच्च्युतो भ्रष्ट इति ॥ ४८ ॥ प्रलंभिता उपहासिता। अन्वात्थान्वाख्यातवती ॥ ४९ ॥ मयि एकांतभक्तायास्ते कामाः संत्येव। अकामाय कामनिवृत्तये मोक्षपर्यवसायिन इत्यर्थः ॥ ५० ॥ अनुवादेन वरान् दत्त्वा तामभिनंदति उपलब्धमिति। यद्यस्मान्मयि वर्तमाना धीर्नापकर्षिता नान्यविषया जाता ॥ ५१ ॥ एकांतभक्तिमभिनंद्यतामेव दृढीकर्तुं सकामान् भक्तान्निंदति। ये मामिति। दाम्पत्ये दंपत्युपभोग्यसुखार्थम् ॥ ५२ ॥ मायामोहितत्वमेवोपपादयति। मां प्राप्येति। अपवर्गेण सह संपदो यस्मिंस्तं मां प्राप्य प्रसाद्य ये केवलं संपद

मात्रो मामीक्षसे तदु ह नः परमाऽनुकंपा ॥४६॥ नैवालीकमहं मन्ये वचस्ते मधुसूदन ॥ अंबाया इव हि प्रायः कन्यायाः स्याद्रतिः क्वचित् ॥ ४७ ॥ व्यूढायाश्चापि पुंश्चल्या मनोऽभ्येति नवं नवम् ॥ बुधोऽसतीं न बिभृयात्तां बिभ्रदुभयच्युतः ॥ ४८ ॥ श्रीभगवानुवाच ॥ साध्व्येतच्छ्रोतुकामैस्त्वं राजपुत्रि प्रलंभिता ॥ मयोदितं यदन्वात्थ सर्वं तत्सत्यमेव हि ॥ ४९ ॥ याऽन्यान्कामयसे कामान्मय्यकामाय भामिनि ॥ संति ह्येकांतभक्तायास्तव कल्याणि नित्यदा ॥ ५० ॥ उपलब्धं पतिप्रेम पातिव्रत्यं च तेऽनघे ॥ यद्वाक्यैश्चाल्यमानाया न धीर्मय्यपकर्षिता ॥ ५१ ॥ ये मां भजंति दांपत्ये तपसा व्रतचर्यया ॥ कामात्मानोऽपवर्गेशं मोहिता मम मायया ॥५२॥ मां प्राप्य मानिन्यपवर्गसंपदं वांछन्ति ये संपद एव तत्पतिम् ॥ ते मंदभाग्या निरयेऽपि ये नृणां मात्रात्मकत्वान्निरयः सुसंगमः ॥ ५३ ॥ दिष्ट्या गृहेश्वर्यसकृन्मयि त्वया कृताऽनुवृत्तिर्भवमोचनी खलैः ॥ सुदुष्कराऽसौ सुतरां दुराशिषो ह्यसुम्भराया निकृतिंजुषः स्त्रियाः ॥ ५४ ॥ न त्वादृशीं प्रणयिनीं गृहिणीं गृहेषु पश्यामि मानिनि यया स्वविवाहकाले ॥ प्राप्तान्नृपानवगणय्य रहोहरो मे प्रस्थापितो द्विज उपश्रुतसत्कथस्य ॥ ५५ ॥ भ्रातुर्विरूपकरणं युधि निर्जितस्य प्रोद्वाहपर्वणि च तद्वधमक्षगोष्ठ्याम् ॥ दुःखं समुत्थमसहोऽस्मदयोगभीत्या नैवाब्रवीः किमपि तेन वयं जितास्ते ॥ ५६ ॥ दूतस्त्वयाऽऽत्मलभने सुविविक्तमंत्रः प्रस्थापितो मयि चिरायति शून्य-

एव विषयान्वांछन्ति न तु माम्। तत्पतिं तासां संपदामपि योऽहमेव पतिस्तम्। तथा ये विषया निरयेऽप्यतिनिकृष्टयोनावपि स्युस्तान्। किंच तेषां पुंसां मात्रात्मकत्वाद्विषयात्मकत्वान्निरयः सुसंगमः शोभनसंगम एव स्यादतो मंदभाग्या एव ते इत्यर्थः ॥५३॥ तस्मात् हे गृहेश्वरि! त्वया मयि भवमोचनी निष्कामानुवृत्तिः कृता एतद्दिष्ट्या भद्रम्। कथंभूता। खलैः सुदुष्करा। दुराशिषो दुरभिप्रायाया अतएव असुम्भरायाः प्राणतर्पणपराया निकृतिंजुषो वंचनपरायाः स्त्रियाः सुतरामसावनुवृत्तिर्दुष्करेति ॥५४॥ किंच संति निष्कामाः प्रेम्णैव मय्यनुवर्तमाना बह्व्यः किंतु त्वया सदृशीं क्वापि न पश्यामीति तस्या भक्तिं बहुमानेनाभिनंदति। न त्वादृशीमिति त्रिभिः। उपश्रुताः सत्यः कथा यस्य मे ॥ ५५ ॥ प्रोद्वाहपर्वण्यनिरुद्धविवाहे। अक्षगोष्ठ्यां द्यूतसभायाम्। तस्य भ्रातुर्वधम्। तस्मिन्काले कालांतरे वा तदनुस्मरणतः पुनः पुनः समुत्थं दुःखमस्माभिरयोगो वियोगस्तद्भीत्या असहः सोढवत्यसि। अनेनैवानिरुद्धविवाहानंतरमस्य ज्ञातव्यम् ॥ ५६ ॥

अपि च दूत इति आत्मलभने मत्प्राप्त्यर्थम् । मयि चिरायति शोभाविनि विवाहे आगंतव्यमिति कृते समये कथंचिदप्राप्तवति सत्येनद्विश्वं शून्यं मत्वेदमनन्ययोग्यमंगं जिहासे त्यक्तुमिच्छामि त्यक्ष्यामीत्येवं दूतः प्रस्थापितः । तथा चोक्तं त्वया । यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं जह्यामसून व्रतकृशान् शतजन्मभिः स्यादिति । यद्वा अजिहास इति छेदः । त्यक्तुमैच्छ इत्यर्थः । तत्तव कर्म त्वय्येव तिष्ठेत् । न तत्प्रतिकर्तुं शक्यमित्यर्थः । किन्तु केवलं त्वां प्रतिनन्दयामो हर्षयाम इति ॥५७॥ सौरतसंलापैः सुरतनर्मगोष्ठीभिः ॥ ५८ ॥ ५९ ॥ इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे टीकायां षष्टितमोऽध्यायः ॥ ६० ॥ एकषष्टितमे शौरेः पुत्रपौत्रादिसंततिः ॥ अनिरुद्धविवाहे च रुक्मिणो रामतो वधः ॥१॥ अष्टाधिकशतद्व्यष्टसहस्रस्त्रीसमुद्भवान् ॥ कोटिशः पुत्रपौत्रादीन्हरिर्दारैरयोजयत् ॥२॥ तदेतद्वक्तुमाह । एकैकश इति । कृष्णस्याबला भार्याः सर्वा या आत्मनि संपत्त्या पितुः सकाशादनवमानन्यूनान् ॥ १ ॥ प्रेष्ठं न्यमंसत अच्युतस्य प्रियतमं प्रत्येकं स्वं स्वं मेनिरे । न तस्य तत्त्वमात्मारामत्वं विदंति ताः ॥ २ ॥ आत्मारामत्वं व्यनक्ति द्वयेन । चार्विति । चार्वब्जकोशवद्वदनं च आयतानि बाहुनेत्राणि च सप्रेम्णा हासरसेन वीक्षितानि च

मेतत् ॥ मत्वा जिहास इदमंगमनन्ययोग्यं तिष्ठेति तत्त्वयि वयं प्रतिनंदयामः ॥ ५७ ॥ श्रीशुक उवाच ॥ एवं सौरतसंलापैर्भगवान् जगदीश्वरः ॥ स्वरतो रमया रेमे नरलोकं विडंबयन् ॥ ५८ ॥ तथाऽन्यासामपि विभुर्गृहेषु गृहवानिव ॥ आस्थितो गृहमेधीयान्धर्मांल्लोकगुरुर्हरिः ॥ ५९ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे कृष्णरुक्मिणीसंवादो नाम षष्टितमोऽध्यायः ॥ ६० ॥ श्रीशुक उवाच ॥ एकैकशस्ताः कृष्णस्य पुत्रान्दशदशाबलाः ॥ अजीजनन्ननवमान्पितुः सर्वात्मसंपदा ॥१॥ गृहादनपगं वीक्ष्य राजपुत्र्योऽच्युतं स्थितम् ॥ प्रेष्ठं न्यमंसत स्वं स्वं न तत्त्वविदः स्त्रियः ॥ २ ॥ चार्वब्जकोशवदनायतबाहुनेत्रसप्रेमहासरसवीक्षितवल्गुजल्पैः ॥ संमोहिता भगवतो न मनो विजेतुं स्वैर्विभ्रमैः समशकन्वनिता विभूम्नः ॥ ३ ॥ स्मायावलोकलवदर्शितभावहारिभ्रूमण्डलप्रहितसौरतमंत्रशौंडैः ॥ पत्न्यस्तु षोडशसहस्रमनंगबाणैर्यस्येंद्रियं विमथितुं करणैर्न शेकुः ॥ ४ ॥ इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता ब्रह्मादयोऽपि न विदुः पदवीं यदीयाम् ॥ भेजुर्मुदाऽविरतमेधितयाऽनुरागहासावलोकनवसंगमलालसाद्यम् ॥ ५ ॥ प्रत्युद्गमासनवरार्हणपादशौचतांबूलविश्रमणवीजनगंधमाल्यैः ॥ केशप्रसारशयनस्नपनोपहार्यैर्दासीशता अपि विभोर्विदधुःस्म दास्यम् ॥ ६ ॥ तासां या दशपुत्राणां कृष्णस्त्रीणां पुरोदिताः ॥ अष्टौ महिष्यस्तत्पुत्रान्प्रद्युम्नादीन्गृणामि ते ॥७॥ चारुदेष्णः सुदेष्णश्च चारुदेहश्च वीर्य-

वल्गुजल्पाश्च भगवतः एतैः संमोहिता वनिताः स्वैः स्वैरनेकैर्विभ्रमैस्तस्य श्रीकृष्णस्य मनो विजेतुं हर्तुं न समशकन्न शक्ता बभूवुः । विभूम्नः परिपूर्णस्य ॥३॥ तासां विभ्रमान्वर्णयन्नेतद्विवृणोति । स्मायेति । स्मायो गूढहासितं तद्युक्तोऽवलोकलवः कटाक्षस्तेन दर्शितः सूचितो भावोऽभिप्रायस्तेन हारि मनोहरणशीलं यद्भ्रूमंडलं तेन प्रहिताः प्रस्थापिता ये सौरता मंत्रास्तेषु शौंडैः प्रगल्भैरनंगस्य बाणैः शरैरन्यैश्च करणैः कामशास्त्रप्रसिद्धैर्यस्येंद्रियं मनो विमथितुं क्षोभयितुं षोडशसहस्रमपि पत्न्यो न शेकुरिति ॥ ४ ॥ अनुरागेण हासोऽवलोकश्च नवसंगमे लालसमौत्सुक्यं च ते आद्या यस्य विभ्रमवृंदस्य तं भेजुः । अनुरागहासावलोकनवसंगमलालसाद्यं भेजुस्तस्य मनो विजेतुं न शेकुरिति वा ॥५॥ किंतु प्रत्युद्गमादिभिर्विभोस्तस्य दास्यं नित्यं विदधुरिति । प्रौढभावेऽपि नवसंगमाद्यभिधानमगतसारत्वेनौत्सुक्येन च तथा प्रतीतेः तेषामेव श्लोकानां प्रस्तावांतरे पुनः पुनरावृत्तिरतिसौंदर्यात् ॥६॥ प्रासंगिकमुक्त्वा प्रस्तुतमाह । तासामिति । दश दश पुत्रा यासां तासां मध्येऽष्टौ

महिष्यो याः प्रागुक्तास्तत्पुत्रानिति ॥ ७–१२ ॥ श्रीमानिति वसोः कुंतेर्वा विशेषणम् ॥ १३ ॥ भद्रो नाम एकल एकः। सोमकोऽवरः कनीयान् । एते कालिंद्याः सुता इति ॥ १४ ॥ माद्र्या लक्ष्मणायाः ॥१५॥ क्षुधिश्च दशमः । एते मित्रविंदात्मजाः ॥ १६ ॥ संग्रामजित्प्रमुखाः सत्यकांता भद्रायाः सुताः । शैब्यानामपि सैव ॥ १७ ॥ रोहिण्याः सुतानामुक्तिरन्यासामुपलक्षणार्थम् ॥ १८ ॥ एतेषामिति । अन्येषामपि श्रीकृष्णपुत्राणां शतसंख्यस्त्रीषु पुत्राः पौत्राश्च कोटिशो बभूवुः । तत्र हेतुत्वेन श्रीकृष्णपत्नीनां बाहुल्यमनुस्मारयति। मातरः कृष्णजातानामिति। चश-

वान् ॥ सुचारुश्चारुगुप्तश्च भद्रचारुस्तथाऽपरः ॥ ८ ॥ चारुचंद्रो विचारुश्च चारुश्च दशमो हरेः ॥ प्रद्युम्नप्रमुखा जाता रुक्मिण्यां नावमाः पितुः ॥ ९ ॥ भानुः सुभानुः स्वर्भानुः प्रभानुर्भानुमांस्तथा ॥ चंद्रभानुर्बृहद्भानुरतिभानुस्तथाष्टमः ॥१०॥ श्रीभानुः प्रतिभानुश्च सत्यभामात्मजा दश ॥ सांबः सुमित्रः पुरुजिच्छतजिच्च सहस्रजित् ॥११॥ विजयश्चित्रकेतुश्च वसुमान्द्रविडः क्रतुः ॥ जांबवत्याः सुता ह्येते सांबाद्याः पितृसंमताः ॥ १२ ॥ वीरश्चंद्रोऽश्वसेनश्च चित्रगुर्वेगवान्वृषः ॥ आमः शंकुर्वसुः श्रीमान्कुंतिर्नाग्नजितेः सुताः ॥१३॥ श्रुतः कविर्वृषो वीरः सुबाहुर्भद्र एकलः ॥ शांतिर्दर्शः पूर्णमासः कालिंद्याः सोमकोऽवरः ॥१४॥ प्रघोषो गात्रवान् सिंहो बलः प्रबल ऊर्ध्वगः॥ माद्र्याः पुत्रा महाशक्तिः सह ओजोऽपराजितः ॥ १५ ॥ वृको हर्षोऽनिलो गृध्रो वर्धनोऽन्नाद एव च ॥ महाशः पावनो वह्निर्मित्रविंदात्मजाः क्षुधिः ॥ १६ ॥ संग्रामजिद्बृहत्सेनः शूरः प्रहरणोऽरिजित् ॥ जयः सुभद्रा भद्रायां वाम आयुश्च सत्यकः ॥१७॥ दीप्तिमांस्ताम्रतप्ताद्या रोहिण्यास्तनया हरेः ॥ प्रद्युम्नाच्चानिरुद्धोऽभूद्रुक्मवत्यां महाबलः ॥१८॥ पुत्र्यां तु रुक्मिणो राजन्नाम्ना भोजकटे पुरे ॥ एतेषां पुत्रपौत्राश्च बभूवुः कोटिशो नृप ॥ मातरः कृष्णजातानां सहस्राणि च षोडश ॥ १९ ॥ राजोवाच ॥ कथं रुक्म्यरिपुत्राय प्रादाद्दुहितरं युधि ॥ कृष्णेन परिभूतस्तं हंतुं रंध्रं प्रतीक्षते ॥ एतदाख्याहि मे विद्वन्द्विषो वैवाहिकं मिथः ॥२०॥ अनागतमतीतं च वर्तमानमतींद्रियम् ॥ विप्रकृष्टं व्यवहितं सम्यक्पश्यंति योगिनः ॥२१॥ श्रीशुक उवाच ॥ वृतः स्वयंवरे साक्षादनंगोऽङ्गयुतस्तया ॥ राज्ञः समेतान्निर्जित्य जहारैकरथो युधि ॥ २२ ॥ यद्यप्यनुस्मरन्वैरं रुक्मी कृष्णावमानितः ॥ व्यतरद्भागिनेयाय सुतां कुर्वन्स्वसुः प्रियम् ॥२३॥ रुक्मिण्यास्तनयां राजन्कृतवर्मसुतो बली ॥ उपयेमे विशालाक्षीं कन्यां चारुमतीं किल ॥ २४ ॥ दौहित्रायानिरुद्धाय पौत्रीं रुक्म्यददाद्धरेः ॥ रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया ॥ जानन्नधर्मं तद्यौनं स्नेहपाशानुबंधनः ॥ २५ ॥ तस्मिन्नभ्युदये राजन् रुक्मिणी रामकेशवौ ॥ पुरं

ब्देनाधिकाश्चेत्युक्तम् ॥१९॥ यः कृष्णं हंतुं रंध्रं प्रतीक्षते स कथं प्रादादिति । वैवाहिकं विवाहनिमित्तम् ॥ २० ॥ रुक्मिणोऽभिप्रायं कथं जानीम इति चेदत आह । अनागतमिति । अतींद्रियमस्मदादींद्रियागोचरम् । विप्रकृष्टं दूरस्थम् । व्यवहितं कुड्याद्यंतरितम् ॥ २१ ॥ तत्रोत्तरम् । स्वयंवरे रुक्मवत्या वृतः सन् राज्ञो निर्जित्य जहारेति ॥ २२ ॥ यद्यपि श्रीकृष्णावमानितस्तथापि वैरमनुस्मरन्नपि व्यतरत्प्रादात् । अन्वमोदतेत्यर्थः ॥ २३ ॥ सर्वासामपि एकैका कन्या तत्सर्वं विवाहोपलक्षणार्थं ज्येष्ठकन्याविवाहमाह । रुक्मिण्या इति ॥ २४ ॥ यौनं विवाहः । तद्यौनमधर्मं

जानन्निति। द्विषदन्नं न भोक्तव्यं द्विषंतं नैव भोजयेदिति लोकविरोधात् । अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न त्विति निषेधाच्चेत्यर्थः ॥२५॥ २६ ॥ लोकविरुद्धाचरणफलं वक्तुमाह । तस्मि-न्निति ॥२७॥ अदीव्यत् क्रीडितवान् ॥ २८ ॥ २९ ॥ निष्काणां लक्षं ग्लहं पणं कृतवान् । कैतवं कपटम् ॥ ३० ॥ न्यर्बुदं दशकोटीर्ग्लहं क्षुभितो राम आददे ॥ ३१ ॥ छलमाश्रितो रुक्मी

भोजकटं जग्मुः सांबप्रद्युम्नकादयः ॥ २६ ॥ तस्मिन्निवृत्त उद्वाहे कालिंगप्रमुखा नृपाः ॥ दृप्तास्ते रुक्मिणं प्रोचुर्बलमक्षैर्विनिर्जय ॥२७॥ अनक्षज्ञो ह्ययं राजन्नपि तद्व्यसनं महत् ॥ इत्युक्तो बलमाहूय तेनाक्षै रुक्म्यदीव्यत ॥ २८ ॥ शतं सहस्रमयुतं रामस्तत्राददे पणम् ॥ तं तु रुक्म्यजयत्तत्र कालिंगः प्राहसद्बलम् ॥ दंतान्संदर्शयन्नुच्चैर्नामृष्यत्तद्धलायुधः ॥२९॥ ततो लक्षं रुक्म्यगृह्णाद्ग्लहं तत्राजयद्बलः ॥ जितवानहमित्याह रुक्मी कैतव-माश्रितः ॥ ३० ॥ मन्युना क्षुभितः श्रीमान्समुद्र इव पर्वणि ॥ जात्यारुणाक्षोऽतिरुषा न्यर्बुदं ग्लहमाददे ॥ ३१ ॥ तं चापि जितवान्रामो धर्मेण च्छलमाश्रितः ॥ रुक्मी जितं मयाऽत्रेमे वदंतु प्राश्निका इति ॥ ३२ ॥ तदाऽब्रवीन्नभोवाणी बलेनैव जितो ग्लहः ॥ धर्मतो वचनेनैव रुक्मी वदति वै मृषा ॥३३॥ तामनादृत्य वैदर्भो दुष्टराजन्यचोदितः ॥ संकर्षणं परिहसन्बभाषे कालचोदितः ॥ ३४ ॥ नैवाक्षकोविदा यूयं गोपाला वनगो-चराः ॥ अक्षैर्दीव्यन्ति राजानो बाणैश्च न भवादृशाः ॥ ३५ ॥ रुक्मिणैवमधिक्षिप्तो राजभिश्चोपहासितः ॥ क्रुद्धः परिघमुद्यम्य जघ्ने तं नृम्णसंसदि ॥ ३६ ॥ कलिंगराजं तरसा गृहीत्वा दशमे पदे ॥ दंतानपातयत्क्रुद्धो योऽहसद्विवृतैर्द्विजैः ॥ ३७ ॥ अन्ये निर्भिन्नबाहूरुशिरसो रुधिरोक्षिताः ॥ राजानो दुद्रुवुर्भीता बलेन परिघार्दिताः ॥ ३८ ॥ निहते रुक्मिणि श्याले नाब्रवीत्साध्वसाधु वा ॥ रुक्मिणीबलयो राजन् स्नेहभंगभयाद्धरिः ॥ ३९ ॥ ततोऽनिरुद्धं सह सूर्यया वरं रथं समारोप्य ययुः कुशस्थलीम् ॥ रामादयो भोजकटाद्दशार्हाः सिद्धाखिलार्था मधुसूदनाश्रयाः ॥ ४० ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्द्धे अनिरुद्धविवाहे रुक्मिवधो नामैकषष्टितमोऽध्यायः ॥ ६१ ॥ राजोवाच ॥ बाणस्य तनया-मूषामुपयेमे यदूत्तमः ॥ तत्र युद्धमभूद्घोरं हरिशंकरयोर्महत् ॥ एतत्सर्वं महायोगिन्समाख्यातुं त्वमर्हसि ॥ १ ॥ श्रीशुक उवाच ॥ बाणः पुत्रशत-ज्येष्ठो बलेरासीन्महात्मनः ॥ येन वामनरूपाय हरयेऽदायि मेदिनी ॥ २ ॥ यस्यौरसः सुतो बाणः शिवभक्तिरतः सदा ॥ मान्यो वदान्यो धीमाँश्च सत्यसंधो दृढव्रतः ॥ ३ ॥ शोणिताख्ये पुरे रम्ये स राज्यमकरोत्पुरा ॥ तस्य शंभोः प्रसादेन किंकरा इव तेऽमराः ॥ सहस्रबाहुर्वाद्येन तांडवेऽतोषयन्मृ-डम् ॥ ४ ॥ भगवान्सर्वभूतेशः शरण्यो भक्तवत्सलः ॥ वरेण छंदयामास स तं वव्रे पुराधिपम् ॥५॥ स एकदाऽऽह गिरिशं पार्श्वस्थं वीर्यदुर्मदः ॥

मया जितमित्याह ॥ ३२–३५ ॥ नृम्णसंसदि मंगलसभायाम् ॥ ३६–३९ ॥ सूर्यया नवोढया । सिद्धा अखिला अर्था अभ्युदयशत्रुवधादयो येषां ते ॥ ४० ॥ इति दशमस्कंधे उत्तरार्धे टीका-यामेकषष्टितमोऽध्यायः ॥ ६१ ॥ द्वियुक्षष्टितमे प्रोक्तमनिरुद्धस्य रोधनम् ॥ कन्यया रममाणस्य बाणेन बहुबाहुना ॥ १ ॥ अनिरुद्धोद्वहेऽन्यस्मिन् बाणयादवसंयुगे ॥ श्रीकृष्णः श्रीहरं जित्वा

बाणबाहूनथाच्छिनत् ॥ २–४ ॥ पुराधिपं पुरपालकम् ॥ ५ ॥ ६ ॥ कामान्पूरयतीति कामपूरः स चासावमरांघ्रिपः कल्पतरुस्तं त्वाम् ॥ ७ ॥ ८ ॥ हे आद्य । निभृतैर्भरितैर्दोर्भिरद्रींश्चूर्णयन् अयामगच्छम् ॥ ९ ॥ १० ॥ स्ववीर्यस्य नशनं नाशनं केतुभंगं प्रतीक्षमाणः ॥ ११ ॥ श्रीमहेशादिष्टसंग्रामस्य प्रसंगमाह । तस्योषेति । प्राद्युम्निनाऽनिरुद्धेन । तत्रापि स्वप्ने ॥१२॥ तं कांत-

किरीटेनार्कवर्णेन संस्पृशंस्तत्पदांबुजम् ॥ ६ ॥ नमस्ये त्वां महादेव लोकानां गुरुमीश्वरम् ॥ पुंसामपूर्णकामानां कामपूरामरांघ्रिपम् ॥ ७ ॥ दोःसहस्रं त्वया दत्तं परं भाराय मेऽभवत् ॥ त्रिलोक्यां प्रतियोद्धारं न लभे त्वदृते समम् ॥ ८ ॥ कंडूत्या निभृतैर्दोर्भिर्युयुत्सुर्दिग्गजानहम् ॥ आद्यायां चूर्णयन्नद्रीन्भीतास्तेऽपि प्रदुद्रुवुः ॥ ९ ॥ तच्छ्रुत्वा भगवान्क्रुद्धः केतुस्ते भज्यते यदा ॥ त्वद्दर्पघ्नं भवेन्मूढ संयुगं मत्समेन ते ॥ १० ॥ इत्युक्तः कुमतिर्हृष्टः स्वगृहं प्राविशन्नृप ॥ प्रतीक्षन्गिरिशादेशं स्ववीर्यनशनं कुधीः ॥ ११ ॥ तस्योषा नाम दुहिता स्वप्ने प्राद्युम्निना रतिम् ॥ कन्याऽलभत कांतेन प्रागदृष्टश्रुतेन सा ॥ १२ ॥ सा तत्र तमपश्यंती क्वासि कांतेति वादिनी ॥ सखीनां मध्य उत्तस्थौ विह्वला व्रीडिता भृशम् ॥१३॥ बाणस्य मंत्री कुंभांडश्चित्रलेखा च तत्सुता ॥ सख्यपृच्छत्सखीमूषां कौतूहलसमन्विता ॥ १४ ॥ कं त्वं मृगयसे सुभ्रूः कीदृशस्ते मनोरथः ॥ हस्तग्राहं न तेऽद्यापि राजपुत्र्युपलक्षये ॥ १५ ॥ ऊषोवाच ॥ दृष्टः कश्चिन्नरः स्वप्ने श्यामः कमललोचनः ॥ पीतवासा बृहद्बाहुर्योषितां हृदयंगमः ॥ १६ ॥ तमहं मृगये कांतं पाययित्वाऽधरं मधु ॥ क्वापि यातः स्पृहयतीं क्षिप्त्वा मां वृजिनार्णवे ॥ १७ ॥ चित्रलेखोवाच ॥ व्यसनं तेऽपकर्षामि त्रिलोक्यां यदि भाव्यते ॥ तमानेष्ये नरं यस्ते मनोहर्ता तमादिश ॥ १८ ॥ इत्युक्त्वा देवगंधर्वसिद्धचारणपन्नगान् ॥ दैत्यविद्याधरान्यक्षान्मनुजाँश्च तथाऽलिखत् ॥ १९ ॥ मनुजेषु च सा वृष्णीन् शूरमानकदुंदुभिम् ॥ व्यलिखद्रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता ॥२०॥ अनिरुद्धं विलिखितं वीक्ष्योषाऽवाङ्मुखी ह्रिया ॥ सोऽसावसाविति प्राह स्मयमाना महीपते ॥२१॥ चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी ॥ ययौ विहायसा राजन्द्वारकां कृष्णपालिताम् ॥ २२ ॥ तत्र सुप्तं सुपर्यंके प्राद्युम्निं योगमास्थिता ॥ गृहीत्वा शोणितपुरं सख्यै प्रियमदर्शयत् ॥२३॥ सा च तं सुन्दरवरं विलोक्य मुदितानना ॥ दुष्प्रेक्ष्ये स्वगृहे पुंभी रेमे प्राद्युम्निना समम् ॥ २४ ॥ परार्ध्यवासःस्रग्गंधधूपदीपासनादिभिः ॥ पानभोजनभक्ष्यैश्च वाक्यैः शुश्रूषयाऽर्चितः ॥ २५ ॥ गूढः कन्यापुरे शश्वत्प्रवृद्धस्नेहया तया ॥ नाहर्गणान्स बुबुधे ऊषयाऽपहृतेंद्रियः ॥ २६ ॥ तां तथा यदुवीरेण भुज्यमानां

मपश्यंती सा उत्तस्थौ ॥ १३ ॥ ततः किं वृत्तं तत्राह । बाणस्येति ॥ १४ ॥ हस्तग्राहं भर्तारम् ॥ १५–१८ ॥ स्वप्ने त्वया दृष्ट एषां मध्ये को वा भवेदिति देवादीन्यथावत्पटेऽलिखत् ॥१९॥ प्रद्युम्नं लिखितं वीक्ष्य श्वशुरोऽयमिति लज्जिता ॥ २०–२२ ॥ शोणितपुरं नीत्वा ॥ २३ ॥ पुंभिर्दुष्प्रेक्ष्ये प्रेक्षितुमशक्ये ॥ २४ ॥ स च परार्ध्यैरमूल्यैर्वासःस्रगादिभिः शुश्रूषणपूर्वकमर्चितः सन्

॥ २५ ॥ तया ऊषयाऽपहृतेंद्रियोऽहर्गणान् दिनसमूहान्न बुबुधे ॥ २६ ॥ आप्रीतामतिहृष्टाम्। दुरवच्छदैश्छादयितुमशक्यैः ॥ २७ ॥ विचेष्टितं विरुद्धाचरणम् ॥ २८ ॥ अनपायिभिः अपायोऽपसर्पणं प्रमादो वा तद्रहितैः। पाठांतरे दुष्टा प्रेष्या सखी यस्यास्तस्याः पुंभिर्दूषणं कुतो वेति न जानीम इत्यर्थः ॥ २९ ॥ ३० ॥ कामस्यात्मनो देहाज्जातम् ॥३१॥ अभिनृम्णया सर्वमंगलया तस्या अंगसंगेन स्तनकुंकुमं यस्यां स्रजि तां बाह्वोर्मध्ये वक्षसि दधानम्। मधुमल्लिका वसंतभवा मल्लिकास्तदाश्रिताम्। तस्याग्र इत्यार्षः संधिः। तस्या अग्र इत्यर्थः ॥ ३२ ॥ आततायिभिरुद्यत-

हतव्रताम् ॥ हेतुभिर्लक्षयांचक्रुराप्रीतां दुरवच्छदैः ॥ २७ ॥ भटा आवेदयांचक्रू राजंस्ते दुहितुर्वयम् ॥ विचेष्टितं लक्षयामः कन्यायाः कुलदूषणम् ॥ २८ ॥ अनपायिभिरस्माभिर्गुप्तायाश्च गृहे प्रभो ॥ कन्याया दूषणं पुंभिर्दुष्प्रेक्षाया न विद्महे ॥२९॥ ततः प्रव्यथितो बाणो दुहितुः श्रुतदूषणः ॥ त्वरितः कन्यकागारं प्राप्तोऽद्राक्षीद्यदूद्वहम् ॥ ३० ॥ कामात्मजं तं भुवनैकसुंदरं श्यामं पिशंगांबरमंबुजेक्षणम् ॥ बृहद्भुजं कुंडलकुंतलत्विषा स्मितावलोकेन च मंडितानम् ॥ ३१ ॥ दीव्यंतमक्षैः प्रियया ऽभिनृम्णया तदंगसंगस्तनकुंकुमस्रजम् ॥ बाह्वोर्दधानं मधुमल्लिकाश्रितां तस्याग्र आसीनमवेक्ष्य विस्मितः ॥३२॥ स तं प्रविष्टं वृतमाततायिभिर्भटैरनीकैरवलोक्य माधवः ॥ उद्यम्य मौर्वं परिघं व्यवस्थितो यथांतको दंडधरो जिघांसया ॥३३॥ जिघृक्षया तान्परितः प्रसर्पतः शुनो यथा सूकरयूथपोऽहनत् ॥ ते हन्यमाना भवनाद्विनिर्गता निर्भिन्नमूर्धोरुभुजाः प्रदुद्रुवुः ॥३४॥ तं नागपाशैर्बलिनंदनो बली घ्नंतं स्वसैन्यं कुपितो बबंध ह ॥ ऊषा भृशं शोकविषादविह्वला बद्धं निशम्याश्रुकलाक्ष्यरौदिषीत् ॥३५॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे अनिरुद्धवधो नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥ श्रीशुक उवाच ॥ अपश्यतां चानिरुद्धं तद्बंधूनां च भारत ॥ चत्वारो वार्षिका मासा व्यतीयुरनुशोचताम् ॥ १ ॥ नारदात्तदुपाकर्ण्य वार्तां बद्धस्य कर्म च ॥ प्रययुः शोणितपुरं वृष्णयः कृष्णदेवताः ॥ २ ॥ प्रद्युम्नो युयुधानश्च गदः सांबोऽथ सारणः ॥ नंदोपनंदभद्राद्या रामकृष्णानुवर्तिनः ॥३॥ अक्षौहिणीभिर्द्वादशभिः समेताः सर्वतो दिशम् ॥ रुरुधुर्बाणनगरं समंतात्सात्वतर्षभाः ॥ ४ ॥ भज्यमानपुरोद्यानप्राकाराट्टालगोपुरम् ॥ प्रेक्षमाणो रुषाविष्टस्तुल्यसैन्योऽभिनिर्ययौ ॥ ५ ॥ बाणार्थे भगवान् रुद्रः ससुतैः प्रमथर्वृतः ॥ आरुह्य नंदिवृषभं युयुधे रामकृष्णयोः ॥ ६ ॥ आसीत्सुतुमलं युद्धमद्भुतं रोमहर्षणम् ॥ कृष्णशंकरयो राजन्प्रद्युम्नगुहयोरपि ॥ ७ ॥ कुम्भांडकूपकर्णाभ्यां बलेन सह संयुगः ॥ सांबस्य बाणपुत्रेण बाणेन सह सात्यकेः ॥ ८ ॥ ब्रह्मादयः सुराधीशा मुनयः सिद्धचारणाः ॥

शस्त्रैः। माधवोऽनिरुद्धः। मौर्वं मुरुर्लोहविशेषस्तन्निर्मितम् ॥ ३३ ॥ ३४ ॥ शोकविषादाभ्यां विह्वला अवशा। अश्रूणां कला बिंदवो ययोस्ते अक्षिणी यस्याः सा ॥ ३५ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे टीकायां द्विषष्टितमोऽध्यायः ॥ ६२ ॥ त्रियुक्षष्टितमे चाथ बाणयादवसंगरे ॥ स्तुतिर्ज्वरेण रुद्रेण बाणबाहुभिदो हरेः ॥ १ ॥ १ ॥ कर्म च युद्धादिकम् ॥२॥ रामकृष्णानुवर्तिन इति। तौ पुरतो निर्गतावित्यर्थः ॥३॥ सर्वतो दिशमित्यस्योत्तरेणान्वयः ॥ ४ ॥ भज्यमानानि पुरोद्यानादीनि। द्वंद्वैकवद्भावः। अट्टालाः प्राकारादुपरितनान्युन्नतस्थानानि। अभिनिर्ययौ

बाणः ॥ ५ ॥ सुतः स्कंदस्तत्सहितैः प्रमथैर्गणैः । रामकृष्णाभ्यां युयुधे ॥ ६–१२ ॥ प्रत्यस्त्राण्येवाह। ब्रह्मास्त्रस्येति । नैजं नारायणास्त्रम् ॥ १३ ॥ १४ ॥ शिखिना मयूरेण वाहनेन ॥१५॥ तयोरनीकानि । हतौ नाथौ येषां तानि ॥१६–२०॥ अनिरीक्षमाणस्तिर्यङ्मुखो बभूवेति ॥ २१ ॥ ज्वरस्तु योद्धुमभ्यधावदिति ॥ २२ ॥ श्रीनारायणः शीतज्वरमसृजत् ॥ २३ ॥ माहेश्वरः समाक्रंदन्युयुधे ॥२४॥ आत्मानं परमशक्तिमंतं मन्यमानः श्रीकृष्णं तापयितुं प्रवृत्तः स्वयमेव तप्तः संस्तं परमेश्वरं ज्ञात्वा स्तुवन्नमस्करोति । नमामीति । त्वा त्वामनंतशक्तिं नमामि । कुतः । परेषां ब्रह्मादीनामीशम् । तत्र हेतुः । सर्वात्मानं सर्वस्यात्मानं चेतयितारम् । तत्कुतः । केवलं शुद्धं ज्ञप्तिमात्रं चैतन्यघनम्। तदेवं सर्वचेतयितृत्वेन परमेश्वरत्वमुक्तम् । किंच विश्वसृष्ट्यादिहेतुत्वा-

गंधर्वाप्सरसो यक्षा विमानैर्द्रष्टुमागमन् ॥ ९ ॥ शंकरानुचरान् शौरिर्भूतप्रमथगुह्यकान् ॥ डाकिनीर्यातुधानाँश्च वेतालान्सविनायकान् ॥ १० ॥ प्रेतमातृपिशाचाँश्च कूष्मांडान्ब्रह्मराक्षसान् ॥ द्रावयामास तीक्ष्णाग्रैः शरैः शार्ङ्गधनुश्च्युतैः ॥११॥ पृथग्विधानि प्रायुंक्त पिनाक्यस्त्राणि शार्ङ्गिणे ॥ प्रत्यस्त्रैः शमयामास शार्ङ्गपाणिरविस्मितः ॥ १२ ॥ ब्रह्मास्त्रस्य च ब्रह्मास्त्रं वायव्यस्य च पार्वतम् ॥ आग्नेयस्य च पार्जन्यं नैजं पाशुपतस्य च ॥ १३ ॥ मोहयित्वा तु गिरिशं जृम्भणास्त्रेण जृम्भितम् ॥ बाणस्य पृतनां शौरिर्जघानासिगदेषुभिः ॥१४॥ स्कंदः प्रद्युम्नबाणौघैरर्द्यमानः समंततः ॥ असृग्विमुंचन्गात्रेभ्यः शिखिनाऽपाक्रमद्रणात् ॥ १५ ॥ कुंभांडः कूपकर्णश्च पेततुर्मुसलार्दितौ ॥ दुद्रुवुस्तदनीकानि हतनाथानि सर्वतः ॥ १६ ॥ विशीर्यमाणं स्वबलं दृष्ट्वा बाणोऽत्यमर्षणः ॥ कृष्णमभ्यद्रवत्संख्ये रथी हित्वैव सात्यकिम् ॥ १७ ॥ धनूंष्याकृष्य युगपद्बाणः पंच शतानि वै ॥ एकैकस्मिञ्छरौ द्वौ द्वौ संदधे रणदुर्मदः ॥ १८ ॥ तानि चिच्छेद भगवान्धनूंषि युगपद्धरिः ॥ सारथिं रथमश्वाँश्च हत्वा शंखमपूरयत् ॥१९॥ तन्माता कोटरा नाम नग्ना मुक्तशिरोरुहा ॥ पुरोऽवतस्थे कृष्णस्य पुत्रप्राणरिरक्षया ॥ २० ॥ ततस्तिर्यङ्मुखो नग्नामनिरीक्षन्गदाग्रजः ॥ बाणश्च तावद्विरथश्छिन्नधन्वाऽविशत्पुरम् ॥ २१ ॥ विद्राविते भूतगणे ज्वरस्तु त्रिशिरास्त्रिपात् ॥ अभ्यधावत दाशार्हं दहन्निव दिशो दश ॥२२॥ अथ नारायणो देवस्तं दृष्ट्वा व्यसृजज्ज्वरम् ॥ माहेश्वरो वैष्णवश्च युयुधाते ज्वरावुभौ ॥ २३ ॥ माहेश्वरः समाक्रंदन्वैष्णवेन बलार्दितः ॥ अलब्ध्वाऽभयमन्यत्र भीतो माहेश्वरो ज्वरः ॥ शरणार्थी हृषीकेशं तुष्टाव प्रयतांजलिः ॥ २४ ॥ ज्वर उवाच ॥ नमामि त्वाऽनंतशक्तिं परेशं सर्वात्मानं केवलं ज्ञप्तिमात्रम् ॥ विश्वोत्पत्तिस्थानसंरोधहेतुं यत्तद्ब्रह्म ब्रह्मलिंगं प्रशांतम् ॥ २५ ॥ कालो दैवं कर्म जीवः स्वभावो द्रव्यं क्षेत्रं प्राण आत्मा विकारः ॥ तत्संघातो

दपीत्याह । विश्वोत्पत्तीति । नन्वेवंभूतं ब्रह्म प्रसिद्धं नाहमिति तत्राह । यत्तद्ब्रह्मेति। यद्ब्रह्म तदेव त्वमित्यर्थः । किं तद्ब्रह्मेत्यत आह। ब्रह्मलिंगं ब्रह्मणा वेदेन लिंग्यते द्योत्यत इति । तत्कुतः । प्रशांतम् । सर्वविक्रियारहितत्वान्न साक्षाद्वाच्यमिति भावः ॥२५॥ किंच । यत्सविशेषं वस्तु तत्र वयं प्रभवामस्त्वयि तु सर्वविशेषातीते न कस्यापि प्रभुत्वं किंतु त्वमेव सर्वप्रभुरिति ज्ञप्तिमात्रत्वं विवृण्वन्स्तौति । काल इति। कालः क्षोभकः । कर्म निमित्तम् । तदेव फलाभिमुखमभिव्यक्तं दैवं स स्वभावस्तत्संस्कारः । जीवस्तद्वान् । द्रव्यं भूतसूक्ष्माणि । क्षेत्रं शरीरम् । प्राणः सूत्रम् ।

बंधुरपि श्रीर्भार्याऽपि अजः पुत्रोऽपि ॥ ३२ ॥ ३३ ॥ तच्छांत्यै संसारोपशमाय ॥ ३४ ॥ ३५ ॥ गृहेष्वित्यर्थः ॥ ३६ ॥ ३७ ॥ धुन्वन्परिश्रमयन् ॥ ३८ ॥ अवनिजे अवनिनिजे प्रक्षालितवान् ॥ ३९ ॥ ४० ॥ फलैरामलकादिभिरर्हणेनोशीरैस्तृणविशेषमूलैः सुवासितैः शिवैरमृतवत्स्वादुभिरंबुभिः सुरभ्या मृदा कस्तूरीप्रमुखया पूजया यथोपपन्नयाऽनायासेन संपन्नया। भूतानुपद्रवलब्धत्वात् । सत्त्वविवर्धनं यदंधोऽन्नं तेन च ॥४१॥ अस्य श्रीकृष्णस्यात्मा मूर्तिस्तस्य निकेतैः स्थानविशेषैर्भूसुरैश्च सर्वतीर्थास्पदपादरेणुभिः कृष्णादिभिर्यः संगमः स मम कुतोऽन्वभूदिति । अनु इति विस्मये । यद्वा । आ इति वितर्के । नु इति विस्मये ॥४२॥ उपस्थितः समीप उपविष्टः । भार्या भर्तव्याः स्वजना अपत्यानि च तैः सहितः । श्रीकृष्णस्यांघ्रिमभिमृशति संमर्दयतीत्यंघ्र्यभिमर्शनः ॥४३॥ यर्हीदं प्रविष्टस्तदैव दर्शनं प्राप्त इति स एव सन्मात्रो नाद्यतनीभूतस्त्वमित्यर्थः । यद्वा । नोऽस्माभिरद्यैव प्राप्त इति न किंतु तदैव प्राप्तो यर्हीदं विश्वं स्वशक्तिभिः सत्त्वादिभिः सृष्ट्वा स्वसत्तयाऽनुप्रविष्टस्त्वम् । त्वद्दर्शनं तु परं केवलमद्यैव प्राप्तम् ॥४४॥ मायासृष्टिप्रवेशयोरविद्यासृष्टिप्रवेशौ दृष्टांततयाऽऽह । यथेति । आत्ममायया स्वाविद्यया । यद्वा । आत्मनस्तव माययेति

स्नापयांचक्र उद्धर्षो लब्धसर्वमनोरथः ॥ ४० ॥ फलार्हणोशीरशिवामृताम्बुभिर्मृदा सुरभ्या तुलसीकुशाम्बुजैः ॥ आराधयामास यथोपपन्नया सपर्यया सत्त्वविवर्धनांधसा ॥ ४१ ॥ स तर्कयामास कुतो ममान्वभूद्गृहांधकूपे पतितस्य संगमः ॥ यः सर्वतीर्थास्पदपादरेणुभिः कृष्णेन चास्यात्मनिकेतभूसुरैः ॥ ४२ ॥ सूपविष्टान्कृतातिथ्याञ्छ्रुतदेव उपस्थितः॥ सभार्यः स्वजनापत्य उवाचांघ्र्यभिमर्शनः ॥ ४३ ॥ श्रुतदेव उवाच ॥ नाद्य नो दर्शनं प्राप्तः परं परमपुरुषः ॥ यर्हीदं शक्तिभिः सृष्ट्वा प्रविष्टो ह्यात्मसत्तया ॥ ४४ ॥ यथा शयानः पुरुषो मनसैवात्ममायया ॥ सृष्ट्वा लोकं परं स्वाप्नमनुविश्यावभासते ॥ ४५ ॥ शृण्वतां गदतां शश्वदर्चतां त्वाऽभिवंदता ॥ नृणां संवदतामंतर्हृदि भास्यमलात्मनाम् ॥ ४६ ॥ हृदिस्थोऽप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम् ॥ आत्मशक्तिभिरग्राह्योऽप्यंत्युपेतगुणात्मनाम् ॥ ४७ ॥ नमोऽस्तु तेऽध्यात्मविदां परात्मने अनात्मने स्वात्मविभक्तमृत्यवे ॥ सकारणाकारणलिंगमीयुषे स्वमायया संवृत रुद्धदृष्टये ॥ ४८ ॥ स त्वं शाधि स्वभृत्यान्नः किं देव करवामहे ॥ एतदंतो नृणां क्लेशो यद्भवानक्षगोचरः ॥ ४९ ॥ श्रीशुक उवाच ॥ तदुक्तमित्युपाकर्ण्य भगवान्प्रणतार्तिहा ॥ गृहीत्वा पाणिना पाणिं प्रहसँस्तमुवाच ह॥ ५० ॥ श्रीभगवानु-

॥ ४५ ॥ किंच । शृण्वतामिति । नित्यं श्रवणकीर्तनादिपराणाममलात्मनापि हृद्येव त्वं भासि । मम तु लोचनगोचरस्त्वमहोभाग्यमिति भावः ॥ ४६ ॥ ननु सर्वेषां हृदि स्थितः कथं केषांचिदेव हृदि भासि । मेघैः सूर्यवज्जीवोपाधिभिराहृतत्वादिति यद्युच्यते तर्हि न कस्यापि भायादित्यत आह । हृदिस्थोऽपीति । कर्मभिर्विक्षिप्तं चेतो येषां तेषामात्मशक्तिभिरहंकारादिभिर्ग्राह्यो व्यवहितोऽप्युपेतगुणः प्राप्तश्रवणकीर्तनादिसंस्कार आत्मा अन्तःकरणं येषां तेषामंति समीपे । अव्यवहितस्त्वमित्यर्थः ॥४७॥ एतदेव प्रपंचयन्नमस्यति । नमोऽस्त्विति । ते तुभ्यं नमोऽस्तु अध्यात्मविदां निवृत्तदेहाद्यहंकाराणां परमात्मने परमात्मत्वेन प्रकाशमानाय मोक्षप्रदायेत्यर्थः । आत्मने देहाद्यभिमानिने जीवाय परत्वेनाप्रकाशमानत्वात् । स्वात्मनः सकाशाद्विभक्तः समर्पितो मृत्युः संसारो येन तस्मै । कुत एतत्तत्राह । सकारणं महदादिकार्यमकारणं प्रकृतिस्तदुभयलिंगमुपाधिं नियम्यतया ईयुषे प्राप्तवते । अत उभयनियंतुः स्वस्मात्सकाशात्तदुभयवश्याय जीवाय विभक्तमृत्यव इत्यर्थः । नियं तृनियम्यत्वे कारणं वदन्नाह । हे स्वमायया संवृतेति । अतोऽलुप्तैश्वर्यत्वान्नियंत्रे तुभ्यं नमः । किंच रुद्धदृष्टये मायावित्वादेवान्येषां रुद्धा आवृता दृष्टिर्येन तस्मै । यद्वा । स्वमायया स्वस्या मायया संवृता अन्येषां रुद्धा

दृष्टिर्येन तस्मै इत्येकं पदम् ॥ ४८ ॥ स एवंभूतः परमेश्वरस्त्वं नोऽस्मान्स्वभृत्यान शाध्यनुशिक्षय ॥४९॥५०॥ स्वस्मिन्नादरमत्यधिकं ब्राह्मणेषु मंदमिवालक्ष्य लोकसंग्रहपरो भगवान्मत्तोऽपि ब्राह्मणेषु श्रद्धातिरेकं कुर्वित्येवं तमनुशास्ति । ब्रह्मन्निति सप्तभिः । मया हृदि स्थितेन ॥५१॥ देवादिभ्योऽपि ब्राह्मणाः श्रेष्ठा इत्याह । देवा इति । ते शनैः पुनंति एते तु सद्यः । किंच देवादीनि यत्पुनंति तदप्यर्हत्तमानामीक्षया ॥५२॥ मम कलापरिकलनमुपास्तिस्तया युतः ॥ ५३ ॥ किंच ब्राह्मणाराधनमेव मम प्रेष्ठमित्याह । नेति । हेतुमाह । सर्ववेदमयो विप्र इति । प्रणामाधीनत्वात्प्रमेयस्य वेदमयो विप्रो देवमयादस्माद्रूपात्प्रेष्ठ इत्यर्थः ॥ ५४ ॥ असूयवो दोषदृष्टयः । इज्यदृष्टयः पूज्यबुद्धयः ॥ ५५ ॥ अस्य विश्वस्य हेतवो भावा महदादयः । मदीक्षया ममैव सर्वत्रेक्षया ॥ ५६–५८ ॥ सतां वेदानां त्रिकांडविषयाणां प्रवृत्तिप्रकारमादिश्य ॥ ५९ ॥ इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे टीकायां षडशीतितमोऽध्यायः ॥८६॥ सप्ताशीतितमे नारायणनारदवादतः ॥ वेदैः स्तुतिर्गुणालंबा निर्गुणावधि वर्ण्यते ॥ १ ॥ वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि ॥ यस्यास्ते हृदये संवित्तं नृसिंहमहं भजे ॥२॥ संप्रदायविशुद्ध्यर्थं स्वीयनिर्बंधयंत्रितः ॥

वाच ॥ ब्रह्मँस्तेऽनुग्रहार्थाय संप्राप्तान्विद्ध्यमून्मुनीन् ॥ संचरंति मया लोकान्पुनंतः पादरेणुभिः ॥ ५१ ॥ देवाः क्षेत्राणि तीर्थानि दर्शनस्पर्शनार्चनैः ॥ शनैः पुनंति कालेन तदप्यर्हत्तमेक्षया ॥ ५२ ॥ ब्राह्मणो जन्मना श्रेयान्सर्वेषां प्राणिनामिह ॥ तपसा विद्यया तुष्ट्या किमु मत्कलया युतः ॥ ५३ ॥ न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम् ॥ सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम् ॥ ५४ ॥ दुष्प्रज्ञा अविदित्वैवमवजानंत्यसूयवः ॥ गुरुं मां विप्रमात्मानमर्चादाविज्यदृष्टयः ॥ ५५ ॥ चराचरमिदं विश्वं भावा ये चास्य हेतवः ॥ मद्रूपाणीति चेतस्याधत्ते विप्रो मदीक्षया ॥ ५६ ॥ तस्माद्ब्रह्मऋषीनेतान्ब्रह्मन्मच्छ्रद्धयाऽर्चय ॥ एवं चेदर्चितोऽस्म्यद्धा नान्यथा भूरिभूतिभिः ॥ ५७ ॥ श्रीशुक उवाच ॥ स इत्थं प्रभुणादिष्टः सहकृष्णान्द्विजोत्तमान् ॥ आराध्यैकात्मभावेन मैथिलश्चाप सद्गतिम् ॥५८॥ एवं स्वभक्तयो राजन्भगवान्भक्तभक्तिमान् ॥ उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥ ५९ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे श्रुतदेवानुग्रहो नाम षडशीतितमोऽध्यायः ॥८६॥ परीक्षिदुवाच ॥ ब्रह्मन्ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ॥ कथं चरंति श्रुतयः साक्षात्सदसतः परे ॥ १ ॥ श्रीशुक उवाच ॥ बुद्धींद्रियमनःप्राणान् जनानामसृजत्प्रभुः ॥

श्रुतिस्तुतिमितव्याख्यां करिष्यामि यथामति ॥ ३ ॥ श्रीमद्भागवतं पूर्वैः सारतः सन्निषेवितम् ॥ मया तु तदुपस्पृष्टमुच्छिष्टमुपचीयते ॥४॥ पूर्वाध्यायांते–एवं स्वभक्तयो राजन्भगवान्भक्तभक्तिमान् ॥ उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगादित्यत्र सन्मार्गं सतां स्वतःप्रमाणभूतानामप्रामाण्यकारणरहितानां मार्गं ब्रह्मपरत्वमुपदिश्य भगवानगादित्युक्तं तत्र वेदानां ब्रह्मपरत्वमघटमानं मन्वानः पृच्छति । ब्रह्मन्निति । तत्र तावन्मुख्यालक्षणागुणभेदेन त्रिधा शब्दप्रवृत्तिः । मुख्यापि रूढियोगभेदेन द्विधा । रूढिश्च स्वरूपेण जात्या गुणेन वा निर्देशार्हे वस्तुनि संज्ञासंज्ञिसंकेतेन प्रवर्तते । यथा डित्थो गौः शुक्ल इति । लक्षणा च तेनैव संकेतेनाभिहितार्थसंबंधिनि । यथा गङ्गायां घोष इति । गौणी चाभिहितार्थलक्षितगुणयुक्ते तत्सदृशे । यथा सिंहो देवदत्त इति । यथाऽऽहुः । अभिधेयाविनाभूतप्रवृत्तिर्लक्षणेष्यते ॥ लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणतेति योगवृत्तिस्तु एतत्त्रिविधवृत्तिप्रतिपादितपदार्थयोः प्रकृतिप्रत्ययार्थयोर्वा योगेन । यथा पङ्कजमौपगवः पाचक इत्यादि । तत्र तावद्ब्रह्मणि रूढिवृत्तिर्न संभवतीत्याह । साक्षात्कथं चरंतीति । तत्र हेतुः । अनिर्देश्ये । अनिर्देश्यत्वेऽपि हेतुं वदन्गुणवृत्तिं निराकरोति । निर्गुणे गुणवृत्तय इति । गुणैर्वर्तमानाऽपि निर्गुणे

कथं चरंतीत्यर्थः। निर्गुणत्वे च हेतुं वदन् लक्षणां योगं च निराकरोति। सदसतः पर इति। कार्यकारणाभ्यां परस्मिन्नसंगे केनचिदपि संबंधाभावान्न लक्षणायोगवृत्ती संभवत इत्यर्थः। एवं पदार्थत्वायोगादपदार्थस्य च वाक्यार्थत्वायोगान्न श्रुतिगोचरत्वं ब्रह्मण इत्यभिप्रायः ॥१॥ उत्तरमाह। बुद्धींद्रियेति। बुद्ध्यादीनुपाधीन्। जनानामनुशायिनां जीवानां मात्राद्यर्थं प्रभुरीश्वरोऽसृजत्। मीयंत इति मात्रा विषयास्तदर्थम्। भवार्थं भवो जन्मलक्षणं कर्म। तत्प्रभृति कर्मकरणार्थमित्यर्थः। आत्मने लोकांतरगामिने। आत्मनस्तल्लोकभोगायेत्यर्थः। अकल्पनाय कल्पनानिवृत्तये मुक्तय इत्यर्थः। अर्थधर्मकाममोक्षार्थमिति क्रमेण पदचतुष्टयस्यार्थः जनानामिति वदन् जीवार्थमीश्वरस्य सृष्ट्यादिषु प्रवृत्तिरिति दर्शयति। प्रभुरितीश्वरस्योपाधिवश्यताभावेन नित्यमुक्ततां दर्शयति। अयमभिप्रायः। सगुणमेव गुणैरनभिभूतं सर्वज्ञं सर्वशक्ति सर्वेश्वरं सर्वनियंतारं सर्वोपास्यं सर्वकर्मफलप्रदातारं समस्तकल्याणगुणनिलयं सच्चिदानंदं भगवंतं श्रुतयः प्रतिपादयंति। यः सर्वज्ञः स सर्ववित्। यस्य ज्ञानमयं तपः। सर्वस्य वशी सर्वस्येशानः। यः पृथिव्यां तिष्ठन्पृथिव्या आंतरः। सोऽकामयत बहु स्याम्। स ऐक्षत तत्तेजोऽसृजत्। सत्यं ज्ञानमनंतं ब्रह्मेत्याद्याः। तथाभूतेश्वरतां तावत्संसारिणो जीवस्य तन्निवृत्तये तत्त्वमसीत्यादिवाक्यानि बोधयंति। तत्र च तत्त्वंपदयोः सामानाधिकरण्यं प्रतीयते। तच्च प्रकारांतरेणाघटमानं ब्रह्मणि पर्यवसानं गमयति। तथाहि। न तावद्वैश्वदेव्यामिक्षेतिवदुभयोरेकार्थाभिधानेन सामानाधिकरण्यम्। यथोक्तम्। आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः॥ आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणमिति। कुतः। भिन्नार्थत्वात् न

मात्राऽर्थं च भावार्थं च आत्मनेऽकल्पनाय च ॥ २ ॥ सैषा ह्युपनिषद्ब्राह्मी पूर्वेषां पूर्वजैर्धृता ॥ श्रद्धया धारयेद्यस्तां क्षेमं गच्छेदकिंचनः ॥ ३ ॥
अत्र ते वर्णयिष्यामि गाथां नारायणान्विताम् ॥ नारदस्य च संवादमृषेर्नारायणस्य च ॥ ४ ॥ एकदा नारदो लोकान्पर्यटन्भगवत्प्रियः ॥
सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम् ॥ ५ ॥ यो वै भारतवर्षेऽस्मिन्क्षेमाय स्वस्तये नृणाम् ॥ धर्मज्ञानशमोपेतमाकल्पादास्थितस्तपः ॥ ६ ॥
तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः ॥ परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह ॥ ७ ॥ तस्मै ह्यवोचद्भगवानृषीणां शृण्वतामिदम् ॥ यो ब्रह्मवादः
पूर्वेषां जनलोकनिवासिनाम् ॥८॥ श्रीभगवानुवाच ॥ स्वायंभुव ब्रह्मसत्रं जनलोकेऽभवत्पुरा ॥ तत्रस्थानां मानसानां मुनीनामूर्ध्वरेतसाम् ॥ ९ ॥

चाजहत्स्वार्थया निरूढलक्षणया विशेषणविशेष्यभावेन नीलमुत्पलमितिवत्। यथोक्तम्। स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणमित्यादि। कुतः। विरुद्धार्थत्वेन तदयोगात्। न च जहत्स्वार्थन्वेन संबंधिलक्षणया कुसुमितद्रुमा गंगेतिवत्। कुतः। एकार्थत्वस्य विवक्षितत्वात्। अतो जहदजहत्स्वार्थलक्षणया सोऽयं देवदत्त इतिवद्विरुद्धांशत्यागेनानुगतचिदंशेनैकार्थेन सामानाधिकरण्येन निर्गुणे पर्यवसानम्। अस्थूलादिवाक्यानां तु साक्षादुपाधिनिषेधेन तत्पदार्थशोधन उपयोगान्निर्गुण एव पर्यवासनम्। तथा चात्रैवोपक्रमे स्वसृष्टमिदमापीयेत्यादिना विशिष्टमालंबनं वक्ष्यति। अंते च श्रुतयस्त्वयि हि फलंत्यतन्निरसनेन भवन्निधना इत्युपसंहरिष्यंति। उपासनादिवाक्यानां तु क्रियार्थप्रवृत्तसृष्ट्याद्यवलंबेन ज्ञानसाधनविधानेन तत्परत्वमित्येषा दिक् ॥ २ ॥ अत्र चानादिशिष्टपरंपरागतत्वान्न संदेहो युक्त इत्याह। सैषेति। सैषा यथोक्तालंबना ब्राह्मी ब्रह्मपरा। श्रद्धया आदरेण वैतंडिकतर्कानभिनिवेशेन यः श्रवणादिना धारयेत्स अकिंचनो निरस्तदेहाद्युपाधिः सन् परं पदं प्राप्नुयादिति ॥ ३ ॥ एतदेव सर्वश्रुत्यर्थनिरूपणेन प्रपञ्चयितुमितिहासमवतारयति। अत्रेति। नारायणान्वितां नारायणः प्रवक्तृत्वेनान्वितो यस्यां ताम्। गाथामितिहासम् ॥ ४–८ ॥ ब्रह्मसत्रमिति। यथा यजमाना एव समाना ऋत्विगादिरूपेण यत्र कर्म कुर्वंति तत्कर्म सत्रं प्रसिद्धम्। तथा यत्र समाना एव वक्तृश्रोतृभावेन ब्रह्म मीमांसंते तद्ब्रह्मसत्रम् ॥ ९ ॥ अहो!

तर्हि मया कथं तन्न ज्ञातमित्यत आह । श्वेतद्वीपमिति । तदीश्वरं तत्रस्थं मामेवानिरुद्धमूर्तिम् ॥१०॥ ननु सर्वज्ञास्ते कस्तत्र वक्ता प्रष्टा वा तत्राह । तुल्यश्रुतेति । श्रुतादिभिरविशेषा अरिमित्रो-
दासीनहीनत्वेन निरुपमकरुणा अतः सर्वे प्रवचनयोग्या अपि केनापि कौतुकेनैकं प्रवक्तारं कृत्वाऽन्ये पप्रच्छुरित्यर्थः ॥ ११ ॥ स्वसृष्टमिति । स्वयं निर्मितमिदं विश्वं प्रलयसमये आपीय संहृत्य
शयानं योगेन निद्राणमिव वर्तमानं तदंते प्रलयांते तल्लिंगैस्तत्प्रतिपादकैर्वाक्यैः परमीश्वरं सृष्टिसमये प्रथमनिःश्वासभूताः श्रुतयः प्रबोधयामासुः ॥१२॥ सुश्लोकैः शोभनाः श्लोकाः कीर्तयो येषु
तैः पराक्रमैः ॥१३॥ जय जयेति । भो अजित ! जय जय उत्कर्षमाविष्कुरु । आदरे वीप्सा । केन व्यापारेण । अगजगदोकसां अगानि स्थावराणि जगंति जंगमानि च ओकांसि शरीराणि
येषां जीवानां तेषामजामविद्यां जहि नाशय । किमिति गुणवती हंतव्येत्यत आह । दोषगृभीतगुणां दोषायानन्दाद्यावरणाय गृहीता गुणा यया ताम् । हृग्रहोर्भश्छंदसीति भकारः । इयं हि स्वैरि-
णीव परप्रतारणाय गुणान् गृह्णात्यतो हंतव्येति । तर्हि मय्यपि दोषमावहेदिति ममापि तत्र का शक्तिः स्यादत आह । त्वमिति । यद्यस्मात्त्वमात्मना स्वरूपेणैव समवरुद्धसमस्तभगः संप्राप्तसमस्तैश्वर्योऽ-
सि । वशीकृतमायत्वादिति भावः । ननु स्वयमेते ज्ञानवैराग्यादिना किं न हन्युरित्यत आह । अखिलशक्त्यवबोधकेति । तेषां त्वमेवांतर्यामी सर्वशक्त्युद्बोधकः । अतो न ते ज्ञानादौ स्वतंत्रा इति भावः ।
नन्वहमकुण्ठज्ञानैश्वर्यादिगुणो जीवानां कर्मज्ञानादिशक्त्यवबोधनेनाविद्याहंतेत्यत्र किं प्रमाणमिति चेदहमेव प्रमाणमित्याह । निगमो वेदः । नन्वेवंभूते मयि कथं श्रुतीनां प्रवृत्तिस्तत्राह । क्वचिदि-

श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम् ॥ ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते ॥ तत्र ह्ययमभूत्प्रश्नस्त्वं मां यमनुपृच्छसि ॥ १० ॥ तुल्यश्रुततपः-
शीलास्तुल्यस्वीयारिमध्यमाः ॥ अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे ॥ ११ ॥ सनंदन उवाच ॥ स्वसृष्टमिदमापीय शयानं सह शक्तिभिः ॥
तदंते बोधयांचक्रुस्तल्लिंगैः श्रुतयः परम् ॥१२॥ यथा शयानं सम्राजं बंदिनस्तत्पराक्रमैः ॥ प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयंत्यनुजीविनः ॥१३॥ श्रुतय
ऊचुः ॥ जय जय जह्यजामजितदोषगृभीतगुणां त्वमसि यदात्मना समवरुद्धसमस्तभगः ॥ अगजगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयात्मना
चरतोऽनुचरेन्निगमः ॥१४॥ बृहदुपलब्धमेतदवयंत्यवशेषतया यत उदयास्तमयौ विकृतेर्मृदि वाऽविकृतात् ॥ अत ऋषयो दधुस्त्वयि मनोवचनाचरितं
कथमयथा भवन्ति भुवि दत्तपदानि नृणाम् ॥ १५ ॥ इति तव सूरयस्त्र्यधिपतेऽखिललोकमलक्षपणकथाऽमृताब्धिमवगाह्य तपांसि जहुः ॥

ति । कदाचित्सृष्ट्यादिसमयेऽजया मायया च रतः । क्रीडतो नित्यं चालुप्तभगतया सत्यज्ञानानंतानंदैकरसेनात्मना च चरतो वर्तमानस्य निगमोऽनुचरेत्प्रतिपादयेत् । कर्मणि षष्ठ्यौ । यतो वा
इमानि भूतानि जायंते ॥ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदाँश्च प्रहिणोति तस्मै ॥ तं ह देवतात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ य आत्मनि तिष्ठन् ॥ सत्यं ज्ञानमनंतं ब्रह्म ॥ यः सर्वज्ञः
स सर्वविदित्यादिनिगमकदंबस्त्वामेवंभूतं प्रतिपादयतीत्यर्थः ॥ जय जयाजित जह्यगजंगमावृतिमजामुपनीतमृषागुणाम् ॥ न हि भयं तमृते प्रभवंत्यमी निगमगीतगुणार्णव तानव ॥१॥१४॥ ननु
कथं मामेवं प्रतिपादयंति । यतः इंद्रोयातोऽवसितस्य राजेत्यादिभिरिन्द्रो यातो जंगमस्यावसितस्य स्थावरस्य च राजेति प्रतिपाद्यते तथाग्निर्मूर्धादिवइत्यादिभिश्चैवंभूतत्वेनाग्न्यादयःप्रतिपाद्यंतेतत्राह ।
बृहदुपलब्धमेतदिति । अयमर्थः । एतदुपलब्धं दृष्टमिंद्रादिसर्वं बृहद्ब्रह्मत्वमित्येवावयंति जानंति । कथम् । बृहत एवावशेषतयाऽवशिष्यमाणत्वेन । कुतः । यतो बृहतः सर्वस्योदयास्तमयावुत्पत्तिलयौ
सर्वोपादानत्वात् । तर्हि किं विकारित्वं बृहतः । न । अविकृतात् । विवर्ताधिष्ठानत्वेनाविकारादित्यर्थः । वाशब्द उपमार्थः । यथा घटादेर्विकृतेर्मृदि उदयास्तमयौ तद्वत् । वाचारंभणं विकारो
नामधेयं मृत्तिकेत्येव सत्यम् ॥ सर्वं खल्विदं ब्रह्मेत्यादिभिस्तथा प्रतिपादनादित्यर्थः । अतः कारणादृषयो मंत्रास्तद्द्रष्टारो वा त्वय्येव मनोवचनाचरितं दधुः । मनसा आचरितं तात्पर्यं वचनाचरितम-

मिधानं च धृतवंतः । न पृथग्विकारेष्वित्यर्थः । अत्र निदर्शनम् । कथमयथेति । नृणां भूचराणां यत्र कुत्रापि दत्तानि निक्षिप्तानि पदानि भुवि कथमयथा भवंन्यदत्तानि भवंति । अतो यथा मृत्पाषाणेष्टकादिषु दत्तानि पदानि ध्रुवं न व्यभिचरन्ति । तथा यत्किमपि विकारजातं वदंतो वेदास्त्वामेव सर्वकारणं परमार्थभूतं प्रतिपादयंतीत्यर्थः । द्रुहिणवह्निरवींद्रमुखामरा जगदिदं न भवेत्पृथगुत्थितम् ॥ बहुमुखैरपि मंत्रगणैरजस्त्वमुरुमूर्तिरतो विनिगद्यसे ॥२॥१५॥ त्वमेव सर्वनिगमगोचर इति सतां प्रवृत्त्या द्रढयति । इति तवेति । त्वमेव सर्वकारणत्वेन परमार्थ इति कृत्वा भो ऽधिपते ! त्रिगुणमायामृगीनर्तक ! सूरयो विवेकिनस्तवाखिललोकमलक्षपणकथामृताब्धिं सकलजनवृजिननिरसनहेतुं कीर्तिसुधासिंधुमवगाह्य निषेव्य तपांसि तपंतीति तपांसि पापानि दुःखानि वा जहुस्त्यक्तवंतः । त्वदीयकथामात्रेण यद्वा पापत्यागस्तदा किमु वक्तव्यं ये पुनः स्वधामविधुताशयकालगुणाः । स्वधाम्ना स्वरूपस्फुरणेनैव विधुतास्त्यक्ता आशयगुणा अंतःकरणधर्मा रागादयः कालगुणा जरादयश्च यैस्ते तथा हे परम ! तवाजस्रसुखानुभवमखण्डानंदानुभवं पदं स्वरूपं भजंति सेवन्ते तथाभूता दुःखानि त्यजंतीति । तद्यथा पुष्करपलाश आपो न श्लिष्यंते एवमेवंविदि पापं कर्म न श्लिष्यते ॥ न कर्मणा लिप्यते पातकेन ॥ तत्सुकृतदुष्कृते विधुनुते ॥ एतं ह वाव न तपति ॥ किमहं साधु नाकरवम् ॥ किमहं पापमकरवमित्यादि श्रुतेरित्यर्थः ॥ सकलवेदगणेरितसद्गुण-स्त्वमिति सर्वमनीषिजना रताः ॥ त्वयि सुभद्र गुणश्रवणादिभिस्तव पदस्मरणेन गतक्लमाः ॥३॥१६॥ असुर्या नाम ते लोका अन्धेन तमसा वृताः । ताँस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ तथा च । न चेदवेदीन्महती विनष्टिः ॥ ये तद्विदुरमृतास्ते भवंत्यथेतरे दुःखमेवोपयंतीत्याद्याः श्रुतयः पूर्वश्लोकोक्तोभयविधभजनहीनान्निंदंति । दृतय इवेति । असुभृतो नरा यदि तं अनुविधा

किमुत पुनः स्वधामविधुताशयकालगुणाः परम भजन्ति ये पदमजस्रसुखानुभवम् ॥१६॥ दृतय इव श्वसन्त्यसुभृतो यदि तेऽनुविधा महदहमादयो-ऽण्डमसृजन्यदनुग्रहतः ॥ पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥१७॥ उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः

अनुविदधतीत्यनुविधा अनुवर्तिनो भक्ता इति यावत् । तर्हि श्वसंति जीवंति सफलजीवना भवंति । इतरथा दृतय इव भस्त्रा इव । वृथाश्वासा इत्यर्थः । नन्वभक्तानामपि कामादिफलमस्त्येव न कार्यकारणानुग्राहकत्वेन जीवनहेतोस्तवाभजने कृतघ्नानां तदपि न सिध्यदित्याशयेनाह । महदहमादय इति । महानहंकारश्चादिर्येषां ते यदनुग्रहतो यस्यानुप्रवेशेन लब्धसामर्थ्याः संतोऽण्डं देहं समष्टिव्यष्टिरूपं सृष्टवंतः । तत्र च पंचापि कोशानन्नमयादीनाविश्य तत्तदाकारः सन्यश्चेतयते स त्वं तदाह । पुरुषविध इति । पुरुषस्यान्नमयादेर्विधेव विधा आकारो यस्य स तथा । ननु चिदेकरसस्य कथं तत्तदाकारताऽत आह । अन्वयोऽत्रेति । अत्र एष्वन्नमयादिष्वन्वेतीत्यन्वयः । अतस्तत्तदाकारतेति । एवं तर्हि सत्यत्वमसंगत्वं च कथं तत्राह । चरमोऽन्नमयादिषु य इति । अन्न-मयादिषूपदिश्यमानेषु यश्चरमो ब्रह्मपुच्छं प्रतिष्ठेति पुच्छत्वेनोक्तः स त्वमिति संबंधः । ननु तथाप्यन्नमयादिष्वन्वित्वेऽसंगत्वव्याहतिरेव तत्राह । सदसतः परं त्वमथ यदेष्ववशेषमृतमिति । सद-सतः स्थूलसूक्ष्मादन्नमयादेः परं व्यतिरिक्तं तत्साक्षिभूतम् । अवशेषमवशिष्यत इत्यवशेषमबाध्यम् । अथात एव ऋतं सत्यम् । तर्हि किमर्थं तेष्वन्वय उक्तः । शाखाचंद्रवच्छुद्धस्वरूपलक्षणार्थम् । तथा हि स वा एष पुरुषोऽन्नरसमयस्तस्येदमेव शिर इत्यादिना स्थूलसूक्ष्मक्रमेण पञ्चकोशानुपदिश्य तस्य पुरुषविधतामन्वयं पुरुषविध इति । पुनः पुनस्तदन्वितत्वेनालक्ष्य ब्रह्मपुच्छं प्रतिष्ठेति सर्वसाक्षिशुद्ध-स्वरूपनिरूपणमित्यनवद्यम् । नरवपुः प्रतिपद्य यदि त्वयि श्रवणवर्णनसंस्मरणादिभिः ॥ नरहरे न भजति नृणामिदं दृतिवदुच्छ्वसितं विफलं ततः ॥४॥१७॥ एवं तावत्सर्वात्मके परमेश्वरे सर्व-श्रुतिसमन्वयेन सद्भजनीयत्वमुक्त्वाऽभक्तनिंदया च तदेव दृढीकृत्येदानीमनवगाह्यमहिमनि प्रथमं तावदुपाध्यालंबनमुपासनमुदरं ब्रह्मेति शार्कराक्षा उपासते । हृदयं ब्रह्मेत्यारुणयो ब्रह्मा हैवेता इत

ऊर्ध्वं त्वेवोदसर्पत्तच्छिरोऽश्रयत इत्याद्याः श्रुतयो विदधतीत्याह । उदरमुपासत इति । ऋषिवर्त्मसु ऋषीणां संप्रदायमार्गेषु ये कूर्पदृशस्ते उदरालंबनं मणिपूरकस्थं ब्रह्मोपासते ध्यायंति। शार्कराक्षा इति श्रुतिपदस्य प्रतिपदं कूर्पदृश इति । कूर्पं शर्करारजो विद्यते दृक्ष्वक्षिषु येषां ते तथा रजःपिहितदृष्टयः स्थूलदृष्टय इति यावत् । उदरस्य हृदयापेक्षया स्थूलत्वात् । यद्वा । कूर्पं सूक्ष्मम्। सूक्ष्मदृश इत्यर्थः । तदा हृदयस्थं सूक्ष्ममेवालक्ष्य तत्प्रवेशाय प्रथममुदरस्थमुपासत इति भावः । आरुणयस्तु साक्षाद्धृदयस्थं दहरं सूक्ष्ममेवोपासते। हृदयविशेषणं परिसरपद्धतिमिति। परितः सरंति प्रसर्पन्तीति परिसरा नाड्यस्तासां पद्धतिं मार्गं प्रसरणस्थानमित्यर्थः । विशेषणस्य फलमाह । तत इति । ततो हृदयात् । भो अनंत ! तव धामोपलब्धिस्थानं सुषुम्नाख्यं परमं श्रेष्ठं ज्योतिर्मयं शिरो मूर्धानं प्रत्युदगादुदसर्पत् । मूलाधारादारभ्य हृदयमध्याद्ब्रह्मरंध्रं प्रत्युद्गतमित्यर्थः। कथंभूतं धाम । यत्समेत्य प्राप्य पुनरिह कृतांतमुखे मृत्युमुखे संसारे न पतंति । तथा च श्रुतिः। शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ॥ तयोर्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवंतीति ॥ उदरादिषु यः पुंसां चिंतितो मुनिवर्त्मभिः ॥ हंति मृत्युभयं देवो हृद्गतं तमुपास्महे ॥५॥१८॥ नन्वीश्वरस्यापि तर्हि जीववदुदरादिसंबंधे तदनुप्रविष्टस्य च तारतम्ये सति केन विशेषेणोपास्यत्वमितीमामाशंकां परिहरंत्यः। एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मा ॥ कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चेत्याद्याः श्रुतयः स्तुवंतीत्याह । स्वकृतविचित्रयोनिष्विति। स्वयं कृतासूच्चनीचमध्यमासु योनिष्वभिव्यक्तिस्थानेषु कार्येषु देहादिषु हेतुतयोपादानतया

परिसरपद्धतिं हृदयमारुणयो दहरम् ॥ तत उदगादनंत तव धाम शिरः परमं पुनरिह यत्समेत्य न पतन्ति कृतांतमुखे ॥१८॥ स्वकृतविचित्रयोनिषु विशन्निव हेतुतया तरतमतश्चकास्स्यनलवत्स्वकृतानुकृतिः॥ अथ वितथास्वमूष्ववितथं तव धाम समं विरजधियोऽन्वयंत्यभिविपण्यव एकरसम् ॥१९॥ स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं तव पुरुषं वदन्त्यखिलशक्तिधृतोऽंशकृतम् ॥ इति नृगतिं विविच्य कवयो निगमावपनं भवत उपासतेऽङ्घ्रिमभवं

प्रागेव विद्यमानत्वेन मुख्यप्रवेशासंभवाद्विशन्निव वर्तमानस्तरतमतो न्यूनाधिकभावेन चकास्सि अवभाससे। स्वकृता योनीरनुकरोतीति स्वकृतानुकृतिरनलवत्। अग्निर्यथा स्वतस्तारतम्यहीनोऽपि काष्ठानुसारेण तथा तथा प्रकाशते तद्वत् । अथातो वितथासु मिथ्याभूतास्वमूषु योनिष्ववितथं सत्यं यतः सममविशेषमतः सत्यं तव धाम स्वरूपं विरजधियो निर्मलमतयोऽन्वयंति जानंति । नु इति पृथक्पदं वा । अत्र हेतुः । अभिविपण्यव इति । अभितो विगतव्यवहाराः । पणव्यवहार इत्यस्य रूपं पण्युरिति । ऐहिकामुष्मिककर्मफलरहिता इत्यर्थः । अविशेषत्वादेवैकरसं सन्मात्रमतस्तत्रोपाधिकृततारतम्याभावादप्रच्युतैश्वर्यस्योपास्यत्वमिति भावः ॥ स्वनिर्मितेषु कार्येषु तारतम्यविवर्जितम् ॥ सर्वानुस्यूतसन्मात्रं भगवंतं भजामहे ॥६॥१९॥ अपि च कुतो न्वियमाशङ्का स्याद्भगवतो देहाद्युपाधिकृतदोषप्रसङ्ग इति यतोऽविद्याकामकर्मभिः संसरतो जीवस्यापि भगवद्भावं लक्षणया बोधयंत्यस्तं दोषं निषेधयंति। स यश्चायं पुरुषे ॥ यश्चासावादित्ये ॥ स एकः ॥ तत्त्वमसीत्याद्याः श्रुतयः । ननु क्रत्वर्थस्यात्मनः स्तुतिरियमीश्वरत्वेन क्रियते न तु तस्येश्वरत्वं बोध्यते । नैतद्युज्यते यतस्तत्र । यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मन इत्याद्याः श्रुतयः कृतावतारस्य भगवतश्चरणभजनमुपायं वदंतीत्याह । स्वकृतपुरेष्विति । स्वकर्मोपार्जितेषु पुरेषु देहेष्वमीषु नरादिषु भोक्तृत्वेन वर्तमानं पुरुषमखिलशक्तिधृतः सर्वशक्त्याश्रयस्य पूर्णस्य तवांशकृतं वदंति । अंश इवांशः कृत इव कृतः । त्वद्रूपं वदंतीत्यर्थः । ननु कार्यकारणसंवृतस्य कुत एवंभूतत्वं तत्राह । अबहिरंतरसंवरणमिति । बहिः कार्यमंतरं कारणम् । वस्तुतस्तदावरणशून्यम् । तयोरसत्त्वादित्यर्थः । इत्येवं नृगतिं नुर्जीवस्य गतिं सत्त्वं विविच्य विशोध्य कवयोऽन्यथेदं न प्राप्यत इति जानंतो निगमावपनं निगमोक्तकर्मणामावपनमासमंतादुप्यतेऽस्मिन्नित्यावपनं

क्षेत्रं सर्वकर्मार्पणविषयमित्यर्थः । यत्रार्पितानि कर्माणि मुक्तिफलं फलंति तं भवतोंऽघ्रिमभवं भवनिवर्तकं विश्वसिताः कृतविश्वासा उपासतेऽर्चनवंदनादिभिः सेवंते । भुवीति मर्त्यलोके इदमेवोचित-
मिति दर्शयंति । त्वदंशस्य ममेशान त्वन्मायाकृतबंधनम् ॥ त्वदंघ्रिसेवामादिश्य परानंद निवर्तय ॥७॥२०॥ भक्तिरल्पसाधनमिति वचनमनुचितमिव मन्वानो भक्तिं गुरूकरोति । दुरवगमेति । भो
ईश्वर ! दुरवगमं दुर्बोधं यदात्मतत्त्वं तस्य निगमाय ज्ञापनाय तवात्ततनोराविष्कृतमूर्तेश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः चरितमेव महामृताब्धिस्तस्मिन्परिवर्तो विगाहस्तेन परिश्रमणाः । परि-
वर्जनार्थः । श्रमणं श्रमः गतश्रमा इत्यर्थः । अपवर्गमपि केचिन्न परिलषंति नेच्छंति कुतोऽन्यदिंद्रपदादि । केचिदित्येवंभूता भक्तिरसिका विरला इति दर्शयंति । न केवलमन्यन्नेच्छंति । किंतु तेनैव
सुखेन पूर्णाः संतः पूर्वसिद्धं गृहादिसुखमप्युपेक्षंत इत्याह । तव चरणसरोजहंसकुलसंगविसृष्टगृहा इति । तव चरणसरोजे हंसा इव रममाणा ये भक्तास्तेषां कुलं तेन संगस्तेन निसृष्टा गृहास्ते तथा ।
अनेन श्रवणकीर्तने दर्शिते । श्रुतिश्च मुक्तेरप्याधिक्यं भक्तेर्दर्शयति । यथाऽऽह । यं सर्वे देवा नमंति मुमुक्षवो ब्रह्मवादिनश्चेति । व्याख्यातं च सर्वज्ञैर्भाष्यकृद्भिः । मुक्ता अपि लीलया विग्रहं
कृत्वा भजंत इति । त्वत्कथामृतपाथोधौ विहरंतो महामुदः ॥ कुर्वंति कृतिनः केचिच्चतुर्वर्गं तृणोपमम् ॥८॥२१॥ आगममस्य पश्यंति न तं पश्यति कश्चन ॥ न तं विदाथ य इमा जजानान्य-
द्युष्माकमंतरं बभूव ॥ नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरंतीत्याद्याः श्रुतयोऽनुक्रोशंत्यो जगदात्मनीश्वरे रतिमुपदिशंतीत्याह । त्वदनुपथमिति । त्वदनुवर्तित्वात्त्वत्सेवौपयिकमिदं कुलायं
कौ पृथिव्यां लीयत इति कुलायं शरीरमात्मसुहृत्प्रियवत् आत्मा च सुहृच्च प्रियश्च तद्वच्चरति । स्वाधीनतया वर्तत इत्यर्थः । तथापि त्वयि उन्मुखे हिते प्रिये आत्मनि च । अप्यर्थे चकारः । एवंभूते

भुवि विश्वसिताः ॥ २० ॥ दुरवगमात्मतत्त्वनिगमाय तवात्ततनोश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ॥ न परिलषंति केचिदपवर्गमपीश्वर ते चर-
णसरोजहंसकुलसङ्गविसृष्टगृहाः ॥ २१ ॥ त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवच्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ॥ न बत रमन्त्यहो
असदुपासनयात्महनो यदनुशया भ्रमंत्युरुभये कुशरीरभृतः ॥२२॥ निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्मुनय उपासते तदरयोऽपि ययुः स्मर-
णात् ॥ स्त्रिय उरगेंद्रभोगभुजदंडविषक्तधियो वयमपि ते शमाः समदृशोंऽघ्रिसरोजसुधाः ॥२३॥ क इह नु वेद बतावरजन्मलयोऽग्रसरं यत उदगा-

सुसेव्येऽपि त्वयि बताहो कष्टं न रमंति न सख्यादिना भजंति । असदुपासनया देहाद्युपलालनेनात्महनः प्रमादिनः कुतः । यदनुशयाः यस्यामसदुपासनायामनुशयो वासना येषां ते कुशरीरभृतः
संत उरुभये संसारे भ्रमंति परिवर्तंते । अत आत्महन इति भावः । त्वय्यात्मनि जगन्नाथे मन्मनो रमतामिह ॥ कदा ममेदृशं जन्म मानुषं सम्भविष्यति ॥९-२२॥ इदानीमात्मा वारे द्रष्टव्यः
श्रोतव्यो मंतव्यो निदिध्यासितव्य इत्याद्याः श्रुतयो ध्यानमंगत्वेनोपदिशंतीत्याह । निभृतमरुन्मनोऽक्षदृढयोगयुज इति । मरुत्प्राणो मनश्चाक्षाणींद्रियाणि च निभृतानि संयमितानि यैस्ते च दृढं
योगं युंजंति ते दृढयोगयुजस्ते तथाभूता मुनयो हृदि यत्तत्त्वमुपासते तदेवारयोऽपि तव स्मरणाद्ययुः प्रापुः । स्त्रियोऽपि कामत उरगेंद्रभोगभुजदंडविषक्तधियः अहींद्रदेहसदृशयोर्भुजदंडयोर्विषक्ता
धीर्यासां ताः परिच्छिन्नदृष्टयः समदृशः सममपरिच्छिन्नं त्वां पश्यंत्यो वयं श्रुत्यभिमानिन्यो देवता अपि ते समा एव कृपाविषयतया । अंघ्रिसरोजसुधाः अंघ्रिसरोजं सुष्ठु धारयंत्यः । अयं भावः ।
इत्थंभूतस्तव स्मरणानुभावो ये योगिनस्त्वां हृद्यालंबनमुपासते । याश्च वयं त्वां समं पश्यामो याश्च स्त्रियः कामतः परिच्छिन्नं ध्यायंति ये च द्वेषेण सर्वानपि तांस्त्वामेव प्रापयतीति । चरणस्मरणं
प्रेम्णा तव देव सुदुर्लभम् । यथा कथंचिन्नृहरे मम भूयादहर्निशम् ॥१०॥२३॥ यतो वाचो निवर्तंते अप्राप्य मनसा सह ॥ को अद्धा वेद क इह प्रावोचत् ॥ कुत आजात कुत इयं विसृष्टिः ॥
अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव ॥ अनेजदेकं मनसो जवीयो नैतद्देवा आप्नुवन् पूर्वमर्शत् ॥ तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधातीत्याद्याः श्रुतयो भगवत्तत्त्वं

दुर्ज्ञेयं वदंत्यो भक्तिमेवोररीकृत्य स्तुवन्तीत्याह। क इह नु वेदेति। बत अहो भगवन्निह जगत्यग्रसरं पूर्वसिद्धं त्वामवरजन्मलयोऽर्वाचीनोत्पत्तिनाशवान्को नु पुमान्वेद जानाति।ईश्वरस्य पूर्वसिद्धा-
वन्यस्य चार्वाचीनत्वे प्रमाणं वदन् ज्ञानकारणाभावमाह। यत उदगादिति। यतस्त्वत्त ऋषिर्ब्रह्मा उत्पन्नो यं ब्रह्माणमनु उभये आध्यात्मिकाधिदैविका देवगणा उत्पन्नास्ततोऽप्यर्वाचीनाः सर्वे।
यदा तु भवान्सर्वमवकृष्योपसंहृत्य शयीत तर्हि तदा अनुशायिनां जीवानां ज्ञानसाधनं नास्ति। यतस्तदा न सत्स्थूलमाकाशादि। न चासत् सूक्ष्मं महदादि।न चोभयं सदसद्भ्यामारब्धं शरी-
रम्। न च कालजवस्तन्निमित्तभूतं कालवैषम्यम्। एवं सति तत्र तदा न किमपींद्रियप्राणाद्यपि न च ज्ञापकं शास्त्रमपि। अयमभिप्रायः। अर्वाक्सृष्टिगतानां देहाद्युपाधिकृतांतराणां कालवशेन च
मलिनसत्त्वानां न तावद्भगवज्ज्ञानसामर्थ्यम्। तथा च श्रुतिः। न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूवेत्याद्याः। यदा तु प्रलयसमये न वह्नंतरमस्ति। तदाऽपि साधनाभावान्न
भगवज्ज्ञानसामर्थ्यं अतस्त्वदेकशरणतया श्रवणकीर्तनादिभक्तिरेव सुकरेति। क्वाहं बुद्ध्यादिसंरुद्धः क्व च भूमन्महस्तव ॥ दीनबन्धो दयासिंधो भक्तिं मे नृहरे दिश ॥११॥२४॥ इतोऽपि ज्ञानं
न सुशकं उपदिशतामपि भ्रमबाहुल्यादित्याह। जनिमसत इति। असतो जगतो जनिमुत्पत्तिं ये वैशेषिकादयो वदन्ति। असत एव ब्रह्मत्वस्योत्पत्तिं ये च पातंजलादयः। सत एवैकविंशति-
प्रकारस्य दुःखस्य नाशं मोक्षं वदन्ति ये नैयायिकाः।उतापि ये च सांख्यादय आत्मनि भिदां भेदं च। ये मीमांसका विपणं कर्मफलव्यवहारमृतं सत्यं स्मरन्ति वदन्ति। ते सर्वे आरुपितैरारोपितै-
र्भ्रमैरेवोपदिशन्ति न तत्त्वदृष्ट्या। सदेव सौम्येदमग्र आसीत् ॥ ब्रह्मैव सन् ब्रह्माप्येति ॥ अनीशया शोचति मुह्यमानः॥ अविद्यायामन्तरे वर्तमानाः॥ स्वयं धीराः पंडितं मन्यमानाः ॥ जघन्य-

दृषिर्यमनु देवगणा उभये ॥ तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्र शास्त्रमवकृष्य शयीत यदा ॥२४॥ जनिमसतः सतो मृति-
मुतात्मनि ये च भिदां विपणमृतं स्मरंत्युपदिशंति त आरुपितैः ॥ त्रिगुणमयः पुमानिति भिदा यदबोधकृता त्वयि न ततः परत्र स भवेदवबोध-
रसे ॥ २५ ॥ सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात्सदभिमृशंत्यशेषमिदमात्मतयाऽऽत्मविदः ॥ नहि विकृतिं त्यजंति कनकस्य तदाऽऽत्मतया

मानाः परियन्ति मूढा अंधेनैव नीयमाना यथाऽन्धाः ॥ एकमेवाद्वितीयं ब्रह्म ॥ एक एव हि भूतात्मा भूते भूते व्यवस्थितः ॥ एकधा बहुधा चैव दृश्यते जलचंद्रवदित्यादिश्रुतिविरोधात्। किंच
वस्तुतः पुरुषस्य त्रिगुणमयत्वे सर्वमिदं संगच्छेत न तु तदस्तीत्याह। त्रिगुणमयः पुमानिति भिदा यदबोधकृता त्वयीति। त्रिगुणमयः पुमानित्यनेन हेतुना या भिदा। उपलक्षणमेतद्भिदादि। सा
यस्मात्त्वयि विषये अबोधकृता त्वद्विषयाज्ञानविजृम्भिता। तर्हि किमज्ञानमस्ति। वस्तुतः पुंसि नैवेत्याह। ततः अबोधात्परत्र परेऽसङ्गेऽवबोधरसे ज्ञानघने स अबाधो न भवेन्न संभवतीत्यर्थः। मिथ्या-
तर्कसुकर्कशेरितमहावादांधकारांतरभ्राम्यन्मन्दमतेरमंदमहिमँस्त्वज्ज्ञानवर्त्मास्फुटम् ॥ श्रीमन्माधव वामन त्रिनयन श्रीशंकर श्रीपते गोविंदेति मुदा वदन्मधुपते मुक्तः कदा स्यामहम् ॥१२॥२५॥
ननु यद्यसन्नोत्पद्यते यदि च त्रिगुणमयः पुरुषो न भवति। तर्हीदं प्रपंचजातं पुरुषश्च पृथङ् नास्तीन्युक्तं स्यात्। कथं तर्हि तयोः सत्त्वेन प्रतीतिरत आह। सदिव मन इति। मनो मनोमात्रविलसितमिदं
त्रिवृत्त्रिगुणात्मकं प्रपञ्चजातमसदेव सदिव विभाति। कथमिति चेत्तत्राह। त्वयीति। त्वय्यधिष्ठाने। अधिष्ठानसत्तया सद्वत्प्रतीयत इत्यर्थः। न केवलमिदंकारास्पदं किंत्वामनुजात्। मनुजः पुरुषः।
अभिविधावकारः। पुरुषमभिव्याप्येति। पुरुषस्यापि पृथक्सत्त्वप्रतीतिर्मनोमात्रविलसितेत्यर्थः। तथा च श्रुतिः। असतोऽधिमनोऽसृजत ॥ मनः प्रजापतिमसृजत् ॥ प्रजापतिः प्रजा असृजत् ॥
यद्वा। इदं मनस्येव परमं प्रतिष्ठितं यदिदं किंचेति। नन्वात्मविदामपि विश्वं सदेव स्फुरत्यतः कथमसत्स्यादत आह। सदभिमृशंतीति। आत्मविदस्त्वशेषमिदं भोक्तृभोग्यात्मकं विश्वमात्मतयैव
सदभिमृशंति सदिति जानन्ति। आत्मकार्यत्वान्न पृथगित्यर्थः। तथाहि। यदुपादानकं यत्कार्यं भवति तत्तेनैव रूपेण प्रतीयते उपादीयते चेति लोकाचारेण दर्शयति। नहि विकृतिमिति।

कनकस्य विकृतिं कुंडलादिकं कनकार्थिनो न त्यजंति । अत्र हेतुः । तदात्मतया कनकरूपत्वेनेत्यर्थः । अतः स्वकृतमिदं विश्वमनुप्रविष्टं च पुरुषरूपमात्मतयैवावसितं निश्चितम् । यत्सत्त्वतः सदा भाति जगदेतदसत्स्वतः ॥ सदाभासमसत्यस्मिन्भगवंतं भजाम तम् ॥१३॥२६॥ ननु सत्यं ज्ञानमनंतं ब्रह्म ॥ नेह नानाऽस्ति किंचन ॥ मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति इत्यादिश्रुतिभिरेवंभूतस्य भगवतः प्रतिपादनात्तज्ज्ञानं सुकरमेवेति कृतं भक्त्या अत आह । तव परि ये चरंतीति । तवेति कर्मणि षष्ठी । त्वां ये परिचरन्ति । छंदसि व्यवहिताश्चेति यच्छब्देन व्यवधानमदोषः । केन रूपेण । अखिलसत्त्वनिकेततया अखिलानि सत्त्वानि निकेतो यस्य स तथा तस्य भावस्तत्ता तया । सर्वभूतावासतयेत्यर्थः । उत एव अविगणय्य तिरस्कृत्य त एव निर्ऋतेर्मृत्योः शिरो मूर्धानं पदा पादेनाक्रमंति मृत्योर्मूर्ध्नि पदं दधति । ते तरंति मुच्यन्त इत्यर्थः । ये पुनर्विमुखा अभक्तास्तान् गिरा वाचा पशूनिव विबुधानिवुधोऽपि परिवयसे बध्नासि । कुतः । त्वयि कृतसौहृदाः त्वयि कृतं सौहृदं प्रेम यैस्ते खलु निश्चितं पुनंति पवित्रयंति । आत्मानमन्यानपीति शेषः । नेतरे । तथा च श्रुतिः । तस्य वाक्तंतिर्नामानि दामानि ॥ तस्येदं वाचा तंत्या नामभिर्दामभिः सर्वं सितमिति । अयमभिप्रायः । सत्यमेवंभूतमात्मानं श्रुतयः प्रतिपादयंति तत्र च यद्यपि वस्तुनोऽपरोक्षत्वादपरोक्षमेव ज्ञानमुत्पद्यते तथाऽप्यसंभावना विपरीतभावना तिरस्कृतत्वान्मलिनचित्तेषु परोक्षमिव भवतीति नापरोक्षसंसारभ्रमनिवृत्तसमर्थम् । भगवत्परिचर्यया तु सम्यगमलचित्तानां तत्प्रसादेन लब्धापरोक्षज्ञानानामयत्नत एव करकलितो मोक्ष इति । तथा च श्रुतयः । देहांते देवः परं ब्रह्म तारकं व्याचष्टे ॥ यमेवैष वृणुते तेन लभ्यः ॥ यस्य देवे परा भक्तिरित्यादयः ॥ तपंतु तापैः प्रपतंतु पर्वतादटंतु तीर्थानि पठंतु चागमान् ॥ यजंतु यागैर्विवदंतु वादैर्हरिं विना नैव मृतिं

स्वकृतमनुप्रविष्टमिदमात्मतयाऽवसितम् ॥२६॥ तव परि ये चरंत्यखिलसत्त्वनिकेततया न उत पदाऽऽक्रमंत्यविगणय्य शिरो निर्ऋतेः ॥ परिवयसे पशूनिव गिरा विबुधानपि ताँस्त्वयि कृतसौहृदाः खलु पुनंति न ये विमुखाः ॥ २७ ॥ त्वमकरणः स्वराडखिलकारकशक्तिधरस्तव बलिमुद्वहंति समदंत्यजयाऽनिमिषाः ॥ वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो विदधति यत्र ये त्वधिकृता भवतश्चकिताः ॥ २८ ॥ स्थिरजातयः स्युरजयोत्थनिमित्तयुजो विहर उदीक्षया यदि परस्य विमुक्त ततः ॥ नहि परमस्य कश्चिदपरो न परश्च भवेद्वियत इवापदस्य तव शून्यतुलां दधतः ॥ २९ ॥

तरंति ॥१४॥२७॥ ननु यद्यखिलसत्त्वनिकेतत्वेन भवतः सेव्यत्वमुच्यते तर्हि तत्करणसंबंधात्कर्तृत्वभोक्तृत्वे प्रसज्येयातां न वस्तुतस्तया त्वामिति चेत्तर्हि जीवानामपि तत्तुल्यमिति केन विशेषेण पुनः सेव्यसेवकत्वमितीमामाशंकां परिहरंत्यतः । अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ॥ स वेत्ति वेद्यं न च तस्य वेत्ता तमाहुरग्र्यं पुरुषं पुराणमित्याद्याः श्रुतयः स्तुवंतीत्याह । त्वमकरण इति । करणसंबंधरहित एवाखिलकारकशक्तिधरः अखिलानां प्राणिनां यानि कारकाणींद्रियाणि तेषां शक्तीर्धारयति प्रवर्तयतीति तथा । कुतः । स्वराट् । यतः स्वेनैव राजसे दीप्यसे । नहि स्वतःसिद्धज्ञानशक्तेरिंद्रियापेक्षेत्यर्थः । अतस्तव बलिमुद्वहंति पूजां कुर्वंति । अजयाऽविद्यया सहितास्तयावृता इत्यर्थः । अनिमिषा देवा इंद्रादयस्तत्पूज्या विश्वसृजो ब्रह्मादयोऽपि । यथा सस्त्रीका एव किंकराः स्वामिनं सेवंते तथाऽविद्यायुक्ता देवादयस्त्वामिति लोकोक्तिः । समदंति च मनुष्यैर्दत्तं हव्यकव्यादिलक्षणं बलिं भक्षयंति । अत्र दृष्टांतः । वर्षभुजोऽखिलक्षितिपतेरिवेति । यथा वर्षभुजः खंडमंडलपतयोऽखिलक्षितिपतेर्महामण्डलेश्वरस्य स्वप्रजा दत्तबलिभुजो बलिमुद्वहंति तद्वदिति । कथं बलिं वहन्ति तदाह । विदधति यत्र ये त्वधिकृता भवतश्चकिता इति त्वत्तो भीताः संतो यस्मिन्कर्मणि नियुक्तास्ते तत्कुर्वंतीति । त्वदाज्ञापालनमेव बल्युद्वहनमित्यर्थः । तथा च श्रुतिः । भीषाऽस्माद्वातः पवते ॥ भीषोदेति सूर्यः ॥ भीषाऽस्मादग्निश्चेन्द्रश्च ॥ मृत्युर्धावति पंचम इति ॥ अनिंद्रियोऽपि यो देवः सर्वकारकशक्तिधृक् ॥ सर्वज्ञः सर्वकर्ता च सर्वसेव्यं नमामि तम् ॥ १५ ॥ २८ ॥ तदेवं करणप्रवर्तकमीश्वरं करणपरतंत्रा नरा भजंती-

स्युक्तम् । केवलमियदेव कारणं तत उत्पन्नत्वेनापि तत्परतंत्रत्वादिति वदंति । यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंत्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एव आत्मानो व्युच्चरंतीत्याद्याः श्रुतय इत्याह । स्थिरचरजातय इति । हे विमुक्त नित्यमुक्त ! यदि तवाजया मायया विहरो विहारः क्रीडा भवति । तदा स्थिरचरजातयः स्थिराश्च चराश्च जातयो जात्या लिंगिता देहा येषां ते जीवाः स्युर्भवेयुः । कथंभूतस्य । ततोऽजातः परस्य दूरे वर्तमानस्यासंगस्येत्यर्थः । कथं विहारः । उदीक्षया ईक्षणलेशेन । ननु मयि लीनानां जीवानां कथं जन्म स्यात्तत्राह । उत्थनिमित्तयुज इति । उक्षयैवोत्थान्युत्थितान्याविर्भूतानि निमित्तानि कर्माणि तद्युक्तानि लिंगशरीराणि वा तैर्युज्यंत इति तथा । ननु किंनिमित्तोत्थानेन मदिच्छयैव भवंतु, न त्वयि वैषम्याभावाद्विषमसृष्टेरयोगादित्याह । परमस्येति । तव परमस्योत्तमस्य परमकारुणिकस्य वियत इवाकाशसदृशस्य । समस्येत्यर्थः । कश्चिदपरः स्वीयः परोऽस्वीयश्च न भवेत् । न संभवतीत्यर्थः । असदा इदमग्र आसीत् । ततो वै सदजायतेत्यादिश्रुत्या शून्यपूर्वकत्वमिव प्रतीयते तदर्थं पुनर्विशिनष्टि । शून्यतुलां दधतः शून्यसाम्यं भजतः । तदेव दर्शयितुं पुनर्विशिनष्टि । अपदस्येति । न पद्यत इत्यपदस्तस्य वाङ्मानसयोरगोचरस्येत्यर्थः । त्वदीक्षणवशक्षोभमायाबोधितकर्मभिः । जातान्संसरतः खिन्नान्नृहरे पाहि नः पितः ॥ १६ ॥ २९ ॥ एवं तावत्परमात्मनः सकाशादविद्याकृतकार्योपाधयस्तदंशा एव जीवा जाताः संसरंतो भजंतीत्युक्तम् । तत्र यद्येकाऽविद्या तद जीवस्याऽस्याप्येकत्वादेकमुक्तौ सर्वमुक्तिप्रसंगः । अथ नानाऽविद्यास्तर्हि तस्यैवांशांतरेण संसारानपगमादनिर्मोक्ष इत्यादितर्कबलेन वस्तुत एव नानात्मानस्तत्र च तेषामणुत्वे देहव्यापि चैतन्यं न स्यात् । देहपरिमाणत्वे च मध्यमपरिमाणानां सावयत्वेनानित्यत्वं स्यात् । अतः सर्वगता

अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगतास्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा ॥ अजनि च यन्मयं तदविमुच्य नियंतृ भवेत्सममनुजानतां यदमतं मतदुष्टतया ॥ ३० ॥ न घटत उद्भव प्रकृतिपूरुषयोरजयोरुभययुजा भवंत्यसुभृतो जलबुद्बुदवत् ॥ त्वयि त इमे ततो विविधनामगुणैः परमे

नित्याश्चेति केचन मन्यन्ते । तत्र न तावदुक्तदोषप्रसंगः । अविद्याभेदेन तच्छक्तिभेदेन वा बद्धमुक्तव्यवस्थासंभवात् । ईश्वरस्य तु न केनाप्यंशेन संसारशंकेत्युक्तमेव । प्रसिद्धं चात्मैक्यं सर्वश्रुतिषु । किंच इमं पक्षमन्तर्यामिब्राह्मणमपि न सहत इत्याह । अपरिमिता इति । वस्तुत एवानंता ध्रुवास्तेनैव रूपेण नित्याः सर्वगताश्च तनुभृतो जीवा यदि स्युतर्हि तेषां समत्वाच्छास्यता न घटत इति कृत्वा हे ध्रुव ! नियमो नियमनं त्वया न स्यादितरथा तु घटेत । कथम् । यन्मयमुपाधितो यद्विकारप्रायं यज्जीवाख्यमजनि जातं तत्तस्य स्वविकारस्य नियंतृ नियामकं भवेत् । अविमुच्य कारणतयाऽपरित्यज्य । किं तत् । सममनुस्यूतम् । ननु किं यत्तच्छब्दैर्दर्श्यते चेदुच्यतामिदं तदित्यत आह । अनुजानतां यदमतमिति । जानीम इति वदतां यदमतमविज्ञातप्रायं अविषयत्वात् । तथा च श्रुतिः । यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् । अवचनेनैव प्रोवाच स ह तूष्णीं बभूवेत्यादिः । किंच मतस्य ज्ञातस्य दुष्टतया दोषश्रवणात् । तथा च श्रुतिः । यदि मन्यसे सुवेदेति तदहमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य देवेषु इत्यादि । तस्माद्यत्तच्छब्दावद्योत्यमतर्क्यं किमपि सर्वानुस्यूतत्वेन समं नियन्तृ भवेदित्यर्थः । अन्तर्यंता सर्वलोकस्य गीतः श्रुत्वा युक्त्या चैवमेवावसेयः ॥ यः सर्वज्ञः सर्वशक्तिर्नृसिंहः श्रीमंतं तं चैतसैवावलंबे ॥ १७ ॥ ३० ॥ ननु यदि च परमात्मनो जीवा जायंते इति नियंतृनियम्यभाव उच्यते । तथा सति जीवानामनित्यत्वप्रसंगे प्रतिदिनं कृतनाशाकृताभ्यागमप्रसंगः स्यात् । किं च तदा मोक्षो नाम जीवस्य स्वरूपहानिरेव स्यात् । न चैतद्युक्तम् । स्वप्रकाशानन्दात्मनोऽविद्याकृतानर्थनिवृत्तिमात्रस्य मोक्षत्वाभ्युपगमादित्याशंक्योपाधिजन्मनैव जीवानां जन्मोच्यते न स्वतः अघटनादित्याह । न घटत इति । तत्र किं प्रकृतेर्जीवरूपेणोद्भवः स्यात्पुरुषस्य

वा उभयोर्वा । आद्ये जीवानां जडत्वापत्तिः द्वितीये पुरुषस्य विकारित्वप्रसंगः । अतएव न तृतीय इत्याशयेनोक्तं प्रकृतिपुरुषयोरुद्भवो न घटत इति श्रुत्याऽजन्मप्रतिपादनादपीत्याह । अज-योरिति । तथा च श्रुतिः । अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयंतीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य । इति उभययुजां तु भवंति उभये च तद्युज्य इति युक्तसंबद्धं परस्पराध्यस्तमिति यावत् । तेनासुभृतः प्राणाद्युपाधयो जीवा जायन्त इत्यर्थः । जलबुद्बुदवदिति । यथा केवलेन जलेनानिलेन वा जलबुद्बुदा न भवन्ति किन्तु मिलिताभ्यां तद्वत् । तत्र यथाऽनिलो निमित्तं जलमुपादानमेवमत्रापि प्रकृतिर्निमित्तं पुरुष उपादानम् । तस्माद्वा एतस्मादात्मन आकाशः संभूतः । सोऽकामयत बहु स्यां प्रजायेयेति । यथाऽग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंत्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोका सर्वे देवाः सर्वाणि भूतानि सर्व एवात्मनो व्युच्चरंतीत्यादिश्रुतिषु चेतनाचेतनप्रपंचस्य परमात्मोपादनत्वश्रवणात् । न च विकारित्वं परिणामानंगीकारात् । केचित्पुनः परिणाममंगीकृत्यात्मनो विकारभिया विपरीतं निमित्तोपादानभावमिच्छंति । सर्वथा तावत्प्रकृतिपुरुषद्वयाद्भवतीति सिद्धम् । तदेकमेवाद्वितीयं ब्रह्म ॥ अजामेकामविनाशावारेऽयमात्मेत्यादिश्रुतिबलादुत्पत्ति श्रवणाच्च जीवानामौपाधिकमेव जन्म न वस्तुत इत्युक्तम् । उपाधिलयेन परमात्मनि पुनर्लयश्रवणादपि न वास्तवं जन्मेत्याह । त्वयि त इति । त्वयि कारणात्मनि त इमे जीवाः । तत इति । यतो न वास्तवं जन्म तस्माद्विविधनामगुणैरनेकप्रकारकार्योपाधिभिः सह निलिल्युर्लीना बभूवुः । तत्र सुषुप्तिप्रलययोर्मधुन्य-शेषरसा इव लीयंते । यथा मधुनि सकलकुसुमरसा विशेषतोऽनुपलक्ष्यमाणा अपि सामान्येनोपलक्ष्यन्ते । एवं स्वापादौ विशेषमात्रलयात्कारणस्य विद्यमानत्वात्सामान्यतो वर्तंते । मुक्तौ तु कारण-

सरित इवार्णवे मधुनि निलिल्युरशेषरसाः ॥३१॥ नृषु तव मायया भ्रमममीष्ववगत्य भृशं त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् ॥ कथमनुव-र्ततां भवभयं तव यद्भ्रुकुटिः सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयम् ॥ ३२ ॥ विजितहृषीकवायुभिरदांतमनस्तुरंग य इह यतंति यंतुमतिलोलमु-

स्यापि लयात्त्वयि परमे निरुपाधौ सरित इवार्णवे लीयंत इति विवेकः । तथा च श्रुतयः । यथा सौम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान्समवहारमेकतां संगमयंति । ते यथा तत्र न विवेकं लभन्ते । अमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सौम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यमह इति । यथा नद्यः स्यंदमानाः समुद्रेऽस्तं गच्छंति नामरूपे विहाय ॥ तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमित्याद्याः । यस्मिन्नुद्यद्विलयमपि यद्भाति विश्वं लयादौ जीवोपेतं गुरुकरुणया केवलात्मावबोधे ॥ अत्यंतांतं व्रजति सहसा सिंधुवत्सिंधुमध्ये मध्ये चित्तं त्रिभुवनगुरुं भावये तं नृसिंहम् ॥ १८ ॥ ३१ ॥ नन्वेवं तावत्परमेश्वराज्जीवा जायंते । तद्वशेन च कर्माणि कुर्वंति । पुनस्तत्र लीयंत इति संसारचक्रे परिभ्रमण-मुक्तमिदानीं तन्निवृत्तये । परीत्य भूतानि परीत्य लोकान्परीत्य सर्वाः प्रदिशो दिशश्च ॥ उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेशेत्याद्या भगवदनुवृत्तिं विदधतीत्याह । नृषु तव माययेति नृषु जीवेष्वमीषु तव मायया भ्रममुक्तलक्षणमवगत्य ज्ञात्वा सुधियो भृशं त्वय्यभवे भवनिवर्तके भावं स्वभावमनुवृत्तिं दधति कुर्वंति । कीदृशं भ्रमम् । अनुप्रभवं अन्वनुप्रभवो यस्मिंस्तं भ्रमम् । ततः किमत आह । कथमिति । अनुवर्ततामनुवर्तमानानां त्वामेव शरणं भजतां भवभयं संसारभयं कथं भवेत् । न कथंचिदपीत्यर्थः । कुतः । यद्यस्मात्तव भ्रुकुटिभ्रूभंगरूपस्त्रिणेमिस्तिस्रो नेमय इवा-वच्छेदाः शीतोष्णवर्षाकाला यस्य संवत्सरात्मकस्य कालस्य सः । अभवच्छरणेषु न भवान् शरणं रक्षिता । येषां तेष्वेव भयं जन्ममरणादिलक्षणं सृजति करोति । अत एवंभूतं संसारमाकलय्य तन्निवृत्तये सुधियस्त्वयि भावं दधतीति । संसारचक्रक्रकचैर्विदीर्णमुदीर्णनानाभवतापतप्तम् ॥ कथंचिदापन्नमिह प्रपन्नं त्वमुद्धर श्रीनृहरे नृलोकम् ॥१९॥३२॥ स च भगवति भावो मनोनियमे सति

भवति। सोऽपि गुरुपसदनादिति गुरूपसदनं विदधति। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ अचार्यवान्पुरुषो वेद ॥ नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठेत्याद्याः श्रुतय इत्याह । विजितहृषीकवायुभिरिति । विजितानि हृषीकाणींद्रियाणि वायुश्च प्राणो यैस्तैरप्यदांतमनस्तुरगमदांतमदमितं मन एव तुरगो दुर्दमत्वसाम्यात्तं ये यंतु नियंतु यतंति प्रयतंते । अतिलोलमतिचंचलम् । गुरोश्चरणं समवहाय।नाश्रित्य ते उपायेषु खिद्यंते क्लिश्यंतीत्युपायखिदः संतो व्यसनशतान्विता बहुव्यसनाकुला इह संसारसमुद्रे संति तिष्ठन्ति। दुःखमेव प्राप्नुवंतीत्यर्थः । हे अज ! अकृतकर्णधरा अस्वीकृतनाविका वणिजो यथा तद्वत् गुरुणोपदर्शितभगवद्भजनसुखानुभूतौ तु स्वत एव मनो निश्चलं भवति। नान्यथेति भावः ॥ यदा परानंदगुरो भवत्पदे पदं मनो मे भगवँल्लभेत ॥ तदा निरस्ताखिलसाधनश्रमः श्रयेय सौख्यं भवतः कृपातः ॥२०॥३३॥ परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन । तथा । यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ॥ अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुतः इत्याद्या वैराग्यमंगं विदधतीत्याह । स्वजनसुतेति । आत्मा देहः । धाम गृहम् । असुः प्राणः । स्वजनादिभिः किम् । सर्वरसे सर्वे रसाः सुखानि विद्यंते यस्मिंस्तस्मिंस्त्वयि परमानंदे एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीति श्रुतेः । श्रयतस्त्वां सेवमानस्य पुंस आत्मनि सति नृणां तुच्छैरेतैः किं क उपयोग इति सत् सत्यं परमार्थसुखमजानतामतएव मिथुनतः स्त्रिया मिथुनीभूय रतये मायासुखाय चरतां प्रवर्तमानानाम् । कर्मणि षष्ठ्यौ । अजानतश्चरतः पुरुषान् को न्वर्थः सुखयत्यानंद-

पायखिदः ॥ व्यसनशतान्विताः समवहाय गुरोश्चरणं वणिज इवाज संत्यक्तकर्णधरा जलधौ ॥ ३३ ॥ स्वजनसुतात्मदारधनधामधरासुरथैस्त्वति सति किं नृणां श्रयत आत्मनि सर्वरसे ॥ सदजानतां मिथुनतो रतये चरतां सुखयति को न्विह स्वविहते स्वनिरस्तभगे ॥ ३४ ॥ भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदास्त उत भवत्पदांबुजहृदोऽघभिदंघ्रिजलाः ॥ दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथान् ॥३५॥ सत इदमुत्थितं सदिति चेन्ननु तर्कहतं व्यभिचरति क्व च क्व च मृषा न तथोभययुक् ॥ व्यवहृतये विकल्प इषितोऽन्धपरंपरया

यति । न कोपीत्यर्थः । इह संसारे । कथंभूते । स्वविहते स्वत एव नश्वरे । स्वनिरस्तभगे स्वत एव गतसारे । पाठांतरे तु को न्वित्यस्यैतद्विशेषणद्वयम् । अतस्त्वद्भजनमेवोचितमित्यर्थः । भजतो हि भवान्साक्षात्परमानंदचिद्घनः ॥ आत्मैव किमतः कृत्यं तुच्छदारसुतादिभिः ॥ २१ ॥ ३४ ॥ एवं गुरूपदेशेन तत्त्वमवगम्य सारासारविवेकेन च सर्वतो निर्विद्य तदेव महत्संगेनोपपत्तिभिः सम्यगवधारयितुं तीर्थसदनानि मुनयः पर्यटंतीति श्रोतव्यो मंतव्य इत्यादि श्रुत्यर्थमाह । भुवि पुरुपुण्यतीर्थसदनानीति । ते उक्तलक्षणा ऋषयो विमदा निरहंकारा यतो भवत्पदांबुजहृदः भवतः पदांबुजं हृदि येषां तेऽतः स्वयमेवाघभिदंघ्रिजलं येषां ते उत अपि तथाविधा अपि पुरूणि बहूनि पुण्यानि तीर्थानि सदनानि च क्षेत्राणि तान्येवोपासते सेवंते । प्रायस्तत्रैव महत्संगो भवतीति । अथवा पुरु अधिकं भगवद्भजनलक्षणं पुण्यं येषां तानि च तानि तीर्थानि च गुरवो महांत इत्यर्थः । तेषां सदनान्याश्रमान् । यथाहामरसिंहः । निपानागमयोस्तीर्थमृषिजुष्टे जले गुराविति न पुनः पुरुषसारहरावसथानुपासते । पुरुषाणां सारं विवेकस्थैर्यधैर्यक्षमाशांतिप्रमुखं हरंतीति तथा ते च ते आवसथा गृहास्तान् । न च तेषां गृहादिभवकुत्सितसुखापेक्षेत्याह। दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुख इति । सकृदपि त्वयि ये मनो दधतीति तेऽपि गृहाद्यासक्ता न भवंति । किं पुनरेवंभूता इत्यर्थः । मुंचन्नंगतदंगसंगमनिशं त्वामेव संचिंतयन्संतः संति यतो यतो गतमदास्तानाश्रमानावसन् ॥ नित्यं तन्मुखपंकजाद्विगलितत्वत्पुण्यगाथामृतस्रोतःसंप्लवसंप्लुतो नरहरे न स्यामहं देहभृत् ॥२२॥३५॥ नन्वाम्नायस्य क्रियार्थत्वादानर्थक्यमतद-

र्थानाम्। तद्भूतानां क्रियार्थेन समन्वय इति तत्र जैमिनिना वेदस्य क्रियापरत्वाभिधानादुपनिषदामपि तदेव युक्तम्। यथोक्तं तंत्रवार्तिककृता। एतेन वस्त्वर्थकर्तृप्रतिपादनेनोपनिषदां नैराकांक्ष्यं व्याख्यातमिति। न एकमेवाद्वितीयं ब्रह्म। विज्ञानमानंदं ब्रह्म। अचक्षुरश्रोत्रमित्येवं तद्विपरीतात्मप्रतिपादनात्। न ह्यद्वितीयपरमानंदरूपस्य कर्माङ्गत्वं युज्यते। अननुमतं चैतद्वार्तिककृतः। कथम्। सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते ॥ परांगं चात्मविज्ञानादन्यत्रेत्यवधार्यतामिति तेनैवोक्तत्वात्। एतदर्थमेव मननाय मुनयः पर्यटंतीत्युक्तम्। तत्र तावद्द्वैतस्य सत्यत्वे भवेदप्येवं तदेव तु न संभवतीति प्रश्नोत्तराभ्यां मननेन तत्त्वावधारणप्रकारमाह। सत इदमुत्थितं सदिति चेदिति। इदं विश्वं धर्मि। सदिति साध्यो धर्मः। सत उत्पन्नत्वाद्धेतुः। यद्यत उत्पन्नं तत्तदात्मकमेव दृष्टम्। यथा कनकादुत्पन्नं कुंडलादि तदात्मकं तद्वदिदिति। तत्र यदि सदभेदः साध्यते तदाऽपादानत्वनिर्देशेनैव भेदप्रतीतेर्विरुद्धो हेतुरित्याह। ननु तर्कहतमिति। ननु नाभेदं साधयामः किंतु तदुत्पन्नत्वेन कुंडलादिवद्भेदं प्रतिषेधयामः। तत्राभेद एव स्यादित्याशंक्यानैकांतिकत्वेन दूषयति। व्यभिचरति क्व चेति। पितृपुत्रादिषु मुद्गरघटप्रध्वंसादिषु च तथा दर्शनादिति भावः। ननु तदुत्पन्नत्वं नाम तदुपादानत्वं नतु तन्निमित्तत्वमतो नानैकांतिकत्वमित्याशंक्य दूषयति। क्व च मृषेति। गुणोपादानस्यापि फणिनो न गुणत्वं किंतु मिथ्यात्वम्। अन्यथा कुण्डलादिवदबाधप्रसंगात्। अतः पुनरप्यनैकांतिकत्वमेवेति भावः। ननु न तत्र केवलं गुणमात्रं फणिन उपादानं किंत्वविद्यायुक्तम्। तथाभूतस्यावस्तुत्वाद्युक्तं फणिनो मिथ्यात्वमित्याशंक्य तत्तन्यमत्रापीति दूषयति। तथोभययुगिति। अयमर्थः। अत्राप्यविद्यायुक्तस्यैव सत उपादानत्वम्। एवंभूतस्य च न वस्तुसत्त्वम्। अतः सदुपादानत्वमसिद्धमिति न वस्तुसत्त्वं प्रपंचस्येति। ननु माभूदनेन हेतुना प्रपंचस्य सत्त्वं हेत्वंतरेण तु साधयामः। तथाहि सदिदमर्थक्रियाकारित्वात्। न यदेवं न तदेवं यथा शुक्तिरजतमिति तत्राह। व्यवहृतये विकल्प इषित इति। व्यवहारायार्थक्रि-

**भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान् ॥ ३६ ॥ न यदिदमग्र आस न भविष्यदतो निधनादनुमितमंतरा त्वयि विभाति मृषैकरसे ॥ अत उपमीयते द्रविणजातिविकल्पपथैर्वितथमनोविलासमृतमित्यवयंत्यबुधाः ॥ ३७ ॥ स यदजया त्वजामनुशयीत गुणाँश्च जुषन्भजति सरूपतां तदनु**

यार्थं विकल्पो भ्रम इषित इष्ट एव। कूटकार्षापणादिनाऽपि क्वचिद्व्यवहारदर्शनात्। नन्वेकत्र सतोऽन्यत्रारोपो भ्रमः प्रसिद्धोऽत्यंतासत्त्वे कथं प्रपंचो भ्रमः स्यात्। सत्त्वे वा नाद्वैतसिद्धिः। उक्तं च भट्टैः। अध्यस्यते खपुष्पत्वमसत्कथमवस्तुनि ॥ प्रज्ञातगुणसत्ताकमध्यारोप्येत वा न वेति नेत्याह। अंधपरंपरयेति। अंधपरंपरया यो विकल्प इत्यन्यः। अयं भावः। संस्कारजन्यो भ्रमः संस्कारसिद्धये पूर्वप्रतीतिमात्रमपेक्षते न वस्तुसत्त्वम्। प्रतीतौ सत्यां वस्तुसत्त्वाभावेन भ्रमव्यतिरेकादर्शनात्। अतोऽनादित्वात्पूर्वपूर्वभ्रमदृष्टस्योत्तरोत्तर आरोपो भविष्यति। अंधपरंपरान्यायेन व्यवहारः सेत्स्यतीत्यप्रयोजको हेतुरिति। ननु अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति ॥ अपामसोमममृता अभूमेत्यादिभिः कर्मफलस्य नित्यत्वप्रतिपादनादसत्त्वं न घटते। नहि नित्यं वस्त्वसद्भवति। तस्माद्वेदप्रतिपादितत्वाद्द्वैतं सदेवेत्याशंक्याह। भ्रमयतीति। हे भगवंस्ते भारती वेदलक्षणा उरुवृत्तिभिर्बह्वीभिर्गौणलक्षणादिवृत्तिभिरुक्थजडान्कर्मश्रद्धाभराक्रांतमंदमतीन् भ्रमयति मोहयति। अयं भावः। नहि वेदः कर्मफलं नित्यमभिप्रैति किंतु लक्षणया प्राशस्त्यमात्रं विध्येकवाक्यत्वात्। अन्यथा वाक्यभेदप्रसंगात्। तद्यथेह कर्मचितो लोकः क्षीयते ॥ एवमेवामुत्र पुण्यचितो लोकः क्षीयत इति न्यायोपबृंहितश्रुत्यंतरविरोधाच्च। अतः कर्मजडानामिदं भ्रममात्रमिति। एतेनैव तस्माद्वा एतस्मादात्मन आकाशः संभूतः इत्यादीनामप्यन्यपरत्वं दर्शितं भवति। उद्भूतं भवतः सतोऽपि भुवनं सन्नैव सर्पः स्रजः कुर्वन्कार्यमपीह कूटकनकं वेदोऽपि नैवं परः ॥ अद्वैतं तव सत्परं तु परमानन्दं पदं तन्मुदा वंदे सुंदरमिंदिरानुत हरे मा मुंच मामानतम् ॥२३॥३६॥ तदेवं प्रपंचस्य सत्त्वे साधकं नास्तीत्युक्तं इदानीमसत्त्वे सृष्टिप्रलयश्रुतयः। यतो वा इमानि भूतानि जायंते इत्याद्यास्तन्मूलं चानुमानं प्रमाणामित्याह। न यदिदमिति। यद्यस्मादिदं विश्वमग्ने

सृष्टेः पूर्वं न आस नासीत् । सदेव सोम्येदमग्र आसीत् ॥ आत्मा वा इदमेक एवाग्र आसीदित्यादिश्रुतेः । न च निधनात्प्रलयादनु अनंतरं भविष्यद्भविष्यति । नासदासीन्नो सदासीत्तदानामित्यादिश्रुतेः । अतः कारणदंतरा मध्येऽप्येकरसे केवले त्वयि मृषा मिथ्यारूपमेव विभातीति मितं निश्चितम् । यत एवमतः श्रुत्वा द्रविणजातिविकल्पपथैर्द्रविणजातीनां द्रव्यमात्राणां मृल्लोहकार्ष्णायसरूपाणां विकल्पा भेदा घटकुंडलादयस्तेषां पं थानो मार्गाः प्रकारास्तैरुपमीयते सदृशतया निरूप्यते । यथा तत्र कार्याकाराणां नामधेयमात्रताकारणं मृदाद्येव तु सत्यं तथाऽत्राप्याकाशादीनां नाममात्रता ब्रह्मैव सत्यम् । तथा च श्रुतिः । यथा सौम्यैकेन मृत्पिंडेन सर्वं मृन्मयं विज्ञातं भवति ॥ वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ यथा एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् ॥ यथा एकेन नखनिकृंतनेन सर्वं कार्ष्णायसमित्यादि । तस्मादस्य सत्त्वे प्रमाणाभावादसत्त्वे प्रमाणस्य विद्यमानत्वाद्वितथमनोविलासमृतं सत्यमिति ये अवयंति जानंति तेऽबुधाः अज्ञा इत्यर्थः । अत्रैवं प्रयोगः । विवादाध्यासितं न सत् । आद्यंतयोरविद्यमानत्वाद्विकारित्वाद्दृश्यत्वाच्च शुक्तिरजतादिवत् । इत्यन्वये दृष्टांतः । आत्मवच्चेति व्यतिरेके दृष्टांतः ॥ मुकुटकुंडलकंकणकिंकिणीपरिणतं कनकं परमार्थतः ॥ महदहंकृतिखप्रमुखं तथा नरहरे न परं परमार्थतः ॥ २४॥ ३७ ॥ ननु यदि प्रपञ्चो नाम नास्त्येव तदाऽसता तेन न चैतन्यस्य संबंधगंधोऽपि तर्हि किमपराद्धं जीवेन यतोऽयं संसरति । किंवा बहुपुण्यमीश्वरस्य यतो नित्यमुक्तः किं विषयं च तदा कर्मकांडमित्यपेक्षायां जीवेश्वरविशेषम् । द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ॥ तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ अजामेकां लोहितशुक्लकृष्णामित्याद्या वदंतीत्याह । स यदजयेति । स तु जीवो यद्यस्मादजया मायया अजामविद्यामनुशयीतालिंगेत्ततो गुणांश्च देहेंद्रियादीन् जुषन्सेवमान आत्मतयाऽध्यस्यंस्तदनु तदनंतरं सरूपतां तद्धर्मयोगं चजुषन्नपेतभगः पिहितानंदादिगुणः सन् मृत्युं संसारं भजति प्राप्नोति । तद्विषयमेव च कर्मकांडमिति

**मृत्युमपेतभगः ॥ त्वमुत जहासि तामहिरिव त्वचमात्तभगो महसि महीयसेऽष्टगृणितेऽपरिमेयभगः ॥३८॥ यदि न समुद्धरंति यतयो हृदि कामजटा दुरधिगमोऽसतां हृदिगतोऽस्मृतकंठमणिः ॥ असुतृपयोगिनामुभयतोऽप्यसुखं भगवन्ननपगतांतकादनधिरूढपदाद्भवतः ॥३९॥ त्वदवगमी न वेत्ति**

भावः । त्वमुत त्वं तु जहासि तामजां मायाम् । ननु सा मय्येवास्ति कथं त्यागस्तत्राह । अहिरिव त्वचमिति । अयं भावः । यथा भुजङ्गः स्वगतमपि कंचुकं गुणबुद्ध्या नाभिमन्यते तथा त्वमजाम् । नहि निरंतराह्लादिसंवित्कामधेनुवृंदपतेरजया कृत्यमिति तामुपेक्षस इति । कुत एतत्तदाह । आत्तभगो नित्यप्राप्तैश्वर्यः महसि परमैश्वर्येऽष्टगुणितेऽणिमाद्यष्टविभूतिमतिमहीयसे पूज्यसे विराजसे । कथंभूतः । अपरिमेयभगोऽपरिमितैश्वर्यः न ह्यन्येषामिव देशकालादिपरिच्छिन्नं तवाष्टगुणितमैश्वर्यमपि तु परिपूर्णस्वरूपानुबंधित्वादपरिमितमित्यर्थः । नृत्यन्ती तव वीक्षणांगणगता कालस्वभावादिभिर्भावात्सत्त्वरजस्तमोगुणमयानुन्मीलयंती बहून् ॥ मामाक्रम्य पदा शिरस्यतिभरं संमर्दयंत्यातुरं माया ते शरणं गतोऽस्मि नृहरे त्वामेव तां वारय ॥२५॥३८॥ एवं तावदुक्तसाधन कदम्बेन ये भवन्तं भजंति ते मृत्युं तरन्ति । इतरे संसरन्तीत्युक्तम् । इदानीं ये बहिः संगं परित्यज्य भगवन्मार्गे प्रवृत्ता अपि कथंचिदन्ताशिनः कामान्न मुञ्चन्ति ते न भगवन्तं प्राप्नुवन्ति । न चेह सुखं लभन्ते । केवलं कुयोनीरेव प्राप्नुवन्ति तान् शोचन्कामान्यः कामयते मन्यमानः स कर्मभिर्जायते तत्र तत्रेत्यादिश्रुत्यर्थमाह । यदि न समुद्धरन्तीति । हे भगवन् ! ये यतयो हृदि स्थिताः कामजटाः कामस्य मूलानि वासना यदि न समुद्धरन्ति नोत्पाटयन्ति । तेषामसतां भवान् हृदिगतोऽपि दुरधिगमो दुष्प्रापः । कथम् । अस्मृतकंठमणिर्विस्मृतो यः कंठमणिस्तत्तुल्यः । यथा कंठे वर्तमानोऽप्यस्मृतश्चेदप्राप्त इव भवति तद्वदिति । न केवलमेतात्किंत्वसुतृपयोगिनामिंद्रियतर्पणपराणां योगभ्रष्टानामुभयतोऽप्यसुखमिहामुत्र च दुःखमेव । तदाह । अनपगतांतकादनिवृत्तान्मृत्योः । लोकाराधनार्जनादिक्लेशाद्भोगवैभवप्राकट्यभयाच्चेह तावद्दुःखम् । भवत ईश्वरादपि दुःखम् । कथंभूतात् । अनधिरूढपदात् अनधिरूढपदं स्वरूपं यस्य तस्मात् । त्वत्स्वरूपप्राप्त्यभावादविद्यावद्विषयत्वेन प्राप्तनिजधर्मातिक्रमनिबन्धनत्वाद्दंडरूपनरकप्राप्तेरमुत्राप्यसुखमित्यर्थः ॥ दम्भन्यासमिषेण वञ्चितजनं भोगैक-

